| जिस्कन न० | | | 12-1-31. फतिह कदल | |
|---|---|---|---|---|
| 23 | G/1 | 078738 | सहस्र | तारचंद |
| 23 | G/1 | 071936 | अर्धसहस्र | " |
| 20 | " | 071933 | अर्धसहस्र | जैकेश्वरी |
| 21 | " | 071934 | " | कमलाज |
| 22 | " | 071935 | " | अरुन्धती |
| ~~451~~ | ~~G/1~~ | ~~126744~~ | ~~चंदोजी~~ " | ~~चंदोजी~~ |

पुत्रिकां तारांचन्द "

5-11-1931 अमीराकदल

| | | | | |
|---|---|---|---|---|
| 450 | G/1 | 126744 | अर्धसहस्र | चंदोजी |
| | G/1 | 130302 | पंचविंशत् | " |

जन्मदिन 3-2-1930

रजिस्टर
नं.०

12-1-31. फतिह कदल

| | | | | |
|---|---|---|---|---|
| 23 | Q/1 | 078738 | सहस्र | ताराचंद |
| 23 | G/1 | 071936 | अर्धसहस्र | " |
| 20 | " | 071933 | अर्धसहस्र | जैकेश्वरी |
| 21 | " | 071934 | " | कमलाज |
| 22 | " | 071935 | " | अरुन्धती |
| ~~451~~ | ~~G/1~~ | ~~126744~~ | ~~[illegible]~~ " | ~~वांदोजी~~ |

पुत्रिकां ताराचंद "

5-11-1931 अमीरा कदल

| | | | | |
|---|---|---|---|---|
| 450 | G/1 | 126744 | अर्धसहस्र | वांदोजी |
| | Q/1 | 130302 | पंचविंशत् | " |

जन्मदिन 3-2-1930

ॐ स्वस्ति ॥ श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरवेनमः ॥ स्वाविद्याकल्पितद्वैतंनरसिंहाभिधंमहः ॥ वेदांतवेद्यंवंदेऽहं परमानंदविग्रहम् ॥ १ ॥ सर्वमुत्तमसुखप्रसादतोजीवजातमनितिश्रुतिर्जगौ ॥ तस्यवेदगदितस्यवर्ण्यतेकिंमहत्त्वमखिलात्मनोगुरोः ॥ २ ॥ नतभवपरिपंथिज्ञानदानैकलीलंमुनिवरनिकुरंबैःपूज्यमानांघ्रिपद्मम् ॥ विधुतसकलदोषंसत्यविज्ञप्तिमूर्तिंश्रुतिशतनुतमारादाश्रये विश्वनाथम् ॥ ३ ॥ योदेहलीमधिवसञ्छिवराजधान्यांबाह्यांतरैर्विरचितापचितीच्छयेव ॥ दृष्ट्यैववारयतिविघ्नशतानिसोऽव्यादस्मान्समस्त सुरवंदितपादपद्मः ॥ ४ ॥ यस्यामहामहिमसागरसंविगाहःसद्यःपुनातिसकलंजनमाश्वपाकात् ॥ साशारदात्रिपथगेवसमस्तदेवैःसे व्यासमग्रवरमाशुददातुमह्यम् ॥ ५ ॥ वाल्मीकिमुनिवाग्गंगासहस्रमुखवाहिनी ॥ ब्रह्मसागरसंयातामद्वचांसिपुनात्वलम् ॥ ६ ॥ वसिष्ठ रामपादाब्जवरिवस्याविधौमम ॥ वचांसिपुष्पतांयांतुचित्तवृत्तानिदीपताम् ॥ ७ ॥ श्रीमद्गुरुगणेशानवाचःसंकल्पितार्थदाः ॥ प्रणम्यसा दरंमूर्ध्नाकुर्वेवासिष्ठचंद्रिकाम् ॥ ८ ॥ वासिष्ठाब्धिंतितीर्षामिहनूमानिवलीलया ॥ रामपादाब्जभक्त्याहंक्षंतुमर्हंतिसूरयः ॥ ९ ॥ अथसत्य ज्ञानानंदाद्वितीयःपरमात्माभगवान्नारायणःकल्पादौक्षेत्राणितमःप्रधानानिजीवांश्चचित्प्रधानान्भावनाज्ञानकर्मानुसारेणससर्ज। तथाचो क्तमाचार्यैः। तमःप्रधानःक्षेत्राणांचित्प्रधानश्चिदात्मनाम् ॥ परःकारणतामेतिभावनाज्ञानकर्मभिरिति ॥ अथस्वसृष्टानांप्राणिनामभ्युदयनिः श्रेयसार्थमुपायोपेयतयास्थितंकर्मज्ञानलक्षणंवेदार्थंमरीच्यादिभ्यःसनकादिभ्यश्चोपदिदेश तैश्चोपदिष्टंप्राणिभिरनुष्ठीयमानंतंवेदार्थंरावणा दिदस्युभिर्विघ्नितानुष्ठानमालक्ष्यतत्परिपालनेच्छयावशीकृतमायःसत्यसंकल्पोभगवान्संकल्पसमासादितात्मभावः कौशल्यायांदशरथादव ततार। अवतीर्यचवसिष्ठशिष्यताविडंबनांधारयन्नानाख्यानावलिमंडितेनतत्संवादेनज्ञानामृतरसमाविश्चकार। कर्मचप्रवर्तयामासरक्षोगण वधेन तदुभयरक्षणंचचक्रे। तत्ररामस्यशिष्यता ब्रह्मणएवब्रह्मविद्याधिकारित्वंदर्शयितुम्। तथाचश्रुतिः। ब्रह्मवाइदमग्रआसीत्तदात्मानमे वावेदहंब्रह्मास्मीति। तस्मात्तत्सर्वमभवदिति। तथाचवार्तिकम्। स्वाभासफलकारूढंतदेवारूपकंपरम्। ब्रह्मविद्याधिकारित्वंद्वैविध्यात्प्र

तिपद्यतइति । तंचवसिष्ठरामसंवादंदिव्यज्ञानसंपन्नोभगवान्वाल्मीकिर्द्वात्रिंशच्छ्लोकसहस्रैर्निर्बबंध । तमिमंवासिष्ठसमुद्रं वैराग्यमुमुक्षु व्यवहारजगदुत्पत्तिस्थित्युपशमनिर्वाणप्रतिपादकषट्प्रकरणकल्लोलमनेकाख्यानवरतरंगं विवेकवैराग्योपरतिविज्ञानादिरत्ननिलयंमंद मतिदुस्तरमालक्ष्य परमकारुणिकः काश्मीरपंडितोऽभिनंदनामा श्लोकानांषट्सहस्रीं तस्माद्दुज्जहार । तदिदंवासिष्ठंमंदोपकृत ये यथामतिव्याख्यास्यामः । प्रारीप्सितग्रंथस्याविघ्नेनपरिसमाप्तये प्रचयगमनायचेष्टदेवतानमस्कारलक्षणंमंगलाचरणं मुखतःकुर्वन्न र्थाच्छास्त्रप्रतिपाद्यमर्थं दर्शयति भगवानाचार्यः ॥ दिवीति ॥ यच्छब्दस्यप्रसिद्धार्थाभिधायकत्वादात्मनःप्रसिद्धत्वादात्माविशेष्यतया संबध्यते ॥ यआत्मेति ॥ यआत्मामेविभातितस्मैनमइतिसंबंधः । तस्यस्वरूपंदर्शयति ॥ अवभासेति ॥ अवभासोज्ञप्तिरात्मास्वरूपंयस्य सतथातस्य । देशतःपरिच्छेदंव्यावर्तयति ॥ विभुरिति ॥ सकलदेशव्यापीत्यर्थः । विभुत्वंसाधयति ॥ दिवीत्यादिना ॥ दिविस्वर्गेआ

ॐ श्रीरामायनमः ॥ दिविभूमौतथाकाशेबहिरंतश्चमेवि
भुः ॥ योविभात्यवभासात्मातस्मैसर्वात्मनेनमः ॥ १ ॥

काशेअंतरिक्षेसंक्षेपविस्ताराभ्यांप्रतिपादितोऽर्थःश्रोतृबुद्धिमनायासमारोहयतीतिमन्वानो विस्तरेणप्रतिपादितमर्थंसंक्षिप्याह ॥ बहिरं तश्चेति ॥ अथवालोकत्रयेंऽतर्बहिश्चयोविभातितस्मै । अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थित इतिश्रुतेः । बहिरंतश्चभूतानामचरंचरमेव चेति स्मृतेश्च । एवंविधआत्मस्वरूपेविद्वदनुभवःप्रमाणमितिसूचयतिभगवान्वाल्मीकिः ॥ मेविभातीति ॥ नन्वात्मनोव्यतिरिक्तव स्तुसद्भावाद्वस्तुतःपरिच्छेदःस्यादितिचेन्नेत्याह ॥ सर्वात्मनइति ॥ सर्वस्यद्वैतप्रपंचस्यकल्पितस्यशुक्तिकेवरजतस्यात्मापरमार्थस्वरूपंतस्मै । वस्तुपरिच्छेदनिराकरणेनात्मनःकालपरिच्छेदोऽपिनिराकृतोवेदितव्यः । कालस्यापिवस्तुतःस्वस्मिन्कल्पितस्यसत्तास्फूर्तिप्रदत्वेनआत्मन स्तत्परिच्छेदासंभवात् । अथवादिविद्योतमानेलिंगशरीरे भुविभूमिकार्येस्थूलशरीरे आकाशेअव्याकृताख्येकारणशरीरे तत्साक्षित

यायोविभातितस्मैनमः । शिष्टंपूर्ववत् । अथयोऽन्यांदेवतामुपास्तेऽन्योऽसावन्योऽहमस्मीतिनसवेदयथापशुरेवसदेवानामिति श्रुत्या त्मव्यतिरिक्तदेवतादर्शनस्यनिंदितत्वात् आत्मैवदेवताःसर्वाइति मनुस्मृतेश्च आत्मैवेष्टदेवतात्वेननमस्कृत इत्यवगंतव्यम् । अथवाप रमात्माविशेष्यतयासंबध्यते यःपरमात्मेति । तस्यापीश्वरत्वेनप्रसिद्धत्वात्तस्यजीवेभ्योभेदंवारयति ॥ सर्वात्मनइति ॥ सर्वेषांजीवाना मात्मनेपरमार्थस्वरूपायनमः । शिष्टंसमानम् । अथवाभूमावाकाशइत्याद्यंतयोर्ग्रहणान्मध्यवर्तिभूतत्रयमपि संदंशन्यायेनगृहीतंभवति । कारणभूतग्रहणेनकार्यंच । तथाचायमर्थः । आकाशादिरूपभूतभौतिकेष्वंतःक्षेत्रज्ञात्मनाबहिश्चसंसारात् दिविस्वेमहिम्नि योविभातित स्मैनमइति । पादोऽस्यविश्वाभूतानित्रिपादस्यामृतंदिवीतिश्रुतेः । तदेवंत्रिविधपरिच्छेदरहितं नित्याद्वितीयपरिपूर्णं चिदात्मकंवस्तु शास्त्रप्रतिपाद्यमितिदर्शितंभवति ॥ १ ॥ शास्त्रादौश्रोतृप्रवृत्त्यंगतयाविषयंदर्शयित्वाधिकारिणंदर्शयन् प्रयोजनसंबंधौचसूचयति ॥

अहंबद्धोविमुक्तःस्यामितियस्यास्तिनिश्चयः ॥ नात्यंतमज्ञोनोतज्ज्ञःसोऽस्मिन्शास्त्रेऽधिकारवा न् ॥२॥ गुरुमासीनमेकांतेवाल्मीकिंसर्वदर्शिनम् ॥ पप्रच्छप्रणतोभूत्वाभरद्वाजोमृदुस्वरम् ॥ ३ ॥

अहंबद्धइति ॥ बद्धोऽहंविमुक्तःस्यामितियस्यनिश्चयोऽस्ति सोऽस्मिन्शास्त्रेशास्त्रश्रवणाधिकारवानितियोजना । तस्यश्रवणादिकप्र योजकमापातज्ञानंदर्शयति ॥ नात्यंतमिति ॥ नोइतिपदच्छेदः । तदितिब्रह्मोच्यते । ॐतत्सदितिनिर्देशोब्रह्मणस्त्रिविधःस्मृत इतिस्मृ तेः । तज्जानातीतितज्ज्ञोब्रह्मवित् । न उत ज्ञ इतिवापदच्छेदः । उतशब्दोऽप्यर्थे । उताप्यर्थविकल्पयोरित्यमरः । ज्ञउतज्ञोऽपिनेत्यर्थः । ब्रह्मणिसम्यग्ज्ञातेऽत्यंतमज्ञातेच श्रवणादौप्रवृत्त्यसंभवादापाततोजानन्नधिकारीत्यर्थः । विमुक्तःस्यामित्यनेनबंधनिवृत्तिरेतच्छास्त्र श्रवणप्रयोजनमितिसूचितम् । नात्यंतमज्ञइत्यादिनाचशास्त्रब्रह्मणोःप्रतिपाद्यप्रतिपादकभावलक्षणःसंबंधइत्यावेदितंभवति ॥ २ ॥ एवंतावत्प्रथमश्लोकेन मंगलाचरणंविषयसूचनंचविधाय द्वितीयेनाधिकारिप्रयोजनसंबंधाबावेद्य शास्त्रमारभमाणोऽस्यप्रथमंसंवादकथा

रूपतांद्योतयितुं गुरुशिष्यक्रमंप्रस्तौति ॥ गुरुमिति ॥ ब्रह्मानंदास्वादनार्थमेकांतआसीनंसमदर्शनशीलंवाल्मीकिंगुरुं भरद्वाजःशिष्यः प्रणतोभूत्वा मृदुस्वरंमृदुशब्दंयथाभवतितथापप्रच्छेतिसंबंधः ॥३॥ भगवन्निति ॥ संकटंसंबाधः। संकटंनातुसंबाधइत्यमरः। व्यवहृतः व्यवहृत- वान्। अत्रसाध्याहारंयोजना। रामोजीवन्मुक्तपदंलब्ध्वाकथंसंसारसंकटेव्यवहृतइति। नन्विममेवार्थंभरद्वाजःपृष्टवानिति कुतोऽवगम्य ते। उच्यते। बृहद्वासिष्ठे। कथंसंसारसंकटेरामो व्यवहृतवानिति पूर्वप्रश्नस्योत्तरत्र। जीवन्मुक्तस्थितिंब्रह्मन्कृत्वाराघवमादित। क्र- मात्कथयमेनित्यंभविष्यामिसुखीयथेतिविवरणात्। जीवन्मुक्तपदंप्राप्तोयथारामोमहामनाः। तत्तेऽहंशृणुवक्ष्यामीत्युत्तरप्रारंभाच्च। किंच। रामानुयायिनस्तेवामंत्रिपुत्रामहाधियः। निर्दुःखतांयथैवैतेप्राप्तास्तद्ब्रूहिमेस्फुटमिति रामभरतादिविषयप्रश्नानंतरं मंत्रिपुत्रनिर्दुःखिता

भगवन्ज्ञातुमिच्छामिकथंसंसारसंकटे॥ रामोऽव्यवहृतोह्यस्मिन्कारुण्याद्ब्रूहिमेगुरो ॥ ४ ॥ वा ल्मीकिरुवाच॥ साधुवत्सभरद्वाजयोग्योऽसिकथयामिते॥ श्रुतेनयेनसंमोहमलंदूरेकरिष्यसि॥५॥ भ्रमस्यजागतस्यास्यजातस्याकाशवर्णवत् ॥ अपुनःस्मरणंसाधोमन्येविस्मरणंवरम् ॥ ६ ॥

लक्षणजीवन्मुक्तिप्राप्तिप्रकारप्रश्नाच्चावगम्यते अयमेवार्थःपृष्टोभरद्वाजेनेति ॥ ४ ॥ साधुवत्सेति ॥ त्वयायत्पृष्टंतत्साध्वित्यध्याहृत्ययोज नीयम्। योग्योसिश्रवणाय तेतुभ्यम्। येनरामजीवन्मुक्तिलाभोपायेन संमोहमज्ञानमलमत्यर्थंदूरेकरिष्यसीति। विनष्टाज्ञानोभविष्य सीत्यर्थः। अथवा। संमोहमेवमलंहेयत्वात्। अतएवतस्यदूरेप्रक्षेपणमुचितम्॥ ५ ॥ संसारसंकटेरामःकथंव्यवहृतवानितिप्रश्नस्य जीव न्मुक्तपदंप्राप्तोयथारामोमहामनाइत्यादिनोत्तरं वक्ष्यन्नादौवक्ष्यमाणजीवन्मुक्तिसाधनभूतात्मापरोक्षज्ञानस्योपायं चित्तस्यचिन्मात्रावशे षतालक्षणंध्यानमसंप्रज्ञातसमाधितयाप्रसिद्धं रामवृत्तांतकथनद्वारा विस्तरेणप्रतिपिपादयिषितंसोपायंबुद्धिसौकर्यार्थंसंक्षिप्याह ॥ भ्रमस्येति ॥ अथवाजीवन्मुक्तपदंप्राप्तइत्यादिनाप्रश्नस्योत्तरंवक्ष्यन्नादौमुक्तिंतदुपायलक्षणंशास्त्रार्थंबुद्धिसौकर्यार्थंसंक्षिप्याह ॥ भ्रमस्येत्यादि

ना ॥ आकाशवर्णवदाकाशश्यामत्ववज्जागतस्यजगत्संबंधिनोभ्रमस्य विस्मरणंवरंश्रेष्ठमुपायंमन्यइतिसंबंधः। पुनःसत्यत्वेनस्मरणंजगद्भ्रम विषयंनविद्यतेयस्मिन्विस्मरणेतदपुनःस्मरणम् ॥ अथवाज्ञानेनमूलाविद्याविच्छेदेसति भ्रमस्याभावमेवविस्मरणशब्देनविवक्षितं अतएवा पुनःस्मरणमित्युक्तम् ॥ ६ ॥ दृश्यमिति ॥ दृश्यंनास्तिकल्पितमधिष्ठानद्रष्टृव्यतिरेकेणेत्यागमादिजनितबोधेन मनसःसंकल्पात्मकादंतः करणाद्दृश्यमार्जनंसंपन्नंजातंचेत्तर्हि निर्वाणनिर्वृतिर्मोक्षसुखमुत्पन्नाभिव्यक्ताभवति । तस्याविषयसुखवत्सातिशयत्वंवारयति ॥ परेति ॥ दृश्यमिथ्यात्वनिश्चयदार्ढ्येसतितद्वासनानिवृत्तेस्तत्ररागानुदयात्ततोविमुखंचित्तं ब्रह्मानंदमवगाहते। ततोविगतप्रतिबंधादपरोक्षज्ञानान्नि र्वाणंभवतीतिभावः ॥ ७ ॥ विद्याबलेनचित्तस्यविषयवैमुख्यमसंपादयतांदोषमाह ॥ अन्यथेति ॥ उक्तविधयांतर्मुखतामसंपाद्य बहिर्मुख

दृश्यंनास्तीतिबोधेनमनसोदृश्यमार्जनम् ॥ संपन्नंचेत्तदुत्पन्नापरानिर्वाणनिर्वृतिः ॥ ७ ॥
अन्यथाशास्त्रगर्तेषुलुंठतांभवतामिह ॥ भवत्यकृत्रिमाज्ञानांकल्पैरपिननिर्वृतिः ॥ ८ ॥
अशेषेणपरित्यागोवासनानांयउत्तमः ॥ मोक्षइत्युच्यतेसद्भिःसएवविमलक्रमः ॥ ९ ॥

तयाशास्त्रगर्तेषुशास्त्राण्येवगर्ताअवटास्तेषुलुंठतांगात्रचेष्टनंकुर्वतामकृत्रिमस्याज्ञाअकृत्रिमाज्ञास्तेषामब्रह्मविदांभवतांभरद्वाजादीनां कल्पैर प्यतिमहताकालेनापि निर्वृतिर्मोक्षसुखंनभवति । अथवा अकृत्रिमा अज्ञानामितिपदद्वयम् । अज्ञानामकृत्रिमानिर्वृतिर्नभवतीतिसंबंधः। यथागर्तेलुंठतांलुंठनं कर्दमलेपगात्रभंगादिजनितदुःखायभवति तथाबहिर्मुखानांशास्त्रश्रवणंदुःखायैवनसुखायेतिभावः ॥ ८ ॥ बोधेनदृश्य मार्जनंदृश्यवासनानिवृत्तिद्वारैवभवतियतोऽतोवासनात्यागोदृश्यमार्जनादिद्वारामोक्षस्योत्तमोपायत्वादनुष्ठेयइत्याह ॥ अशेषेणेति ॥ वासनात्यागस्यकथंमोक्षत्वमित्याशंक्योपचारादित्यभिप्रेत्याह ॥ सएवेति ॥ वासनात्यागएवविमलक्रमोनिर्मलोपायोमोक्षस्येत्यर्थः ॥ ९ ॥

वासनात्यागोमोक्षोपायइतिसामान्योक्तेरविशेषेणसर्ववासनात्यागेप्राप्ते शुद्धवासनानत्याज्येतिदर्शयितुं वासनाद्वैविध्यमाह ॥ वासनेति ॥ तयोर्विरुद्धकार्यकारित्वंदर्शयति हेयोपादेयत्वज्ञापनार्थम् ॥ मलिनेति ॥ १० ॥ तत्रमलिनवासनायालक्षणमाह ॥ अज्ञानेति ॥ अज्ञानेनसुघनःसुनिबिडःसुदृढोवाआकारोयस्याःसातथोक्ता अज्ञानेहिसतिवासनायानिबिडत्वंनान्यदा। घनेननिबिडेनदृढेनवाऽहंकारेणशालतेशोभतइतिघनाहंकारशालिनी ॥ ११ ॥ शुद्धवासनालक्षणमाह ॥ पुनर्जन्मेति ॥ संभ्रष्टबीजवत्सम्यग्भर्जितबीजवत्पुनःप्ररोहायोग्यास्थितादेहार्थंध्रियतेवर्तमानदेहस्थित्यर्थंध्रियते ज्ञातज्ञेयाज्ञातंज्ञेयंब्रह्मयस्यांनिमित्तभूतायांसातथोक्ता ॥ १२ ॥ उक्तमेवार्थंप्रपंचयति ॥ येशु

वासनाद्विविधाप्रोक्ताशुद्धाचमलिनातथा ॥ मलिनाजन्मनोहेतुःशुद्धाजन्मविनाशिनी ॥१०॥
अज्ञानसुघनाकाराघनाहंकारशालिनी ॥ पुनर्जन्मकरीप्रोक्तामलिनावासनाबुधैः ॥ ११ ॥
पुनर्जन्मांकुरांस्त्यक्त्वास्थितासंभ्रष्टबीजवत् ॥ देहार्थंध्रियतेज्ञातज्ञेयाशुद्धेतिचोच्यते ॥ १२ ॥
येशुद्धवासनाभूयोनजन्मानर्थभाजनम् ॥ ज्ञातज्ञेयास्तउच्यंतेजीवन्मुक्तामहाधियः ॥ १३ ॥
जीवन्मुक्तपदंप्राप्तोयथारामोमहामनाः ॥ तत्तेहंशृणुवक्ष्यामिजरामरणशांतये ॥ १४ ॥

द्धेति ॥ जन्मैवानर्थस्तस्यभाजनंपात्रंजन्मानर्थभाजनंयेपुरुषाःशुद्धवासनाभवंतिज्ञातज्ञेयामहाधियस्तेभूयोजन्मानर्थभाजनंनभवंति तेचजीवन्मुक्ताउच्यंतइतियोजना। यस्माच्छुद्धाशुद्धवासनेएवंलक्षणे तस्मान्मुमुक्षुणाशुद्धवासनानत्याज्याकिंतुमलिनवासनैव शुद्धातुप्रयत्नतःसंपाद्येतिसमुदायार्थः ॥१३॥ एवंतावज्जीवन्मुक्तिसाधनविज्ञानोपायभूतंसमाधिंसोपायांमुक्तिंतदुपायलक्षणंशास्त्रार्थंवासंक्षेपेणाभिधायेदानींकेनक्रमेणजीवन्मुक्तपदंलब्ध्वासंसारसंकटे[illegible]श्रयोनंप्रति[illegible]पूर्वकमाहोत्तरग्रंथसंदर्भेण ॥ जीवन्मुक्तेत्यादिना ॥ जीव

न्मुक्तानांपदंस्थानंस्वाराज्यंनिर्वाणपरमानंदलक्षणंयथायेनप्रकारेणयेनक्रमेणेत्यर्थः ॥१४॥ विद्यागृहाद्विद्यालाभस्थानादाचार्यगृहात् । राजीवंकमलम् ॥ १५ ॥ तीर्थानिपुण्याश्रमाश्चतीर्थपुण्याश्रमास्तेषांश्रेणीःपंक्तीः । उत्कंठोत्कलिकासास्यजातेतिउत्कंठितं संजातानुरागमित्यर्थः ॥१६॥ नवावभिनवौनखाएवकेसराःकिंजल्काययोश्चरणयोस्तौतथोक्तौ ॥१७॥ देवसद्मानिदेवालयाः आयतनानिचैत्यानि । चैत्यमायत

विद्यागृहाद्विनिष्क्रम्यरामोराजीवलोचनः ॥ दिवसाननयद्गेहेलीलाभिरकुतोभयः ॥ १५ ॥ अथगच्छतिकालेतुरामस्यगुणशालिनः ॥ तीर्थपुण्याश्रमश्रेणीर्द्रष्टुमुत्कंठितंमनः ॥ १६ ॥ राघवश्चिंतयित्वैवमुपेत्यचरणौपितुः ॥ हंसःपद्माविवनवौजग्राहनखकेसरौ ॥ १७ ॥ रामउवाच ॥ तीर्थानिदेवसद्मानिवनान्यायतनानिच ॥ द्रष्टुमुत्कंठितंनाथममेदंतातमानसम् ॥ १८ ॥ तदेतामर्थितांपूर्वांसफलांकर्तुमर्हसि ॥ नसोऽस्तिभुवनेनाथत्वयायोऽर्थीनमानितः ॥१९॥ इतिसंप्रार्थितोराजावसिष्ठेनसमंतदा ॥ विचार्यामुंचदेवैनंरामंप्रथममर्थिनम् ॥ २० ॥ शुभेनक्षत्रदिवसेभ्रातृभ्यांसहराघवः ॥ निरगात्स्वगृहात्तस्मात्तीर्थयात्रार्थमुद्यतः ॥ २१ ॥ अथारभ्यस्वकात्तस्मात्क्रमात्कोशलमंडलात् ॥ स्नानदानजपध्यानपूर्वकंसददर्शह ॥ २२ ॥ नदीस्तीर्थानिपुण्यानिवनान्यायतनानिच ॥ जांगलानिवनांतेषुतटान्यब्धिमहीभृताम् ॥ २३ ॥

नंतुल्यमित्यमरः ॥ १८ ॥ तत्तस्मादर्थीयाचकः ॥ १९ ॥ सममित्यव्ययंसहार्थे । साकंसार्धंसमंसहेत्यमरः ॥ अमुंचन्मोचनमकरोत् ॥२०॥ नक्षत्रसहितोदिवसोनक्षत्रदिवसस्तस्मिन्निरगान्निर्गतः ॥ २१ ॥२२॥ जांगलानिवातबहुलदेशान् । जांगलंवातभूयिष्ठमितिवचनात् । अ

थवा जंगलंमरुभूमिगतारण्यंतत्संबंधीनिस्थलानिजांगलानि ॥ २३ ॥ विहृताःक्रीडितादिशोयेनसतथोक्तः ॥ २४ ॥ जयंतइंद्रसुतःवि ष्टपंस्वर्गम् ॥२५॥ उवास उषितवान् ॥२६॥ सभायांसंस्थासंस्थितिर्यस्यससभासंस्थस्तम् ॥ २७ ॥ ज्ञानंगर्भेयासांकथानांताभिः ॥ २८ ॥ महत्याखेटकेच्छयामृगयावांछया ॥ २९ ॥ सदनंगृहम् ॥ ३० ॥ एवंदिनसमराचारइत्येकंपदम् ॥ ३१ ॥ नृपतिसंव्यवहारमनोज्ञयारा

अमरकिन्नरमानवमानितःसमवलोक्यमहीमखिलामिमाम् ॥ उपययौस्वगृहंरघुनंदनोविहृतदिक्शिव लोकमिवेश्वरः ॥२४॥ लाजपुष्पांजलिव्रातैर्विकीर्णःपुरवासिनाम् ॥ प्रविवेशपुरंश्रीमाञ्जयंतोविष्टपंय था ॥ २५ ॥ उवाससुखंगेहेततःप्रभृतिराघवः ॥ वर्णयन्विविधाकारान्देशाचारानितस्ततः ॥ २६ ॥ प्रातरुत्थायरामोऽसौकृत्वासंध्यांयथाविधि ॥ सभासंस्थंददर्शेंद्रसमंस्वपितरंतदा ॥२७॥ कथाभिःसुवि चित्राभिःसवसिष्ठादिभिःसह ॥ स्थित्वादिनचतुर्भागंज्ञानगर्भाभिरावृतः ॥ २८ ॥ जगामपित्रानुज्ञातो महत्यासेनयावृतः ॥ वराहमहिषाकीर्णवनमाखेटकेच्छया ॥ २९ ॥ ततआगत्यसदनंकृत्वास्नानादिकं क्रमात् ॥ समित्रबांधवोभुक्त्वानिनायससुहृन्निशाम् ॥ ३० ॥ एवंदिनसमाचारोभ्रातृभ्यांसहराघवः ॥ आगत्यतीर्थयात्रायाःसमुवासपितुर्गृहे ॥ ३१ ॥ नृपतिसंव्यवहारमनोज्ञयासुजनचेतसिचंद्रिकयान या ॥ परिनिनायदिनानिचचेष्टयास्रुतसुधारसपेशलयानघः ॥ ३२ ॥

जोचितसंव्यवहारेणमनोरमया सुजनचेतसिसज्जनचित्तेचंद्रिकयाज्योत्स्नावदानंदकारिण्या स्रुतसुधारसपेशलयास्रुतःप्रस्रुतः । स्रुप्रस्रवणइ तिधातोः । सुधारसोऽमृतरसस्तद्वत्पेशलयामंजुलया ॥ ३२ ॥

अत्रेयंश्रुत्युक्तानिःश्रेयसोपायपरिपाटी। फलानभिसंधिपूर्वकंस्ववर्णाश्रमकर्मानुष्ठानात्पुण्योत्पत्तिस्ततःपापक्षयः। पुण्येनपापमपनुदतीति श्रुतेः। ततश्चित्तस्यविवेकक्षमता ततःसंसारतत्त्वपरिज्ञानं ततोवैराग्यादि ततोमुमुक्षुत्वं ततोमोक्षसाधनगवेषणं ततःसर्वकर्मसंन्यासः ततोगुरुचरणोपसर्पणं ततःश्रवणाद्यनुष्ठानं ततोब्रह्मात्मसाक्षात्कारः ततोऽज्ञानविनिष्टिः ततःस्वाराज्यएवावस्थानम्। एषसंप्रसादोऽस्माच्छरीरात्समुत्थायपरंज्योतीरूपंसंपद्यस्वेनरूपेणाभिनिष्पद्यतइतिश्रुतेरिति। तामिमामानुपूर्वीं जगद्गुरुरामचरणकमलभजनाभिरतकतिपयपुरुषधौरेयस्थायुकां पुरुषोत्तमेऽपिलोकान्नजिघृक्षयाब्रह्मविद्याधिकारिधुरंदधानेदाशरथौ दिदर्शयिषुस्तस्यनिष्कामकर्मानुष्ठानमतीतग्रंथसंदर्भेणा

अथोनषोडशेवर्षेवर्तमानोरघूद्वहः॥ जगामानुदिनंकार्श्यंशरदीवामलंसरः॥ ३३॥ क्रमादस्य विशालाक्षंपांडुतांमुखमाददे॥ पाकोत्फुल्लदलंशुक्लंसालिमालमिवांबुजम्॥ ३४॥ कपोलतलसंलीनपाणिःपद्मासनस्थितः॥ चिंतापरवशस्तूष्णीमव्यापारोबभूवह॥ ३५॥ कृशांगश्चिंतयायुक्तःखेदीपरमदुर्मनाः॥ नोवाचकस्यचित्किंचिल्लिपिकर्मार्पितोयथा॥ ३६॥ खेदात्परिजनेनासौप्रार्थ्यमानःपुनःपुनः॥ चकाराह्निकमाचारंपरिम्लानमुखांबुजः॥ ३७॥ क्वातेपुत्रघनाचिंतेत्येवंदशरथेनृपे॥ पृच्छतिस्निग्धयावाचाकृत्वोत्संगेपुनःपुनः॥ ३८॥

ख्यायेदानींतत्फलंविवेकवैराग्यलक्षणंदर्शयति॥ अथेति॥ ऊनंन्यूनंषोडशानांपूरकंषोडशंऊनंचतत्षोडशंचतस्मिन्समाप्तप्रायेषोडशेवर्षेइत्यर्थः॥३३॥ विशालाक्षमितिबहुव्रीहिः। पाकेनकालपाकेनउत्फुल्लानिविकसितानिदलानियस्यांबुजस्यतत्तथोक्तम्। सहालिमालयावर्ततइतिसालिमालम्॥ ३४॥ तूष्णींबभूवेतिसंबंधः॥३५॥ परमदुर्मनाःअत्यंतमहृष्टचित्तः। लिपिकर्मणाअर्पितेनसमर्पितेनभित्त्यादौचित्रेणोपमायस्यसतथोक्तः॥ ३६॥ परिजनेनसेवकजनेन॥ ३७॥ घनानिबिडाद्दृढावा उत्संगोंऽकः॥ ३८॥

(37)

॥३९॥ एवंनिष्कामकर्मफलंवैराग्यंसंक्षेपेणप्रतिपाद्यैतदेवप्रश्नोत्तराभ्यांविस्तरेणप्रतिपादयिषुः प्रश्नप्राप्त्यर्थंप्रसंगमाह ॥ एतस्मिन्नित्यादिना ॥श्रुतोविश्रुतःप्रसिद्धः ॥४०॥लक्ष्म्याब्रह्मवर्चसात्मिकया व्रताध्ययनजात्वग्गतादीप्तिर्हिब्रह्मवर्चसं मालितंसंजातमालंमालाकारलक्ष्म्यावृत मित्यर्थः । स्वर्णविष्टरंस्वर्णासनम् ॥ ४१ ॥ ४२ ॥ ४३॥ अशंकितमसंकल्पितमुपनीतमशंकितोपनीतंतेन मत्संकल्पंविनासमीपंप्रापितेनेत्यर्थः। भास्वतादीप्तिमता दीप्तिमद्विषयत्वात् । विस्पष्टेनेतिवा । स्वावशंकितोपनीतत्वंभास्वत्त्वंचप्रसिद्धमेव ॥ ४४ ॥ अनुगृहीतत्वंदर्शय

नकिंचित्तातमेदुःखमित्युक्त्वापितुरंकगः ॥ रामोराजीवपत्राक्षस्तूष्णीमेवस्मतिष्ठति ॥३९॥
एतस्मिन्नेवकालेतुविश्वामित्रइतिश्रुतः ॥ महर्षिरभ्यगाद्द्रष्टुंतमयोध्यानराधिपम् ॥ ४० ॥
तंदृष्ट्वामालितंलक्ष्म्यानिवेद्यस्वर्णविष्टरम् ॥ प्रहृष्टवदनोराजास्वयमर्घ्यंन्यवेदयत् ॥ ४१ ॥
उपविष्टायतस्मैसविश्वामित्रायधीमते ॥ पाद्यमर्घ्यंचगांचैवभूयोभूयोन्यवेदयत् ॥ ४२ ॥
अर्चयित्वातुविधिवद्विश्वामित्रमभाषत ॥ प्रांजलिःप्रयतोवाक्यमिदंप्रीतमनान्नृपः ॥४३॥
अशंकितोपनीतेनभास्वतादर्शनेनते ॥ साधोस्वनुग्रहीताःस्मोरविणेवांबुजाकराः ॥ ४४ ॥
यदनादियदक्षुण्णंयदपायविवर्जितम् ॥ तदानंदसुखंप्राप्तमद्यत्वद्दर्शनान्मुने ॥ ४५ ॥

ति ॥ यदनादीति ॥ अनाद्यपिप्रागभाववदनित्यंमाभूदित्याह ॥ अपायेति ॥ अपायोनाशः । अनपाय्यपिसादिस्यात्प्रध्वंसवदतआह ॥ अनादीति ॥ आद्यंतरहितस्यापिनकूटस्थनित्यत्वंजगन्नित्यत्ववादिनःपृथिव्यादिवदित्यतआह॥अक्षुण्णमिति ॥ पृथिव्यादिवत्क्वचित् क्षुण्णंखंडितावयवंनभवतीत्यक्षुण्णंकूटस्थंनित्यमित्यर्थः । आनंदसुखंब्रह्मसुखम् । आनंदोब्रह्मेतिव्यजानात् ॥ विज्ञानमानंदंब्रह्म यदेषआकाशआनंदोनस्यादित्यादिश्रुतिषुआनंदशब्दार्थतयाब्रह्मणःप्रसिद्धत्वात् ॥ ४५ ॥

यथामृतस्येत्यत्र अमृतस्येतिपदच्छेदः ॥ ४६ ॥ ४७ ॥ काम्यतइतिकामः ॥ ४८ ॥ शीतयत्यसंतापंकरोति इवशब्दोऽवधारणे ॥ ४९ ॥ विगतेति ॥ इच्छा अर्थमात्रविषया रागःस्त्र्यादिविशेषविषयः । अप्राप्तेऽर्थेप्रार्थनामात्रमिच्छा प्राप्तेप्रार्थनारागइतिकेचित् । मामुपागतइ तियदिदमत्यद्भुतमितिसंबंधः ॥ ५० ॥ येनार्थेनप्रयोजनेनप्राप्तोऽसितदर्थंयन्मयाकार्यंतत्कृतमेवविद्धीत्यन्वयः । तत्रहेतुर्मान्योऽसीति

यथाऽमृतस्यसंप्राप्तिर्यथावर्षमवर्षके ॥ यथांधस्येक्षणप्राप्तिर्भवदागमनंतथा ॥४६॥ यथाहर्षोनभोग त्यामृतस्यपुनरागमात् ॥ तथात्वदागमाद्ब्रह्मन्स्वागतंतेमहामुने ॥ ४७ ॥ कश्चतेपरमःकामःकिंचतेक रवाण्यहम् ॥ तीर्थभूतोऽसिमेविप्रप्राप्तःपरमधार्मिकः ॥४८॥ गंगाजलाभिषेकेणयथाप्रीतिर्भवेन्मम ॥ तथात्वद्दर्शनात्प्रीतिरंतःशीतयतीवमाम् ॥ ४९ ॥ विगतेच्छाभयक्रोधोवीतरागोनिरामयः ॥ इदम त्यद्भुतंब्रह्मन्यद्भवान्मामुपागतः ॥ ५० ॥ यत्कार्यंयेनचार्थेनप्राप्तोऽसिमुनिपुंगव ॥ कृतमित्येवतद्विद्धि मान्योऽसिहिभृशंमम ॥ ५१ ॥ तच्छ्रुत्वाराजशार्दूलवाक्यमद्भुतविस्तरम् ॥ हृष्टरोमामहातेजाविश्वा मित्रोऽभ्यभाषत ॥ ५२ ॥ सदृशंराजशार्दूलतवैवैतन्महीतले ॥ महावंशप्रसूतस्यवसिष्ठवशवर्तिनः ॥ ५३ ॥ अहंनियममातिष्ठेसिद्ध्यर्थंपुरुषर्षभ ॥ तस्यविघ्नकराघोराराक्षसाममसंस्थिताः ॥ ५४ ॥

॥५१॥ हृष्टानिहर्षादुद्भिन्नानिरोमाणियस्यसतथा ॥५२॥ राजशार्दूलराजश्रेष्ठ। सिंहशार्दूलनागाद्याःपुंसिश्रेष्ठार्थवाचकाइत्यमरः ॥ ५३ ॥ आतिष्ठेऽवलंबे। यद्यपिविश्वामित्रःकृतार्थस्तथापिलोकदृष्टिमाश्रित्याह ॥ सिद्ध्यर्थमिति ॥ कार्यकारणसंघातस्यज्ञाननिष्ठायोग्यताप्राप्तिः सिद्धिः । कर्मणासाक्षान्मुक्तिलक्षणसिद्धेरसंभवात् । ममतस्यनियमस्यविघ्नकराइतिसंबंधः ॥ ५४ ॥

शरणशब्दोरक्षितृवाचकः । शरणंगृहरक्षित्रोरितिवचनात् । दृप्तशार्दूलोदर्पान्वितव्याघ्रस्तद्वद्विक्रमोऽतिशक्तितायस्यसदृप्तशार्दूलविक्रमः वि क्रमस्त्वतिशक्तितेत्यमरः ॥ ५५ ॥ सत्यपराक्रमःसत्योऽवितथःफलपर्यवसायीपराक्रमोयस्यसतथोक्तः ॥ ५६ ॥ काकपक्षःशिखातस्य । र क्षोवधेशक्तिरहितत्वाददेयत्वशंकांशातयति ॥ शक्तइति ॥ ५७ ॥ अपकर्तारोऽपकारकर्तारःतेषांमूर्धविनिग्रहेशक्तइत्यन्वयः । ननुदिव्ये नतेजसाशक्तत्वमृषिगुप्तत्वंचविरुद्धमितिचेन्न अज्ञानावतारेऋषेरप्यस्त्रदानादिनादिव्यतेजसोऽभिव्यंजकत्वसंभवात् ॥ ५८ ॥ अशक्तत्वमु

त्रातुमर्हसिमामार्तंशरणार्थिनमागतम् ॥ तवास्तितनयःश्रीमान्दृप्तशार्दूलविक्रमः ॥ ५५ ॥ महेंद्रसदृ शोवीर्येरामोरक्षोविदारणः ॥ तंपुत्रंराजशार्दूलरामंसत्यपराक्रमम् ॥ ५६ ॥ काकपक्षधरंशूरंज्येष्ठंमेदा तुमर्हसि ॥ शक्तोह्येषमयागुप्तोदिव्येनस्वेनतेजसा ॥५७॥ राक्षसायेऽपकर्तारस्तेषांमूर्धविनिग्रहे ॥ नच पुत्रकृतंस्नेहंकर्तुमर्हसिपार्थिव ॥ ५८ ॥ नतदस्तिजगत्यस्मिन्यन्नदेयंमहात्मनाम् ॥ हंततेप्रतिजाना मिहतांस्तान्विद्धिराक्षसान् ॥ नह्यस्मदादयःप्राज्ञाःसंदिग्धेसंप्रवृत्तयः ॥ ५९ ॥ अहंवेदमहात्मा नंरामंराजीवलोचनम् ॥ वसिष्ठश्चमहातेजायेचान्येदीर्घदर्शिनः ॥ ६० ॥

ररीकृत्याह ॥ नतदिति ॥ महात्मनांदेयंनभवतियत्तन्नास्तीतिसंबंधः । स्मर्यतेहि । त्वचंकर्णःशिबिर्मांसंजीवंजोमूतवाहनः । ददौदधीचिर स्थीनिकिमदेयंमहात्मनामिति । हंतहर्षेऽनुकंपायामित्यमरः । संदिग्धेकार्येसंप्रवृत्तयइतिबहुव्रीहिः । प्रवृत्तेःसम्यक्त्वंदृढत्वम् ॥५९॥ ननु बालकस्यकथमेतादृशंसामर्थ्यंयतइयंतवप्रतिज्ञेत्यतआह ॥ अहमिति ॥ महात्मानंसंकल्पमात्रेणजगत्कुटीसंघट्टनविघट्टनपटीयांसंपरमात्मा नंवेदजानामि ॥ ६० ॥

यदिधर्मइति ॥ धर्मादिकंतेमनसस्त्याज्यतयास्थितं तर्हिस्वंस्वीयमात्मजंपुत्रम् । कथंभूतमभिप्रेतमिष्टम् । दातुमर्हसि ॥६१॥ उपररामतूष्णीं बभूवेत्यर्थः ॥६२॥ ६३ ॥ षोडशानांपूरकंषोडशंतच्चतद्वर्षंच ऊनंकिंचिन्न्यूनंषोडशवर्षंयस्यसतथा ॥ ६४ ॥ पिशिताशिनांमांसाशिनांरक्ष

यदिधर्मोमहत्त्वंचयशस्तेमनसिस्थितम् ॥ तन्मह्यंस्वमभिप्रेतमात्मजंदातुमर्हसि ॥६१॥ इत्येवमुक्त्वा धर्मात्माधर्मार्थसहितंवचः ॥ विरराममहातेजाविश्वामित्रोमुनीश्वरः ॥६२॥ तच्छ्रुत्वाराजशार्दूलोविश्वामित्रस्यभाषितम् ॥ मुहूर्तमासीन्निश्चेष्टःसदैन्यंचेदमब्रवीत् ॥ ६३ ॥ ऊनषोडशवर्षोऽयंरामोराजीवलोचनः ॥ नयुद्धयोग्यतामस्यपश्यामिसहराक्षसैः ॥ ६४ ॥ इयमक्षौहिणीपूर्णायस्याःपतिरहंस्थितः ॥ तयापरिवृतोयुद्धंदास्यामिपिशिताशिनाम् ॥ ६५ ॥ बालोरामस्त्वनीकेषुनजानातिबलाबलम् ॥ अंतःपुरादृतेदृष्टानानेनान्यारणावनिः ॥ ६६ ॥ नववर्षसहस्राणिममजातस्यकौशिक ॥ दुःखेनोत्पादितास्त्वेतेचत्वारःपुत्रकामया ॥ ६७ ॥ प्रधानभूतस्तेष्वेकोरामःकमललोचनः ॥ तंविनेहत्रयोऽप्यन्येधारयंतिनजीवितम् ॥ ६८ ॥ सएवरामोभवतानीयतेराक्षसान्प्रति ॥ यदितत्पुत्रहीनंत्वंमृतमेवाशुविद्धिमाम् ॥६९॥ अन्यच्चयदितेविघ्नंकरोतिसहिरावणः ॥ ततोयुधिनशक्ताःस्मोवयंतस्यदुरात्मनः ॥ ७० ॥

साम् । पिशितंतरसंमांसंपललंक्रव्यमामिषमित्यमरः ॥ ६५ ॥ रणावनिर्युद्धभूमिः ॥ ६६ ॥ नववर्षसहस्राणीतिक्वचित् । षष्टिर्वर्षसहस्राणीत्यन्यत्र ॥ ६७ ॥ ६८ ॥ राक्षसान्प्रतिनीयतेयदीतिसंबंधः तर्हि ॥ ६९ ॥ रामाप्रदानेऽन्यदपिनिमित्तंशंकितमस्तीत्याह ॥ अन्यच्चेति ॥ ७० ॥

ननुरावणस्यैवंविधंवीर्यंकुतः कुतश्च भवतारावणादेरप्यधिकबलानाकाकुत्स्थादिवंशप्रसूतानातद्विपर्ययइत्यतआह॥ कालइत्यादिना ॥ पृथ ग्भिन्नाअन्योन्यंविलक्षणाभूरिवीर्याविभूतयोबहुशौर्यसंपदः कालेकालेऽभिव्यक्तानुकूलेभूतेषुप्राणिष्वभ्युदयमभिव्यक्तिंयांति। कालतःप्रल यानुकूलत्वात् ॥७१॥ अस्मिन्कालेअस्मत्प्रतिकूलेतत्राद्यरावणादिषुशत्रुषुविषयेषुनियतिर्विधिः ॥७२॥ कालस्यप्रातिकूल्यमेवदर्शयति ॥ अयमन्यतमइति॥ पेलवीकृतसज्जनःविरलीकृतसाधुजनः। घनंनिरंतरंसांद्रंपेलवंविरलंतन्वित्यमरः। अयंकालोऽन्यतमोऽत्यंतमन्यःपूर्वस्माद

कालेकालेपृथग्भिन्नाभूरिवीर्यविभूतयः॥भूतेष्वभ्युदयंयांतिप्रलीयंतेचकालतः॥७१॥ अद्यास्मिंस्तुवयं कालेरावणादिषुशत्रुषु ॥ नसमर्थाःपुरःस्थातुंनियतेरेषनिश्चयः ॥७२॥ अयमन्यतमःकालःपेलवीकृतस ज्जनः ॥ राघवोऽपिगतोदैन्यंयत्रवार्धकजर्जरः॥७३॥तच्छ्रुत्वावचनंतस्यस्नेहपर्याकुलाक्षरम् ॥ समन्युः कौशिकोवाक्यंप्रत्युवाचमहीपतिम् ॥७४॥ करिष्यामीतिसंश्रुत्यप्रतिज्ञांहातुमिच्छसि ॥ सभवान्केस रीभूत्वामृगतामभिवांछसि ॥७५॥ यदित्वमक्षमोराजन्गमिष्यामियथागतम् ॥ हीनप्रतिज्ञःकाकुत्स्थ सुखीभवसबांधवः ॥ ७६ ॥ तस्मिन्कोपपरीतेतुविश्वामित्रेमहात्मनि ॥ चचालवसुधाकृत्स्नासुरांश्चभय माविशत् ॥७७॥ क्रोधाभिभूतंविज्ञायजगन्मित्रंमहामुनिम् ॥ धृतिमान्सुव्रतोधीमान्वसिष्ठोवाक्यमब्र वीत्॥७८॥ इक्ष्वाकुवंशजातोऽपिस्वयंदशरथोऽपिसन्॥ नपालयसिचेद्वाक्यंकोऽपरःपालयिष्यति॥७९॥

त्यंतंविपरीतइत्यर्थः। वार्धकंवृद्धत्वंवार्धकइवजर्जरोवार्धकजर्जरः ऊनषोडशवर्षोऽपिराघवोवार्धकावस्थायामिवजर्जरोभूत्वायत्रयस्मिन्कालेदै न्यंदीनभावंदुःखितांगतः राघवशब्दोदशरथविषयइतिकेचित् ॥ ७३ ॥ कौशिकःकुशिकगोत्रोविश्वामित्रः॥ ७४ ॥ केसरीसिंहः ॥ ७५ ॥ अक्षमःअसमर्थःकाकुत्स्थेतिसंबोधनंसाभिप्रायम् ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

॥८०॥ कृतान्यभ्यस्तानिसाधितानिवाअस्त्राणियेनसकृतास्त्रस्तंशक्ष्यंतिशक्तानभविष्यंतिधर्षयितुमितिशेषः ॥ ८१ ॥ कुतोरामःकुत्ररामइ त्यर्थः ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ परिव्राड्धर्मिणं परिव्राजांसंन्यासिनांधर्मानैरपेक्ष्यादयोयस्यसतथोक्तस्तम् ॥८६॥ उदेतिहृष्यति ॥

युष्मदादिप्रणीतेनव्यवहारेणजंतवः ॥ मर्यादांनविमुंचंतुतांनहातुंत्वमर्हसि ॥८०॥ गुप्तंपुरुषसिंहेनगरुडे नामृतंयथा ॥ कृतास्त्रमकृतास्त्रंवानैनंशक्ष्यंतिराक्षसाः ॥८१॥ वाल्मीकिरुवाच ॥ तथावसिष्ठेब्रुवतिराम भृत्यजनान्नृपः ॥ कथंकीदृक्कुतोरामइतिपप्रच्छबुद्धिमान् ॥८२॥ रामभृत्याऊचुः ॥ रामोराजीवपत्राक्षो यतःप्रभृतिचागतः ॥ सविप्रस्तीर्थयात्रायास्ततःप्रभृतिदुर्मनाः ॥ ८३ ॥ यत्नप्रार्थनयास्माकंनिजव्या पारमाह्निकम् ॥ सोऽयमाम्लानवदनःकरोतिनकरोतिवा ॥८४॥ किंसंपदाकिंविपदाकिंगेहेनकिमीहितैः ॥ सर्वमेवासदित्युक्त्वातूष्णीमेकोऽवतिष्ठते ॥८५॥ वस्त्रपानाशनादानपराङ्मुखतयातथा ॥ परिव्राड्धर्मि णंराजन्सोऽनुयातितपस्विनम् ॥८६॥ नाभिमानमुपादत्तेनाभिवांछतिराजताम् ॥ नोदेतिनास्तमाया तिसुखदुःखादिवृत्तिषु ॥८७॥ नीतमायुरनायासपदसंप्राप्तिवर्जितैः ॥ चेष्टितैरितिकाकल्याभूयोभूयःप्र गायति ॥८८॥ आपदामेकमावासमभिवांछसिकिंधनम् ॥ अनुशिष्येतिसर्वस्वमर्थिभ्यःसंप्रयच्छति ॥८९॥

अस्तमायातिविषीदतीत्येतत् ॥८७॥ अनायासपदंनिर्वाणं काकल्याकलसूक्ष्मध्वनिना । काकलीतुकलेसूक्ष्मइत्यमरः ॥८८॥ हेअर्थिन्आप दामेकंमुख्यमावासंनिलयंधनं किंकिमर्थमभिवांच्छसिअभीच्छसीत्यनुशिष्यअनुशासनंकृत्वा सर्वस्वमर्थिनेयाचकायप्रयच्छतिददाति ८९

ताद्दशचेतसस्तस्याकिंकुर्मोनविघ्नइतिसंबंधः ॥ ९० ॥ प्राकृतेव्यवहारेतंरामंनिवेशयितुंयःक्षमईद्दशोमहासत्वोऽस्मिन्महीतलेकइवस्यात्को
नुस्यादितिसंबंधः ॥ ९१ ॥ ९२ ॥ महानुदयःपरमानंदाविर्भावोयस्मात्सतथोक्तः एषमोहोबोधइतिमोहस्यैताद्दशस्यबोधहेतुत्वादुपचर्यते



नाविघ्नःकिंमहाबाहोस्तस्यताद्दशचेतसः ॥ कुर्मःकमलपत्राक्षगतिरत्रहिनोभवान् ॥ ९० ॥ ईद्दशःस्या
न्महासत्वःकइहास्मिन्महीतले ॥ प्राकृतेव्यवहारेतंयोनियोजयितुंक्षमः ॥ ९१ ॥ विश्वामित्रउवाच ॥
एवंचेत्तन्महाप्राज्ञंभवंतोरघुनंदनम् ॥ इहानयंतुत्वरिताहरिणंहरिणाइव ॥ ९२ ॥ एषमोहोरघुपतेर्नाप
द्दयोनापिरागतः ॥ विवेकवैराग्यकृतोबोधएषमहोदयः ॥ ९३ ॥ एतस्मिन्मार्जितेयुक्त्यामोहेसरघुनंदनः
॥ विश्रांतिमेष्यतिपदेतस्मिन्वयमिवोत्तमे ॥ ९४ ॥ निजांचप्राकृतामेवव्यवहारपरंपराम् ॥ परिपूर्णमना
मान्यआचरिष्यत्यखंडिताम् ॥ ९५ ॥ एवंमुनींद्रेब्रुवतिपितुःपादाभिवंदनम् ॥ कर्तुमभ्याजगामाथरा
मःकमललोचनः ॥ ९६ ॥ प्रथमंपितरंपश्चान्मुनीमान्यैकमानितौ ॥ ततोविप्रान्ततोबंधून्प्रणनामततो
गुरून् ॥ ९७ ॥ जग्राहचततोद्दष्ट्यामनाक्मूर्ध्नाततोगिरा ॥ राजलोकेनविहितांतांप्रणामपरंपराम् ॥ ९८ ॥
उत्संगेपुत्रतिष्ठेतिवदत्येवंमहीपतौ ॥ भूमौपरिजनास्तीर्णेचासनेसन्यविक्षत ॥ ९९ ॥ दशरथउवाच ॥
पुत्रप्राप्तविवेकस्त्वंकल्याणानांचभाजनम् ॥ जडवज्जीर्णयाबुद्ध्याखेदायात्मानदीयताम् ॥ १०० ॥



॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ मनाक्मूर्ध्नाईषच्छिरःकंपनेन ॥ ९८ ॥ न्यविक्षतउपवेशनमकार्षीत् । विशप्रवेशनइतिधातोर्लुङि
प्रथमपुरुषैकवचनं नेर्विशइतिसूत्रादात्मनेपदम् ॥ ९९ ॥ १०० ॥

॥१०१॥ परिपेलवाःअविरलाः प्रसरःप्रचारः ॥ १०२ ॥ दुःखेनोच्छेदोयेषांतेदुरुच्छेदाःदुष्टःप्रारंभोव्यापारोयेषांतेदुरारंभाः यद्वा दुरारंभादुरु पक्रमाः दुःसाध्याइत्यर्थः ॥ १०३ ॥ अतज्ज्ञइवअब्रह्मविदिव कल्लोलामहोर्मयःव्यामोहसागरेकल्लोलाःप्रचंडापदः सागरेजाड्यशालित्वंतुशि शिरताशालित्वम् । शिशिरोजडइत्यमरः ॥ १०४ ॥ संक्षेपेणपूर्वंप्रतिपादितस्यवैराग्यस्यविस्तरेणप्रतिपादकोत्तरग्रंथसंदर्भोत्थानहेतुभूतान् विश्वामित्रप्रश्नानुत्क्षिपति ॥ किंनिष्ठाइति ॥ आखवोमूषकागेहमिवयेमनःपीडालक्षणाआधयस्तेतवमनोविलुंपंतिविशेषेणछिंदंति । तेकिं

वृद्धविप्रगुरुप्रोक्तंत्वादृशेनानुतिष्ठता ॥ पदमारुह्यतेपुण्यंनमोहमनुधावता ॥ १०१ ॥ तावदेवापदोदूरे तिष्ठंतिपरिपेलवाः ॥ यावदेवनमोहस्यप्रसरःपुत्रदीयते ॥१०२॥ वसिष्ठउवाच ॥ राजपुत्रमहाबाहोशूर स्त्वंविजितास्त्वया॥दुरुच्छेदादुरारंभाअप्यमीविषयारयः ॥ १०३ ॥ किमतज्ज्ञइवाज्ञानांयोग्येव्यामो हसागरे ॥ विनिमज्जसिकल्लोलबहुलेजाड्यशालिनि॥१०४॥विश्वामित्रउवाच ॥ किंनिष्ठाःकेचतेकेनकि यंतःकारणेनते॥आधयःप्रविलुंपंतिमनोगेहमिवाखवः ॥ १०५॥ यथाभिमतमाशुत्वंब्रूहिप्राप्स्यसिचा नघ ॥ सर्वमेवपुनर्येनभेत्स्यंतित्वांतुनाधयः ॥१०६॥ इत्युक्तमस्यसुमतेरघुवंशकेतुराकर्ण्यवाक्यमुचि तार्थविलासगर्भम् ॥ तत्याजखेदमभिगर्जतिवारिवाहेबर्हीयथात्वनुमिताभिमतार्थसिद्धिः ॥१०७॥

निष्ठाःकेषुविषयेषुनितरांतिष्ठंतीतिकिंनिष्ठाः केचस्वरूपतःकेनकारणेनजाताःकियंतःकियत्परिमाणाः ॥ १०५॥ प्रश्नोत्तरदानस्यनिःप्रयोज नत्वशंकांशातयति ॥ यथेति ॥ हे अनघआधयोयेनप्राप्तेनाभिमतेनसर्वेत्वांपुनर्नभेत्स्यंति यथाभिप्रेतंतत्सर्वमेवत्वमाश्ववाप्स्यसि ब्रूहीत्य न्वयः ॥ १०६ ॥ केतुर्ध्वजः यथारथस्यकेतुरलंकारस्तथारघुवंशस्यालंकारइत्यर्थः । उचितानामर्थानांविलासोविस्तारोगर्भेयस्यतत्तथा वारिवाहोमेघः बर्हीमयूरः अनुमिताऽभिमतस्यार्थस्यप्रयोजनस्यसिद्धिर्येनसतथोक्तः ॥ १०७ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यउत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखविरचितायांवासिष्ठचंद्रिकायां वैराग्यप्रकरणेवैराग्यसंभूतिर्नाम प्रथमःसर्गः ॥ १ ॥ पूर्वंसंक्षेपेणप्रतिपादितंवैराग्यंविस्तरेणप्रतिपादयितुमुत्तरग्रंथसंदर्भइतितात्पर्यमवादिष्म । तत्रातीतसर्गांतेकिंनिष्ठाइतिप्रश्नाउपक्षिप्ताःतन्निर्णयार्थंवचनमुवाचरामइत्याह ॥ इतीति ॥ मंथरंमंदगामि गंभीरमित्यर्थः । मंदगामीतुमंथरइत्यमरः ॥ १ ॥ २ ॥ ३ ॥ अंबुधिःसमुद्रोमेखलाकांचीयस्याःसातथोक्तातताम् ॥४॥ ईदृशोवक्ष्यमाणप्रकारः ॥ ५ ॥ येयंसंसारसंस्थितिः इदंकिंनामसुखंवदेत्यन्वयः । असु



इतिश्रीवाल्मीकीयेमोक्षोपायेवैराग्यप्रकरणेवैराग्योत्पत्तिप्रतिपादनोनामप्रथमःसर्गः ॥१॥ ॥ वाल्मीकिरुवाच ॥ इतिपृष्टोमुनींद्रेणसमाश्वास्यचराघवः ॥ उवाचवचनंचारुपरिपूर्णार्थमंथरम् ॥ १ ॥ श्रीरामउ० ॥ भगवन्भवतापृष्टोयथावदधुनाखिलम् ॥ कथयाम्यहमज्ञोऽपिकोलंघयतिसद्वचः ॥ २ ॥ अहंतावदयंजातोनिजेऽस्मिन्मंदिरेपितुः ॥ क्रमेणवृद्धिंसंप्राप्तःप्राप्तविद्यश्चसंस्थितः ॥ ३ ॥ ततःसदाचारपरोभूत्वाहंमुनिनायक ॥ विहृतस्तीर्थयात्रार्थमुर्वीमंबुधिमेखलाम् ॥४॥ एतावताचकालेनसंसारास्थामिमांहरन् ॥ प्रादुर्भूतोमनसिमेविचारःसोऽयमीदृशः ॥५॥ किंनामेदंवदसुखंयेयंसंसारसंस्थितिः ॥ जायतेम्रियतेलोकोम्रियतेजननायच ॥ ६ ॥ अस्थिराःसर्वएवैतेसचराचरचेष्टिताः ॥ सर्वापदांपदंपापाभावाविभवभूमयः ॥ ७ ॥



खकरत्वमेवदर्शयति ॥ जायतइति ॥ मृतयेजायतेजननंमरणाविनाभूतमित्यर्थः । जननायम्रियतेचमृतिश्चाज्ञस्यावश्यंजन्महेतुरित्यर्थः ॥६॥ सचराचरचेष्टिताः सचराचरैःकृताइत्यर्थः । पापाःपापहेतवःभावाःपदार्थाःविभवभूमयःऐश्वर्यकारणानि । विभवभूमयोभावाःसर्वापदांपदंस्थानंभवंतीत्यन्वयः । आपदांपतयइतिक्वचित्पाठः ॥ ७ ॥

स्वप्नसंसारवन्मनोनिर्मितएवसंसारइत्याह ॥ अयइति ॥ परस्परमसंगिनःस्वभावतोऽन्योन्यसंबंधरहिताः । स्वतःसंबंधराहित्येदृष्टांतः । अयः
शलाकेति ॥ अयोनिर्मितशंकुतुल्याः नह्ययःशलाकाजतुकाष्ठवत्परस्परंसंबध्यते । भावाःपुत्रभार्यादिलक्षणपदार्थाःकेवलंस्वयामनःकल्पनया
ममायंपुत्रोममेयंभार्याममायंपतिरित्यादिलक्षणयाश्लिष्यंतेसंबध्यंते ॥ ८ ॥ कोऽहमिति ॥ शरीरेंद्रियमनोबुद्ध्यहंकारचित्ताज्ञानचित्प्रतिबिं
बबिंबकेवलानांमध्ये कोऽहंकतमोऽहमागतमभिव्यक्तमिदंजगत्किंसत्यमुतासत्यं सम्यग्विचारणायांयज्जगन्मिथ्यैवास्तुनहिमिथ्याकदा
चित्सत्यंभवति तेनकस्यकिमागतंनाम नहिमिथ्यापदार्थेनापकारउपकारोवाकस्यचिद्भवति । नहिमरीचिकोदकेनभूमेर्भूषणमभूषणंवाभ

अयःशलाकासदृशाःपरस्परमसंगिनः ॥ श्लिष्यंतेकेवलंभावामनःकल्पनयास्वया ॥ ८ ॥ किंमेराज्येन
किंभोगैःकोऽहंकिमिदमागतम् ॥ यन्मिथ्यैवास्तुतन्मिथ्याकस्यनामकिमागतम् ॥ ९ ॥ एवंविमृशतो
ब्रह्मन्सर्वेष्वेवततोमम ॥ भावेष्वरतिरायातापथिकस्यमरुष्विव ॥ १० ॥ शाम्यतीदंकथंदुःखमितितप्तो
ऽस्मिचिंतया ॥ जरद्वृक्षइवोग्रेणकोटरस्थितवन्हिना ॥ ११ ॥ संसारदुःखपाषाणनीरंध्रहृदयोह्यहम् ॥
निजलोकभयादेवगलद्बाष्पंनरोदिमि ॥ १२ ॥

वति । अधिष्ठानभूतस्यात्मनःकल्पितप्रपंचेननकिंचिदपिभवतीतिभावः ॥ ९ ॥ एवंसंसारयाथात्म्यविचारस्यकिंफलमित्याह ॥ एवमिति
ततस्तस्माद्विमर्शादरतिररमणं पथिकःपांथः मरुषुमरुभूमिषु ॥ १० ॥ किंनिष्ठाइत्यादिप्रश्नोत्तरदानार्थमेवमुपोद्घातंकृत्वेदानींतदुत्तराण्याह
॥ शाम्यतीति ॥ इदंसंसारदुःखं कथंकेनोपायेनशाम्यतिनश्यतीतिचिंतयातप्तोऽस्मिदुःखितोऽस्मि । जरद्द्रुमोजीर्णवृक्षःकोटरंनिष्कुहःवृक्षच्छिद्र
म् । केनकारणेनाधयःप्रलुंपंतीत्यस्यापिप्रश्नस्य संसारशांत्युपायापरिज्ञानेनकारणेनेत्युत्तरमर्थादत्रैवोक्तमितिवेदितव्यम् ॥ ११ ॥ १२ ॥

सर्वभोग्यसमावृतस्त्वं कथंदुःखमेववर्णयसिदरिद्रइवेत्याशंक्य सर्वमनर्थकरंदुष्टमेवेतिदर्शयन्नादावनेकानर्थहेतुंधनंनिंदति ॥ चिंतेति ॥ चिंतानांनिचयाःसमूहाएवचक्राण्यायुधविशेषायेषांतानितथोक्तानि । धनैरुत्पादितोहिचिंतानिचयश्चक्रवद्विदारयतिपुरुषम् । संप्रसूतकलत्राणि सम्यक्प्रकर्षेणकृतप्रसवानिकलत्राणिदारायेषुगृहेषुतानितथोक्तानि उग्रापदां उग्राआपदोयेषांपुरुषाणांतउग्रापदस्तेषां यथाप्रवृद्धाभिरापद्भिराक्रांतानांकुटुंबिनांचक्रतुल्यचिंतासमूहजनकानि बह्वपत्यपरिवृतभार्याणिगृहाणिनसुखायभवंति किंतुदुःखायैव तथाधनानीत्यर्थः ॥ १३ ॥ धननिंदानंतरंधनहेतुंश्रियंनिंदति ॥ इयमस्मिन्नित्यादिभिः सप्तभिःश्लोकैः ॥ अस्मिन्संसारेस्थिता उदारामहती । उदा

चिंतानिचयचक्राणिनानंदायधनानिमे ॥ संप्रसूतकलत्राणिगृहाण्युग्रापदामिव ॥ १३ ॥ इयमस्मिन्स्थितोदारासंसारेपरिपेलवा ॥ श्रीर्मुनेपरिमोहायसापिनूनंनशर्मदा ॥ १४ ॥ गुणागुणविचारेणविनैवकिलपार्श्वगम् ॥ राजप्रकृतिवन्मूढादुरारूढावलंबते ॥ १५ ॥ कर्मणातेनतेनैषाविस्तारमनुगच्छति ॥ दोषाशीविषवेगस्ययत्क्षीरंविसरायते ॥ १६ ॥

रोदात्तमहतोरित्यमरः । परिपेलवापरितःसमंतादद्दृढा येयंश्रीःसापिशर्मदासुखदानभवति । नूनंनिश्चये प्रत्युतपरिमोहायभवतीतियोजना ॥ १४ ॥ गुणिनमेवाश्रयतेलक्ष्मीरितिनियमाभावात्तस्याआश्रयतोदुष्टत्वमाह ॥ गुणेति ॥ दुरारूढादुःखेनारूढा दुःखानुषंगिणीतियावत् । अथवाआरूढशब्देनारोहोलक्ष्यते । दुरारोहादुःसाध्येत्यर्थः । गुणागुणविचारेण अस्मिन्गुणोऽस्त्यस्मिन्नगुणोऽस्तीतिविचारेणविनापार्श्वगमवलंबतेकिलेतिवार्तायाम् । वार्त्तासंभाव्ययोःकिलेत्यमरः । राजप्रकृतिवद्राजस्वभाववत् । यथाराजस्वभावोदुर्जनंसज्जनंवापार्श्वगंविचारंविनावलंबते दुरारूढश्चभवतितद्वत् । अथवाराजप्रकृतिरमात्यादीनाश्रयते ॥ १५ ॥ तस्यादोषमुक्ताभिवृद्धौतमाह ॥ कर्मणेति ॥ तेन

तेनसाधुनावाऽसाधुनाकर्मणाविस्तारमभिवृद्धिमनुगच्छति । अभिवृद्धापिसानर्थायभवतीत्याह ॥ दोषेति ॥ यल्लक्ष्मीरूपंक्षीरंदोषाशीविष
वेगस्य दोषादर्पादयआशीविषाभुजंगमास्तेषांविषवेगस्यविसरःविसर्पणंतद्ददाचरति । यथाक्षीरमुरगस्यविषवेगवर्धकंभवतितथादोषसर्पा
णांप्रभावरूपविषवेगवर्धकंलक्ष्मीरूपंक्षीरमित्यर्थः । यत्क्षीरंविसरायतेसैषेतिपूर्वेणसंबंधः ॥ १६ ॥ यत्क्षीरंविसरायतइत्युक्तंस्पष्टयति ॥ ता
वदित्यादि श्लोकचतुष्टयेन ॥ शीतःसुखकरोमृदुर्विनयमधुरवाक्त्वादिगुणःस्पर्शःसंपर्कोयस्यजनस्यसतथा वात्याचक्रवातः परुषीकृतःकर्कशी
कृतः चक्रवातचलितंहिमंयथादुःखदस्पर्शं तथालक्ष्म्याविषमीकृतचित्तोदुःखसंपर्कोभवतीत्यर्थः ॥ १७ ॥ प्राज्ञाःपंडिताः कृतज्ञाःकृतोप
काराविस्मर्तारः पेशलाःपटवः ॥ दक्षेतुचतुरपेशलपटवइत्यमरः । मणयोरत्नादयः ॥ १८ ॥ जननिंद्योनभवतीत्यजननिंद्यः । अविकत्थनः

तावच्छीतमृदुस्पर्शःपरेस्वेववर्ततेजनः ॥ वात्ययेवहिमंयावच्छ्रियानपरुषीकृतः ॥ १७ ॥ प्राज्ञाःशूराःकृ
तज्ञाश्चपेशलामृदवश्चये ॥ पांसुमुष्टयेवमणयःश्रियातेपरुषीकृताः ॥ १८ ॥ श्रीमानजननिंद्यश्चशूरश्चा
प्यविकत्थनः ॥ समदृष्टिःप्रभुश्चेतिदुर्लभाःपुरुषास्त्रयः ॥ १९॥ मनोरमाकर्षतिचित्तवृत्तिंकदर्थसाध्याक्ष
णभंगुराच ॥ व्यालावलीगात्रविवृत्तदेहाश्वभ्रोत्थितापुष्पलतेवलक्ष्मीः ॥ २० ॥

शूरोऽहंकोनाममत्सदृशोस्तीत्येवंप्रजल्परहितः । श्रीमानजननिंद्यःपुरुषोदुर्लभइत्यस्य दृष्टांतत्वेनात्मस्तुतिरहितःशूरादिरुक्तइतिज्ञेयम् ॥ १९ ॥
श्वभ्रोत्थिताश्वभ्राद्वल्मीकादिरंध्रादुत्पन्ना । छिद्रंनिर्व्यथनंरोकंरंध्रंश्वभ्रंवपाशुषिरित्यमरः । पुष्पलतेवपुष्पयुक्तलतेव लक्ष्मीरापातसौंदर्या
न्मनोरमासती चित्तवृत्तिमाकर्षति स्वाभिमुखीकरोतीत्यर्थः । कदर्थसाध्या कदर्थेनकुत्सितार्थेननीचसेवादिजनितेनसाध्या । व्यालावली
गात्रविवृत्तदेहा व्यालाःशठाः । भेद्यलिंगःशठेव्यालः पुंसिश्वापदसर्पयोरित्यमरः । तेषामावल्यापंक्त्यागात्रेषुविवृत्तोलुठितोदेहोयस्याःसा
तथोक्ता । लतापक्षेतु व्यालावलीगात्र[illegible]ंक्तिशरीरलुठितदेहा ॥ २० ॥

लक्ष्मीनिंदानंतरंलक्ष्मीभोगनिमित्तमायु[illegible]यायुरिति ॥ पल्लवस्यकोणोंऽत्यभागस्तस्याग्रेलंबमानोदकलेशवद्भंगशीलमायुरकांडेऽन
वसरे । कांडोऽस्त्रीदंडबाणार्ववर्गावसरवारिष्वितिनामानुशासनात् । शरीरंसंत्यज्ययातीत्यन्वयः । अत्रदृष्टांतः । उन्मत्तमिवेति ॥ यथानुन्म
त्तउन्मत्तंत्यजतितद्वत् । अथवाउन्मत्तमिवस्थितंशरीरमितिसंबंधः ॥ २१ ॥ ननुक्वचिद्दीर्घमायुरपिदृश्यते सत्यम् । तदप्यात्मज्ञानानुपयो
ग्यमनर्थायैवेत्याह ॥ विषयेति ॥ विषयाएवाशीविषाभुजंगमास्तेष्वासंगेनासक्त्यासंबंधेनवा परिजर्जराणिप्रशिथिलानिचेतांसियेषांतेत
थोक्तास्तेषाम् । अप्रौढोऽप्रवृद्धःआत्मविवेकोयेषांतेतथोक्तास्तेषाम् ॥ २२ ॥ पुनरप्यायुषोऽस्थिरत्वंप्रतिपादयति ॥ वयमित्यादि श्लोकत्रयेण ॥

आयुःपल्लवकोणाग्रलंबांबुकणभंगुरम् ॥ उन्मत्तमिवसंत्यज्ययात्यकांडेशरीरकम् ॥ २१ ॥ विषयाशीवि
षासंगपरिजर्जरचेतसाम् ॥ अप्रौढात्मविवेकानामायुरायासकारणम् ॥ २२ ॥ वयंपरिमिताकारपरिनि
ष्ठितनिश्चयाः ॥ संसाराभ्रतडित्पुंजेमुनेनायुषिनिर्वृताः ॥ २३ ॥ युज्यतेवेष्टनंवायोराकाशस्यचखंडनम् ॥
ग्रंथनंचतरंगाणामास्थानायुषियुज्यते ॥ २४ ॥ पेलवंशरदीवाभ्रमस्नेहइवदीपकः ॥ तरंगकइवालोलंगत
मेवोपलक्ष्यते ॥ २५ ॥ अविश्रांतमनाःशून्यमायुराततमीहते ॥ दुःखायैवविमूढोंऽतर्गर्भमश्वतरीयथा ॥ २६ ॥

परिमितःपरिच्छिन्नआकारोयस्यानात्मनस्तस्मिन्परिनिष्ठितनिश्चयाःस्थिरबुद्धयोवयं संसाराभ्रतडित्पुंजे संसारमेघविद्युत्समूहेआयुषिननि
र्वृताःनसुखिनः ॥ २३ ॥ ग्रंथनंबंधनम् ॥ २४ ॥ पेलवंतनु । पेलवंविरलंतन्विस्समरः ॥ २५ ॥ ननूपायविशेषेणस्थिरमायुरपिसंपादयन्
कश्चित्पुरुषोलोकेदृश्यते । सत्यं तदप्यब्रह्मविदस्तस्यानर्थायेत्याह ॥ अविश्रांतेति ॥ विमूढोविशेषेणमूढोऽतएवब्रह्मण्यविश्रांतमनाः । शू
न्यंव्यर्थमाततंविस्तीर्णमायुर्दुःखायैवेहतेचेष्टतेसंपादयतीत्यर्थः । अश्वतरीनामाश्वाद्गर्दभ्यामुत्पन्ना । तस्यागर्भस्तामेवहंतीतिप्रसिद्धम् ॥ २६ ॥

ज्ञानानुपयोग्यायुर्विनिंद्य तदुपयोग्यायुःस्तौति उपादेयत्वाय ॥ प्राप्यमिति श्लोक त्रयेण ॥ येनजीवितेन प्राप्यंब्रह्मसंप्राप्यते। अतएवये नजीवितेन जन्मांतराप्राप्त्याभूयोनशोच्यते । यज्जीवितमाप्रारब्धकर्मक्षयात्परायाविषयसुखविलक्षणायानिर्वृतेःसुखस्यस्थानंभवति त ज्जीवितमुच्यते । सज्जीवितमुच्यतइत्यर्थः । कार्यस्तुतौहितत्कारणस्तुतिरवश्यंभवतीत्यायुषःकार्यभूतजीवितस्यप्राणधारणलक्षणस्यस्तुति रत्रकृता ॥ २७ ॥ यस्यपुंसोमनोदुर्वासनापरवशंमननेनैवस्तुतत्त्वविषयभूतनिरूपणेनैवजीवति मननादिजनितसाक्षात्कारेणबाधितमेव भवति सजीवति सम्यग्जीवतीत्यर्थः ॥ २८ ॥ जरठगर्दभाःजरायुक्तगर्दभाः ॥ २९ ॥ अज्ञजीवितस्यवृक्षादिजीवितवद्दुर्जीवितत्वंदर्शय

प्राप्यंसंप्राप्यतेयेनभूयोयेननशोच्यते ॥ परायानिर्वृतेःस्थानंयत्तज्जीवितमुच्यते ॥ २७॥ तरवोऽपि हिजीवंतिजीवंतिमृगपक्षिणः ॥ सजीवतिमनोयस्यमननेनैवजीवति ॥ २८॥ जातास्तएवजगति जंतवःसाधुजीविताः ॥ येपुनर्नेहजायंतेशेषाजरठगर्दभाः ॥ २९ ॥ भारोऽविवेकिनःशास्त्रंभारोज्ञानंच रागिणः॥ अशांतस्यमनोभारोभारोऽनात्मविदोवपुः॥ ३० ॥ रूपमायुर्मनोबुद्धिरहंकारःस्थिरेहितम् ॥ भारोभारवहस्येवसर्वंदुःखायदुर्धियः ॥ ३१ ॥

ता तच्छरीरादेरपिदुष्टत्वमर्थाद्दर्शितं तद्विशदयति ॥ भारइत्यादिश्लोकद्वयेन ॥ भारोयथादुर्धरःस्वाधीनोनभवति एवमविवेक्यादेःशा स्त्रादिकंस्वाधीनंनभवतीत्यर्थः । अविवेक्यत्रविवेकासमर्थोमंदबुद्धिर्विवक्षितः। भारोऽनात्मविदोवपुरित्यस्यदृष्टांततयान्यत्सर्वमुपन्यस्तमि तिज्ञेयम् ॥ ३० ॥ नन्वात्मविदोऽपिवपुर्भारएवतत्रकिमुच्यतेभारोऽनात्मविदोवपुरिति । नैतत् । आत्मविदःशरीरस्यैवाभावात् । प्रातिभा सिकेतस्मिन्पूर्ववदभिनिवेशाभावात्तदीयलाभोच्छेदयोरौदासीन्यात् । स्थिरेहितंस्थिरचेष्टितंस्थिरकार्यविषयत्वात्स्थिरत्वमीहितस्य । स्थितेहितमितिक्वचित्पाठस्तत्रापिसएव[illegible] ॥ ३१ ॥

यौवनावस्थायारूपादिकंसुखायभवती[illegible]स्यास्थिरत्वान्नैवमित्याह ॥ दिनैरिति ॥ परिज्ञायदुर्जनइतिज्ञात्वा गतादरमितिक्रियावि शेषणम् ॥ ३२ ॥ आयुर्निंदामुपसंहरति ॥ स्थिरतयाते ॥ सुखभासितयासुखदीपितयासुखशोभितयाप्रसिद्धयास्थिरतयास्थिरत्वेनसततमु ज्झितंत्यक्तं उत्तमफल्गु असत्यसारंतद्वत्तद्युक्तम् । असारंफल्गुशून्यंत्वित्यमरः । मरणभाजनमिदमायुर्यथागुणवर्जितंतथागुणवर्जितमन्य द्वस्तुजगतिनास्तीत्यर्थः ॥ ३३ ॥ आयुषोऽहंकारद्वारानर्थहेतुत्वात्तन्निंदानंतरंतदनर्थदानस्यप्रधानद्वारमहंकारंनिंदति ॥ मुधैवेत्यादिभिः सप्तश्लोकैः ॥ दुष्टोऽहंकारोदुरहंकारः दुरहंकारएववैरीदुरहंकारवैरी मोहादज्ञानान्मुधैववृथैवाभ्युत्थितः आभिमुख्येनोद्गतः । अहंकारस्योत्प

दिनैःकतिपयैरेवपरिज्ञायगतादरम् ॥ दुर्जनःसज्जनेनेवयौवनेनवियुज्यते ॥ ३२ ॥ स्थिरतयासुखभा सितयानयासततमुज्झितमुत्तमफल्गुवत् ॥ जगतिनास्तितथागुणवर्जितंमरणभाजनमायुरिदंयथा ॥ ॥ ३३ ॥ मुधैवाभ्युत्थितोमोहान्मुधैवपरिवर्तते ॥ मिथ्यामयेनभीताःस्मोदुरहंकारवैरिणा ॥ ३४ ॥ अहं कारवशादापदहंकाराद्दुराधयः ॥ अहंकारवशादीहानाहंकारात्परोरिपुः ॥ ३५ ॥ तमहंकारमाश्रित्यप रमंचिरवैरिणम् ॥ नभुंजेनपिबाम्यंभःकिमुभोगान्भजेमुने ॥ ३६ ॥ अहंकारवशाद्यद्यन्मयाभुक्तंह तंकृतम् ॥ तत्तत्सर्वमवस्त्वेववस्त्वहंकाररिक्तता ॥ ३७ ॥

ष्टेः ॥ अहमितितावत्प्रथमोऽध्यासइतिह्याचार्याः ॥३४॥ अहंकारस्य तौवैयर्थ्यमुक्त्वाभिवृद्धौतदाह ॥ मुधैवेति ॥ मिथ्यामयेनमिथ्यास्वरूपेण । अहमितितावत्प्रथमोऽध्यासइतिह्याचार्याः ॥३४॥ अहंकारस्य वैरित्वपरिज्ञानफलमाह ॥ दुर्वैरित्वंसाधयति ॥ अहंकारवशादिति ॥ दुराधयोदुष्टामनःपीडाः । ईहावांछा परउत्कृष्टः ॥३५॥ अहंकारस्यवैरित्वपरिज्ञानफलमाह ॥ तमिति ॥ ३६ ॥ ननुशत्रुमाश्रितस्यापिलोकेकस्यचिद्भोजनादौप्रवृत्तिर्दृश्यतेतद्वत्तवकिंनस्यादित्यतआह ॥ अहंकारवशादिति ॥ अव स्त्वेवापरमार्थएव । यथास्वप्नेभुक्त्यादिकमहंकारवशात्कृतंमिथ्यैवतद्वज्जागरेऽपीत्यर्थः । अहंकाररिक्तताअहंकाररहितता वस्तुपरमार्थः ॥३७॥

अहंकारवशादित्युक्तंप्रपंचयति ॥ ब्रह्मन्निति ॥ अहंकारवारिदः अहंकारमेघः कुटजोवत्सकाख्योवृक्षः । जयोऽथकुटजःशक्रोवत्सकइत्यमरः । तृष्णैवकुटजस्यमंजरी । कुटजवृक्षोहिजलदागमेविकसन्मंजरीसंछन्नोभवति ॥ ३८ ॥ एवंगुर्वनुशासनयोग्यतामात्मनोदर्शयित्वातदनुशासनंप्रार्थयते ॥ निरहंकारेति ॥ निरहंकारावृत्तिर्वर्तनंयस्यसतथोक्तस्तस्य मौर्ख्यात्मौढ्यात् । अज्ञेमूढयथाजातमूर्खवैधेयबालिशाइत्यमरः । सीदतः अवसीदतः ॥ ३९ ॥ सर्वापदामित्येतत्पूर्वस्यप्रपंचः । अहंकृतिपदंअहंकारवस्तुअहंकारस्थानंवा । पदंव्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरः । अहंकृतिपदंयत्नान्नसंश्रयामीतिसंबंधः । निलयमाश्रयः अंतरस्थंदेहाभ्यंतरस्थंशेषेणाहंकारत्यागेनतत्साक्षितयावशि

ब्रह्मन्यावदहंकारवारिदःपरिजृंभते ॥ तावद्विकाशमायातितृष्णाकुटजमंजरी ॥ ३८ ॥ निरहंकारवृत्तेर्मेमौर्ख्याच्छोकेनसीदतः ॥ यत्किंचिदुचितंब्रह्मन्तदाख्यातुमिहार्हसि ॥ ३९ ॥ सर्वापदांनिलयमध्रुवमंतरस्थमुन्मुक्तमुत्तमगुणेननसंश्रयामि ॥ यत्नादहंकृतिपदंपरितोऽतिदुःखंशेषेणमांसमनुशाधिमहानुभाव ॥ ४० ॥ दोषैर्जर्जरतांयातंसत्कार्यादार्यसेवितात् ॥ वातांतःपिच्छलववच्चेतश्चलतिचंचलम् ॥ ४१ ॥

ष्टेनानिदमंशेन समनुशाधिसम्यगनुशासनंकुरु । अत्रध्वनितमर्थंवदामः । अहमितिशब्दंकरोत्यहंकृद्द्यौस्तत्रवर्तमानंपदम् । यद्वाहंशब्दविषयाकृतिःप्रयत्नोयस्यागोःसाहंकृतिस्तस्याःपदंपादः । तथाचायमर्थः । अध्रुवंचंचलं अंतरस्थंकुक्षिप्रदेशस्थं उत्तमगुणेनउत्तमरज्ज्वाउन्मुक्तंसंत्यक्तं परितःसमंततोऽतिदुःखंप्रहारादिनाअतिशयितदुःखंयस्मात्तददांतगोष्पदंयथाविवेकीनसंश्रयतेतदहंकारपदंनसंश्रयामीति ॥ ४० ॥ अहंकारनिंदानंतरमहंकारकार्यमनोनिंदति ॥ दोषैरित्यादिभिरेकादशश्लोकैः ॥ चंचलंचेतोदोषैरागादिभिर्जर्जरतांशिथिलतांयातंसत् आर्यसेवितात्कार्यात्निःश्रेयससाधनानुष्ठानलक्षणाच्चलति । अथसत्कार्यादित्येकंपदंचलनकर्तृत्वमात्रेदृष्टांतः । वातांतःपिच्छलववत् वायुमध्यस्थबर्हलेशवत् ॥ ४१ ॥

ननुसतिप्रयोजनेचलनंनदोषायेत्यतआह ॥ इतश्चेति॥ तरबर्थस्यदूरातिशयस्यशतयोजनादिषुपर्यवसानंवारयितुंदीर्घमित्युक्तम्। कौलेयकः श्वा। कौलेयकःसारमेयःकुक्कुरोमृगदंशकः। शुनकोभषकःश्वास्यादित्यमरः ॥ ४२॥ व्यर्थमेवानुधावतीत्यनुपपन्नंकचिदर्थप्राप्तेरपिदर्शनात्तत्राह ॥ प्राप्तेरपीति॥ करंडकमत्रवंशनिर्मितकंडोलम् ॥ ४३॥ नकेवलंचेतसःचलनंव्यर्थमनर्थंदंचेत्याह ॥ क्रूरेणेति॥ जडतामविवेकतांतृष्णैवभार्या तामनुगच्छतीतितृष्णाभार्यानुगामीतेन। यथाशुनींभार्यामनुगच्छताशुनकापरपर्यायेणकौलेयकेनशवोभुक्तोभवतितथाचेतसोक्तविशेषणेनभुक्तोऽस्मिउपद्रुतोऽस्मीत्यर्थः ॥ ४४ ॥ नकेवलंजीवतोमेदुःखकारणंचित्तंमृतस्यनरकतिर्यगादियोनिप्रापककर्मबीजंचेत्याह ॥ अवांत

इतश्चेतश्चसुव्यग्रंव्यर्थमेवाभिधावति ॥ दूराद्दूरतरंदीर्घंग्रामेकौलेयकोयथा ॥ ४२॥ नप्राप्नोतिकचित्किंचित्प्राप्तैरपिमहाधनैः ॥ नांतःसंपूर्णतामेतिकरंडकमिवांबुभिः ॥ ४३॥ क्रूरेणजडतांयातस्तृष्णाभार्यानुगामिना ॥ शवःकौलेयकेनेवब्रह्मन्भुक्तोऽस्मिचेतसा ॥ ४४॥ अवांतरनिपातायशून्येवाभ्रमणायच ॥ तृणंचंडानिलेनेवदूरंनीतोऽस्मिचेतसा ॥ ४५॥ पातालाद्गच्छतापृथ्वींपृथ्व्याःपातालगामिना ॥ कूपकाष्ठंकुदाम्नेववेष्टितोऽस्मिकुचेतसा ॥ ४६॥ मिथ्यैवस्फाररूपेणविचाराद्विसरारुणा ॥ बालोवैतालिकेनेवगृहीतोऽस्मिकुचेतसा ॥ ४७॥ वन्हेरुष्णतरःशैलादपिकष्टतरक्रमः ॥ वज्रादपिदृढोब्रह्मन्दुर्निग्रहमनोग्रहः ४८

रेतिश्लोकद्वयेन ॥ अवांतरनिपातआरूढपातित्यं शून्येभ्रमणं पुरुषार्थसाधनशून्येतिर्यगादियोनौभ्रमणम् तृणपक्षेशून्येभ्रमणंनिराकारेगगनेपरिभ्रमणम् ॥ ४५ ॥ ४६ ॥ नन्वप्राणोह्यमनाःशुभ्रोह्यक्षरात्परतःपरः। इत्यात्मतत्त्वप्रतिपादकश्रुतेस्तवचेतएवनास्तिकुतस्तत्प्रेर्यत्वमित्याशंक्याह ॥ मिथ्यैवेति ॥ स्फाररूपेणभूरिरूपेणविसरारुणाविसरणशीलेन। यथाबालआत्मच्छायादावारोपितवेतालेनगृहीतोभवतितद्वदित्यर्थः। मिथ्यैवस्फारत्वं तद्विचाराद्विसरारुत्वंचचेतोवैतालिकयोःसमानम् ॥ ४७॥ नन्वेवंदुश्चेष्टितंचेतोनिगृह्यतामि

त्यतआह ॥ वन्हेरित्यादि ॥ कष्टतरक्रमःपादविक्षेपआरोहणंयस्यसतथोक्तः । मनोग्रहःमनोभूतम् ॥४८॥ सुमेरून्मूलनान्मेरूत्पाटनात् । व
न्ह्यशनादग्निभक्षणात् ॥४९॥ एवंचित्तनिग्रहोऽतिदुष्करश्चेत्तर्हितमुपेक्ष्यान्यदेवकर्तव्यंपुरुषार्थायेत्यतआह ॥ चित्तमित्यादि ॥ अर्थानामाका
शादिपदार्थानांचित्तंकारणमुपादानकारणम् । तथाचोक्तंसंक्षेपशारीरके । मुक्तामुक्तौविद्वदज्ञौत्वदन्यावाकाशादिक्ष्मावसानंचविश्वम् । स्वा
विद्योत्थंस्वांतनिष्पंदनंतद्विज्ञातव्यंमाग्रहीरन्यथैतदिति । तस्मिंश्चित्तेसतिवर्तमानेजगत्त्रयंतत्कार्यभूतंवर्तते । तस्मिन्कारणेक्षीणेनष्टेसतित
त्कार्यंजगत्क्षीणमेवभवति । अतस्तच्चित्तमेवपुरुषार्थायप्रयत्नतोवक्ष्यमाणाच्चिकित्स्यंचिकित्सनीयं गृहीतव्यमित्यर्थः ॥ ५० ॥ अगवरा

अप्यब्धिपानान्महतःसुमेरून्मूलनादपि ॥ अपिवन्ह्यशनात्साधोविषमश्चित्तनिग्रहः ॥ ४९ ॥
चित्तंकारणमर्थानांतस्मिन्सतिजगत्त्रयम् ॥ तस्मिन्क्षीणेजगत्क्षीणंतच्चिकित्स्यंप्रयत्नतः ॥५०॥
चित्तादिमानिसुखदुःखशतानिनूनमभ्यागतान्यगवरादिवकाननानि ॥ तस्मिन्विवेकवशत
स्तनुतांप्रयातेमन्येमुनेनिपुणमेवगलंतितानि ॥ ५१ ॥ हार्दांधकारशर्वर्यातृष्णयैवदुरंतया ॥
स्फुरंतिचेतनाकाशेदोषकौशिकपंक्तयः ॥ ५२ ॥

त्पर्वतश्रेष्ठात् । शैलवृक्षौनगावगावित्यमरः । तस्मिन्चित्तेतनुतांकृशतां निपुणमेवगलंति सम्यगेवनश्यंतीत्यर्थः । गलंतीतिमन्यइतिसंबंधः
॥ ५१ ॥ मनसस्तृष्णाद्वारानर्थहेतुत्वान्मनोनिंदानंतरंतृष्णांनिंदति हेयत्वाय ॥ हार्देत्यादिचतुर्दशश्लोकैः ॥ हृद्गताहार्दा अंधकारयुक्ताशर्व
र्यंधकारशर्वरीचंद्रिकारहितारात्रिः हार्दाचासावंधकारशर्वरीचेतितथा तयाहार्दांधकारशर्वर्येतितृष्णाविशिष्यते । दुरंतयादुःखावसानया ।
चेतनाकाशेचेतनएवाकाशस्तस्मिन् दोषकौशिकपंक्तयः दोषाःक्रोधादयस्तएवकौशिकाउलूकास्तेषांपंक्तयः । महेंद्रगुग्गुलूलूकव्यालग्रा
हिषुकौशिकइत्यमरः । प्रसिद्धांधकारशर्वरीप्रसिद्धाकाशउलूकपंक्तीनांस्फुरणहेतुरितिप्रसिद्धम् ॥ ५२ ॥

नकेवलंदोषानेवोत्पादयतितृष्णा गुणांश्चनाशयतीत्याह ॥ यांयामिति ॥ अवीतास्थंअविगतासक्तियथाभवतितथा गुणश्रियंगुणशोभां म् ॥ ५३ ॥ विस्तरेणतृष्णांनिंदति ॥ गंतुमिति ॥ आत्मीयमास्पदंस्वस्वरूपंनिरस्ताशेषक्लेशंपरमानंदलक्षणम् । जालमानायः शकुनिप क्षेत्वात्मीयमास्पदंस्वनीडम् ॥ ५४ ॥ निरतिशयदुःखहेतुतयातृष्णांनिंदति ॥ तृष्णाभिधानयेति ॥ अमृतैःसुधाभिःअमृतैरपियथादाहोप शमनंनाशंके तथादग्धोऽस्मीतिसंबंधः ॥ ५५ ॥ ननुधीरस्यविचारवतस्तृष्णानुकूलव्यापाररहितस्यतव कथंतृष्णादाहकरीत्यतआह ॥ भीषयत्यपीति ॥ धीराधैर्ययुक्ताईहाचेष्टायस्यसधीरेहस्तं सहेक्षणेनविचाराख्येनवर्ततइतिसेक्षणस्तं शांताईहाचेष्टायस्यसतथातं खेदजन

यांयामहमवीतास्थंसंश्रयामिगुणश्रियम् ॥ तांतांकृंततिमेतृष्णातंत्रीमिवकुमूषिका ॥ ५३ ॥ गंतुमा स्पदमात्मीयमसमर्थधियोवयम् ॥ तृष्णाजालेविमुह्यामोजालेशकुनयोयथा ॥ ५४ ॥ तृष्णाभिधान यातातदग्धोऽस्मिज्वालयातथा ॥ यथादाहोपशमनमाशंकेनामृतैरपि ॥ ५५ ॥ भीषयत्यपिधीरेहमं धयत्यपिसेक्षणम् ॥ खेदयत्यपिशांतेहंतृष्णाकृष्णेवशर्वरी ॥ ५६ ॥ अनावर्जितचित्तापिसर्वमेवानु धावति ॥ नचाप्नोतिफलंकिंचित्तृष्णाजीर्णेवकामिनी ॥ ५७ ॥ यन्नशक्नोतितत्रापिधत्तेतांडविनींग तिम् ॥ नृत्यत्यानंदरहितंतृष्णाजीर्णेवनर्तकी ॥ ५८ ॥

कव्यापाररहितमपिखेदयतीत्यर्थः ॥ ५६ ॥ अन्यदपितृष्णायादौरात्म्यं वृद्धासत्काभिनीदृष्टांतेनाह ॥ अनावर्जितेति ॥ अनावर्जितमव शीकृतंचित्तंययासातथोक्ता दुर्जनंसज्जनंसर्वमेवानुधावत्यनुसरति पुरुषस्यानुधावनंतृष्णाप्रयुक्तमितितृष्णानुधावतीत्युच्यते । एवमुत्तरत्रा पि तृष्णायाःकर्तृत्वमौपचारिकंद्रष्टव्यम् ॥ ५७॥ प्रकारांतरेणतृष्णांनिंदति ॥ यन्नशक्नोतीति ॥ तांडविनींनर्तनवतींगतिंधत्ते । नृत्यतिगच्छ तीत्यर्थः । गत्वानंदरहितंयथाभवतितथानृत्यति । अशक्यमप्यर्थंसाधयितुंससंभ्रमंगच्छति । तृष्णाचविनैवसुखंकष्टंचेष्टतेइत्यर्थः ॥ ५८ ॥

असाध्येऽपिविषयेजायमानत्वद्दुःपूरत्वास्थिरत्वलक्षणदोषांतराण्याह ॥ पदमिति ॥ ५९॥ एकत्रानवस्थानमेवदर्शयति ॥ क्षणमिति ॥ षट्प
दीअलिनी ॥६०॥ किंबहुनासंक्षेपेणश्रूयतांतृष्णायादौष्ट्यमित्यभिप्रेत्याह ॥ सर्वेति ॥ सर्वेषांसंसारदोषाणांमध्ये ॥६१॥ कस्तर्हितृष्णात्या
गोपायइत्यतआह ॥ लोकोऽयमिति ॥ अयंलोकोजनः उज्झितयात्यक्तया चिंतयापापभूतयाखिलंदुःखमुज्झतित्यजतीत्यविवादम् ॥ त
त्रचिंतात्यागो दुःखकारणभूततृष्णात्यागसंपादनद्वारैवदुःखस्याखिलस्यत्यागहेतुरितियुक्तं अतआह ॥ तृष्णाविषूचिकेति ॥ हिशब्दःप्र

पदंकरोत्यलंघ्येऽपितृप्तापिफलमीहते ॥ चिरंतिष्ठतिनैकत्रतृष्णाचपलमर्कटी ॥ ५९ ॥ क्षणमा
यातिपातालेक्षणंयातिनभस्तलम् ॥ क्षणंभ्रमतिदिक्कुंजेतृष्णाहृत्पद्मषट्पदी ॥ ६० ॥ सर्वसंसा
रदोषाणांतृष्णैकादीर्घदुःखदा ॥ अंतःपुरस्थमपियायोजयत्यतिसंकटे ॥ ६१ ॥ लोकोऽयमखि
लंदुःखंचिंतयोज्झितयोज्झति ॥ तृष्णाविषूचिकामंत्रश्चिंतात्यागोहिकथ्यते ॥ ६२ ॥ रोगार्तिरं
गनातृष्णागंभीरमपिमानवम् ॥ उत्तानतांनयत्याशुसूर्यांशवइवांबुजम् ॥ ६३ ॥ नासिधारा
नवज्राग्निर्नतप्तायःकणार्चिषः ॥ तथातीक्ष्णायथाब्रह्मन्तृष्णेयंहृदिसंस्थिता ॥ ६४ ॥ अपिमे
रूपमंप्राज्ञमपिशूरमपिस्थिरम् ॥ तृणीकरोतितृष्णैषानिमिषेणनरोत्तमम् ॥ ६५ ॥

सिद्धौ । चिंतात्यागोविषयचिंतात्यागः तृष्णाविषूचिकामंत्रः कथ्यतेहीत्यन्वयः । तृष्णैवविषूचिकाख्योरोगःतन्निवर्तनोमंत्रस्तृष्णाविषू
चिकामंत्रः विषयेषुरमणीयत्वचिंतयाहितत्रतृष्णाजायते तत्रचिंतापरित्यागेनरागापरपर्यायातृष्णानजायते अतोयुक्तमुक्तंचिंतात्यागस्तृ
ष्णाविषूचिकामंत्रइति ॥६२॥ सर्वदोषाणांमध्येतृष्णादीर्घदुःखदेत्युक्तंद्रढयितुं पुनस्तृष्णांनिंदति ॥ रोगार्तिरित्यादिश्लोकत्रयेण॥ उत्तानतां
स्तनंधयप्रसिद्धावाङ्मुखशायितविरोधिनीशरीरसंस्था ॥६३॥ वज्राग्निरशनिदहनः तप्तायःकणार्चिषस्तप्तलोहकणानांज्वालाः॥६४॥६५॥

एवं मुधैवाभ्युत्थितोमोहादित्यादिभिरपिमेरूपमंप्राज्ञमित्येतदंतैर्लिंगशरीरंसधर्मंविनिंद्य स्थूलशरीरंनिंदति ॥ आर्द्रेत्यादिभिर्नवभिः ॥ अंत्राणिशिराः आर्द्रांत्राण्येवतंत्र्यस्ताभिर्गहनोदुःप्रवेशआर्द्रांत्रतंत्रीगहनः । परितापवान्परितस्तापोदुःखंतद्वान् । परिपातवानितिक्वचित् । शिरस्तुंबकनिबद्धैककोटिःकायःकुवीणादंडवत्स्फुरतिप्रकाशते ॥ ६६ ॥ स्तोकेनाल्पेन ॥ ६७ ॥ कलेवरमिति ॥ कलेवरंशरीरं अहंकारएवगृहस्थस्तस्यलुंठतुपर्यंतुनश्यत्विसर्थः । ममासंगस्यानेनकलेवरेणाकिं नकिमपिभवति ॥ ६८ ॥ पंक्तिबद्धेंद्रियपशुं पंक्तिरूपेणबद्धादशेंद्रियपशवोयस्मिंस्तत्तथा । चलत्तृष्णागृहांगनं तृष्णैवगृहांगना चलतोगृहांगनायस्मिंस्तत्तथा । चित्तभृत्यकृतानंदं चित्तमेवभृत्यस्तस्मिन्ने

आर्द्रांत्रतंत्रीगहनोविकारीपरितापवान् ॥ कायःस्फुरतिसंसारेसोऽपिदुःखायकेवलम् ॥ ६६ ॥
स्तोकेनानंदमायातिस्तोकेनायातिखेदताम् ॥ नास्तिदेहसमःशोच्योनीचोगुणविवर्जितः ॥
॥ ६७ ॥ कलेवरमहंकारगृहस्थस्यमहागृहम् ॥ लुंठत्वभ्येतुवास्थैर्यंकिमनेनमुनेमम ॥ ६८ ॥
पंक्तिबद्धेंद्रियपशुंचलत्तृष्णागृहांगनन् ॥ चित्तभृत्यकृतानंदंनेष्टंदेहगृहंमम ॥ ६९ ॥ जिव्हामर्कटिकाक्रांतवदनद्वारभीषणम् ॥ दृष्टदंतास्थिशकलंनेष्टंदेहगृहंमम ॥ ७० ॥ किंश्रियाकिंचराज्येनकिंकायेनकिमीहया ॥ दिनैःकतिपयैरेवकालःसर्वंनिकृंतति ॥ ७१ ॥

वकृतउत्पादितआनंदोयेनतत्तथोक्तम् । यथालोकेपंक्तिबद्धादांतानेकपशुभिर्निरवकाशीकृतं परगृहगमनादीक्षयाचलदंगनं भृत्यार्यैवदत्तानंदंगृहंविवेकिनइष्टंनभवति तथाममापिदेहमित्यर्थः ॥ ६९ ॥ जिव्हेति ॥ जिव्हामर्कटिकाक्रांतवदनद्वारभीषणम् । जिव्हैवमर्कटिकातयाक्रांतेनवक्त्रापरपर्यायवदनद्वारेण भीषणंभयंकरम् । दृष्टदंतास्थिशकलं दंताएवास्थिशकलानि दृष्टानिदंतास्थिशकलानियस्मिंस्तत्तथोक्तम् ॥ ७० ॥ किंश्रियेति ॥ श्रीर्धनधान्यादिसंपत्तिः ईहाचेष्टा ॥ ७१ ॥

॥ ७२ ॥ ७३ ॥ विग्रहेशरीरे ॥ ७४ ॥ एवंदेहंविनिंद्यतदवस्थांविनिंदितुंप्रवर्तमानो बाल्यमादौनिंदति ॥ लब्ध्वापीत्यादिभिरष्टभिःश्लोकैः ॥ अपिशब्दोगर्हायाम् । गर्हासमुच्चयप्रश्नशंकासंभावनास्वपीत्यमरः । तरलाकारेचंचलाकारे कार्यभारतरंगिणि कार्याणांकर्तव्यानामिहलौकिकपारलौकिकानांभारास्तरंगायस्मिन्संसारसागरे सतथोक्तस्तस्मिन् । जन्मलब्ध्वापिवर्तमानस्येत्यध्याहारः ॥ ७५ ॥ अशक्ति

रक्तमांसमयस्यास्यसबाह्याभ्यंतरंमुने॥नाशैकधर्मिणोब्रूहिकैवकायस्यरम्यता॥७२॥जराकालेजरामेति मृतिकालेतथामृतिम् ॥सममेवाविशेषज्ञःकायोभोगिदरिद्रयोः॥७३॥तडित्सुशरदभ्रेषुगंधर्वनगरेषुच॥ स्थैर्यंयेनविनिर्णीतंसविश्वसतुविग्रहे॥ ७४ ॥ लब्ध्वापितरलाकारेकार्यभारतरंगिणि ॥ संसारसागरेजन्मबाल्यंदुःखायकेवलम् ॥ ७५ ॥ अशक्तिरापदस्तृष्णामूकतामूढबुद्धिता ॥ गृध्नुतालोलतादैन्यं सर्वंबाल्येप्रतिष्ठितम् ॥ ७६ ॥ मनःप्रकृत्यैवचलंबाल्यंचंचलतापरम् ॥ तयोःसंश्लिष्यतोस्तातकइवांतःकुचापले ॥ ७७ ॥ स्त्रीलोचनैस्तडित्पुंजैर्ज्वालामालैस्तरंगकैः ॥ चापलंशिक्षितंब्रह्मन्शैशवाक्रांतचेतसः॥७८॥ स्तोकेनवशमायातिस्तोकेनैवविकारिताम्॥अमेध्यएवरमतेबालःकौलेयकोयथा ॥७९॥

रिति ॥ तृष्णाअर्थमात्रविषयाकांक्षा गर्धोऽर्थविशेषविषयाभिकांक्षालोलुपता ॥७६ ॥ मनइति ॥ संश्लिष्यतोःसंमिलितयोःसतोः कुचापलेकुत्सितचापलत्वे कोऽन्तोऽस्ति नकोऽपि कुचापलत्वस्यांतएवनास्तीत्यर्थः । कइवेत्यत्रइवशब्दोऽवधारणे ॥७७॥ शैशवाक्रांतचेतसः शैशवंशिशुत्वंतेनाक्रांतंचेतोयस्यसतथोक्तस्तस्माद्बाल्यात् । यद्वाशैशवाक्रांतंचतच्चेतश्चतस्मात् ॥ ७८ ॥ स्तोकेनेति ॥ स्तोकोऽल्पः । कौलेयकःशुनकः ॥ ७९ ॥

भुवनंभोक्तुंयत्किंचिद्दृष्टंतद्भक्षयितुम् । अंबरादाकाशात् लवणाक्तफलशकलशालिदध्योदनकवलशंकयेंदुमादातुंचयेनमौर्ख्येणवांछतेइच्छ ति तन्मौर्ख्यंमौढ्याद्यपरपर्यायंसुखायकथंभवेत् नकथंचित् ॥ ८० ॥ शैशवेशिशुत्वेज्येष्ठबालात् वयोधिकबालात् ॥ ८१ ॥ बाल्यं दुःखायकेवलमितिप्रतिज्ञायप्रसाधितमुपसंहरति ॥ सकलेति ॥ दोषारागादयः सकलाभिर्दोषदशाभिरभिहतउपद्रुतआशयोंऽतःकरणंय स्मिंस्तत्तथा । अविवेकविलासिनोभवनमपि अविवेकविटस्यास्पदंचबाल्यमिहसंसारे कस्यचिदपिपुरुषस्यालमत्यर्थंपरितुष्टयेपरितोषाय

संहृष्टोभुवनंभोक्तुमिंदुमादातुमंबरात् ॥ वांछतेयेनमौर्ख्येणतत्सुखायकथंभवेत् ॥ ८० ॥ शैशवेगुरु तोभीतिर्मातृतःपितृतस्तथा ॥ जनतोज्येष्ठबालाच्चशैशवंभयमंदिरम् ॥ ८१ ॥ सकलदोषदशाभिह ताशयंभवनमप्यविवेकविलासिनः ॥ इहनकस्यचिदेवमहामुनेभवतिबाल्यमिदंपरितुष्टये ॥ ८२ ॥ बाल्यावस्थामथत्यक्त्वापुमानभिहताशयः ॥ आरोहतिनिपाताययौवनंसंभ्रमेणतु ॥ ८३ ॥ स्वचित्त बिलसंस्थेननानाविभ्रमदायिना ॥ बलात्कामपिशाचेनविवशःपरिभूयते ॥ ८४ ॥ विस्तीर्णापिप्रस न्नापिपावन्यपिहियौवने ॥ मतिःकलुषतामेतिप्रावृषीवतरंगिणी ॥ ८५ ॥

नभवति प्रत्युतात्यंतदुःखायैवभवतीत्याशयः ॥ ८२ ॥ अनेकदोषास्पदंबाल्यंभवतुनामदुःखाय यौवनंतुशक्तत्वपटुवाक्त्वादिगुणवत्त्वात्सुखा यभवतीत्याशंक्य सप्तभिःश्लोकैस्तन्निंदति ॥ बाल्येति ॥ अभिहतः कामादिभिरुपद्रुतआशयोंऽतःकरणंयस्यसतथा । निपातायदौवना द्भ्रंशाय ॥ ८३ ॥ स्वचित्तमेवबिलंछिद्रंतस्मिन्संस्थासम्यक्स्थितिर्यस्यसतथोक्तःतेन नानाविभ्रमदायिना कामःस्त्रीविषयःसएवपिशाच स्तेन ॥ ८४ ॥ विस्तीर्णाबह्वर्थदर्शिनी कलुषतांआविलताम् ॥ ८५ ॥

शरीरमरुतापोत्थां शरीरमेवमरुभूमिस्तत्रकालानुगृहीतवैश्वानरतापादुत्पन्नाम्। युवतामृगतृष्णिकाम्। युवतांमृगतृष्णिकामितिवापाठः।
युवतायौवनंतदेवमृगतृष्णिकामरीचिकोदकताताम्। अवटोगर्तः ॥ ८६ ॥ यौवनस्यप्रारंभेदोषमाख्यायाभिवृद्धौतमाह ॥ यदेति ॥ परां
कोटिमुपरितनंविभागं यौवनंयदायदाभिवृद्धिंप्राप्नोतीत्यर्थः। ज्वरोऽत्रकामजः कामाःकामिनः ॥ ८७ ॥ एवंयौवनदोषानाख्याय तत्प्रयु
क्तकामादिनेहपरयोर्दुःखबीजंसंपाद्य ततोनिर्गतान्स्तौति तन्निस्तारेमहान्यत्नःकर्तव्योमुमुक्षुणेतिदर्शयितुम् ॥ तेवंद्याइति ॥ ८८ ॥
यौवनस्यदोषास्पदत्वमुक्त्वागुणवैधुर्यमाह ॥ विनयेति ॥ आवलितं आवेष्टितं इहजगतीतिसंबंधः ॥ ८९ ॥ यौवनस्यस्त्रीद्वाराप्रायेणान

शरीरमरुतापोत्थांयुवतामृगतृष्णिकाम् ॥ मनोमृगाःप्रधावंतःपतंतिविषयावटे ॥ ८६ ॥ यदायदाप
रांकोटिमध्यारोहतियौवनम् ॥ वल्गंतिसज्वराःकामास्तदानाशायकेवलम् ॥८७॥ तेवंद्यास्तेमहात्मा
नस्तएवपुरुषाभुवि ॥ येसुखेनसमुत्तीर्णाःसाधोयौवनसंकटात् ॥ ८८ ॥ विनयभूषितमार्यजनास्पदं
करुणयोज्ज्वलमावलितंगुणैः ॥ इहहिदुर्लभमंगलयौवनंजगतिकाननमंबरगंयथा ॥ ८९ ॥ मांसपां
चालिकायास्तुयंत्रलोलेऽगपंजरे ॥ स्नाय्वस्थिग्रंथिशालिन्याःस्त्रियाःकिमिवशोभनम् ॥ ९० ॥

र्थकरत्वात्तन्निंदानंतरं तदनर्थकरणद्वारंस्त्रियंनिंदति ॥ मांसेत्यादिना ॥ पांचालिकावस्त्रादिकृतापुत्रिका। पांचालिकापुत्रिकास्याद्वस्त्रदंता
दिनिर्मितेत्यमरः। मांसपांचालिकायाः मांसनिर्मितपुत्रिकायाःस्नाय्वस्थिग्रंथिशालिन्याः स्नायवोवस्नसाःदेहबंधनानि । अत्रंपुरीतद्गुल्म
स्तुप्लीहापुंस्यथवस्नसा। स्नायुःस्त्रियांकालखंडयकृतीतुसमेइमेइत्यमरः। स्नायूनामस्थीनांचग्रंथिभिः। यद्वास्नायुभिरस्थिभिर्मांसग्रंथिभिश्च
शालतेशोभतेइतितथोक्तातस्याःस्त्रियाअंगपंजरेअंगनीडे कीदृशेयंत्रलोलेजलयंत्रादिवच्चंचले ॥ ९० ॥

ननुयस्यालोघनेलोलेंदावररमणीये स्तनौचपरिलुठद्धवलहारवलितौकनककलशरुचिरौ तस्याःस्त्रियाः अंगपंजरेकिमिवशोभनमितिकथ माक्षिप्यतइतिशंकां श्लोकत्रयेणपरिहरति ॥ त्वगित्यादिना॥ बाष्पांबुअश्रुःत्वङ्मांसेत्यादिद्वंद्वैकवद्भावः त्वङ्मांसादिसमूहात्मकंहिलोचनं तत्त्वदृष्ट्यारम्यंचेत्तर्हि त्वगापिकंपृथक्कृत्य लोचनंसमालोचयसम्यक्पश्य मुधावृथा ॥९१॥ यस्मिंस्तने मुक्ताहारस्योल्लासशालिता मेरुशृंग तटोल्लासिगंगाजलरयोपमादृष्टासललनास्तनएव दिगंतेषुश्मशानेषु अंधसोलघुपिंडइव कालेश्वभिरास्वाद्यतइतिद्वितीयेनान्वयः । मेरुशृं गतटेउल्लसत्युद्दीप्यतइतिमेरुशृंगतटोल्लासि । यद्वा मेरुशृंगतटेउल्लासिउच्चलत्गंगाजलंतस्यरयेणवेगेनउपमायस्याउल्लासशालितायाः उल्ला

त्वङ्मांसरक्तबाष्पांबुपृथक्कृत्वाविलोचनम् ॥ समालोकयरम्यंचेत्किंमुधापरिमुह्यसि ॥ ९१ ॥ मेरुशृंग तटोल्लासिगंगाजलरयोपमा ॥ दृष्टायस्मिन्स्तनेमुक्ताहारस्योल्लासशालिता ॥ ९२ ॥ श्मशानेषुदि गंतेषुसएवललनास्तनः ॥ श्वभिरास्वाद्यतेकालेलघुपिंडइवांधसः ॥९३॥ केशकज्जलधारिण्योदुःस्पर्शा लोचनप्रियाः ॥ दुष्कृताग्निशिखानार्योदहंतितृणवन्नरान् ॥९४॥ ज्वलतामतिदूरेऽपिसरसाअपिनीर साः ॥ स्त्रियोहिनरकाग्नीनामिंधनंचारुदारुणम् ॥ ९५ ॥

सेनोल्लुंठनेनशालतेशोभतइत्युल्लासशालीतस्यभावस्तत्ता। अंधसोऽन्नस्य। भिस्सास्त्रीभक्तमंधोऽन्नमोदनोऽस्त्रीत्यमरः॥९२॥९३॥केशेति ॥ केशकज्जलधारिण्यः केशाएवकज्जलानिमष्यः तानिधारयंतीतितथा दुःखदत्वात्। दुःस्पर्शादुष्कृताग्निशिखाः दुष्कृतानिपापान्येवाग्नयस्तेषां शिखाज्वालाः ॥९४॥ ज्वलतामिति ॥ स्त्रियोऽतिज्वलतांनरकाग्नीनां चारुदारुणमिंधनंभवतीतिसंबंधः। चारुशब्देनाद्भुतत्वमत्रविवक्षितम्। दारुणंभयंकरं स्त्रीणांचार्विंधनीभावंसाधयितुंविशेषणम् ॥ सरसाअपिनीरसाइति ॥ रसःसारः भ्रांतदृष्ट्यासरसाअपि तदितरया निःसारानी रसाइत्यर्थः। रसशब्देनद्रवोऽप्युच्यते। इंधनंहिलोकेसरसंनीरसंवाभवति नोभयात्मकं स्त्रियस्तुयतःसरसाअपिनीरसाः अतश्चार्विंधनंभव

ति । यतोदूरेस्थिताअपिनरकलक्षणाग्नीनुद्दीपयंति अतोऽपिचार्विधनंदारुणेंधनंचभवति ॥ ९५ ॥ कामनाम्नेति ॥ नार्यो मुग्धचेतसांमूढ चित्तानां नरविहंगानांनरपक्षिणां कामनाम्नाकिरातेनविकीर्णाविक्षिप्ता अंगबंधनवागुरा अवयवबंधनजालानिभवंति । अंगेतिसंबोधनंवा । मृगबंधनवाचकेनवागुराशब्देनेहजालानिलक्ष्यंते ॥९६॥ जन्मपल्वलमत्स्यानां जन्मैवपल्वलमल्पसरः । वेशंतःपल्वलंचाल्पसरोवापीतुदीर्घि केत्यमरः । तस्यमत्स्यानां चित्तमेवकर्दमःपंकस्तच्चारिणांपुंसांग्रहणाय दुर्वासनैवाविवेकाख्यकैवर्तहस्तस्थारज्जुर्भवति नारीतुबडिशपिंडि काभवति । बडिशस्यमत्स्यवेधस्य रज्ज्वग्रवर्तिलोहादिशंक्वग्रनिहितमत्स्याहारपिंडोभवतीत्यर्थः ॥ ९७ ॥ एवंस्त्रीदोषान्प्रदर्श्यतत्परिज्ञानफ

कामनाम्नाकिरातेनविकीर्णामुग्धचेतसाम् ॥ नार्योनरविहंगानामंगबंधनवागुराः ॥ ९६ ॥ जन्मपल्व लमत्स्यानांचित्तकर्दमचारिणाम् ॥ पुंसांदुर्वासनारज्जौनारीबडिशपिंडिका ॥९७॥ सर्वेषांदोषरत्नानां सुसमुद्गिकयानया ॥ दुःखशृंखलयानित्यमलमस्तुममस्त्रिया ॥ ९८ ॥ इतोमांसमितोरक्तमितोऽस्थी नीतिवासरैः ॥ ब्रह्मन्कतिपयैरेवयातिस्त्रीविसरारुताम् ॥ ९९ ॥ यस्यस्त्रीतस्यभोगेच्छानिस्त्रीकस्य क्वभोगभूः ॥ स्त्रियंत्यक्त्वाजगत्त्यक्तंजगत्त्यक्त्वासुखीभवेत् ॥ १०० ॥

लमाह ॥सर्वेषामिति॥ दोषाएवरत्नानितेषां समुद्गिकयाशोभनसंपुटिकया । समुद्गकः संपुटकइत्यमरः । शृंखलया दुःखप्रदशृंखलारूपयास्त्रिया अलमस्तुअलंशब्दोवारणे । अलंभूषणपर्याप्तिशक्तिवारणवाचकइत्यमरः॥९८॥अस्थिरत्वाच्चालंस्त्रियेत्याह ॥ इतइति ॥ विसरारुतांविसरणशी लताम् ॥९९॥ ननुभोगेच्छायांसत्यामलमस्तुममस्त्रियेतिकथमुच्यतेतत्राह ॥ यस्यस्त्रीति ॥ यस्यपुंसःस्त्र्यस्तितस्यभोगेच्छास्ति भोगेच्छा भावेनिपुणस्यतत्परिग्रहासंभवात् निस्त्रीकस्य स्त्रीपरिग्रहवर्जकस्यभोगभूःक्व भोगेच्छाक्वत्रनक्वत्रापि । भोगेच्छायांसत्यांतत्परिग्रहवर्जनासं भवात् । भवत्वेवंतथापिस्त्रीत्यागमात्रात्किंभवेत्तत्राह ॥ स्त्रियमिति ॥ १०० ॥

प्रकरणार्थमुपसंहरति ॥ आपातेति ॥ विषयाणामिंद्रियाणांप्रत्यापतनमापातोविषयेंद्रियसंबंधः। आपातमात्रेआपातसमयएवरमयंतीतित थातेषु आपातमात्रतोरमणंरतिर्येभ्यस्तेतथातेष्विविवा। दुस्तरेषुअलिपक्षतिचंचलेषुभ्रमरपक्षांशचंचलेषु। यथाहुः। पक्षतिःपक्षमूलंस्यात्पक्षांश श्चेति ॥१०१॥ यौवनस्यप्रायेणानर्थकरणद्वारंस्त्रियंनिंदित्वा यौवनानंतरभाविनींजरामुत्तरग्रंथसंदर्भेणानिंदितुंप्रस्तौति बाल्यादीनांबाध्यबा धकभावंदर्शयन् ॥ अपर्याप्तमिति ॥ अपर्याप्तमसमर्थयौवनरक्षः संतृप्तयेबालत्वंबालभावंपिबति। यौवनंचजराबलातिपबति। कर्कशतांक्रूर

आपातमात्ररमणेषुसुदुस्तरेषुभोगेषुनाहमलिपक्षतिचंचलेषु ॥ ब्रह्मन्रमेमरणरोगजरादिभीत्याशाम्याम्यहंपरमुपैमिपदंप्रयत्नात् ॥१०१॥ अपर्याप्तंहिबालत्वंबलातिपबतियौवनम् ॥ यौवनंचजरापश्चात्पश्यकर्कशतांमिथः ॥ १०२ ॥ अनायासकदर्थिन्यागृहीतेजरयाजने ॥ पलाय्यगच्छतिप्रज्ञासपत्न्येवाहतांगना ॥१०३॥ दासाःपुत्राःस्त्रियश्चैवबांधवाःसुहृदस्तथा ॥ हसंत्युन्मत्तकमिवनरंवार्धककंपितम् ॥१०४॥ दुःप्रेक्ष्यंजरठंदीनंहीनंगुणपराक्रमैः ॥ गृध्रोवृक्षमिवादीर्घंगर्धोह्यभ्येतिवार्धकम् ॥१०५॥ दैन्यदोषमयीदीर्घाहृदिदाहप्रदायिनी ॥ सर्वापदामेकसखीवार्धकेवर्धतेस्पृहा ॥१०६॥ कर्तव्यंकिंमयाकष्टंपरत्रेत्यातिदारुणम् ॥ अप्रतीकारयोग्यंहिवार्धकेवर्धतेभयम् ॥१०७॥ गर्धोऽभ्युदेतिसोल्लासमुपभोक्तुंनशक्यते ॥ हृदयंदह्यतेनूनंशक्तिदौःस्थ्येनवार्धके ॥ १०८ ॥

तामित्यर्थः ॥१०२॥ अनायासकदर्थिन्येत्यादिश्लोकाः स्पष्टार्थाः। तत्रकानिचित्पदानिव्याख्यायंते। अनायासेनकदर्थयतिक्लेशयतीत्य नायासकदर्थिनी ॥१०३॥१०४॥ जरठंवृद्धं गर्धोऽर्थेविशेषविषयेच्छा ॥ १०५ ॥ स्पृहाअर्थमात्रविषया ॥ १०६ ॥ परत्रातिदारुणंकष्टंभ विष्यति मयाकिंकर्तव्यमित्यप्रतीकारयोग्यंभयम् ॥ १०७ ॥ सोल्लासंससंभ्रममित्यर्थः। शक्तिदौःस्थ्येनशक्तिमांद्येनेतियावत् ॥१०८॥

जरैवपलितयुक्ताक्षारंभस्मतेनविधूसरमीषत्पांडु कूष्मांडफलंह्युपरिभागेभस्मसदृशवर्णेनविधूसरंभवति ॥ १०९ ॥ जरैवपलितयुक्ताधवलं चामरंयस्यांपताकिन्यांसातथोक्ता पताकिनीसेना आगच्छतोमरणस्यराज्ञोऽग्रइतिसंबंधः ॥ ११० ॥ सुधाचूर्णादिविकारः ॥ १११ ॥ किंबहुनाजरागतस्यजीवनादनेकयातनास्पदाद्वरंमरणमेवेत्याह ॥ किंतेनेति ॥ जरांगतेनबहुयातनापात्रभूतेनापिजीव्यतेयत् तेनदुर्जी वितदुर्ग्रहेण दुर्जीवितदुरभिनिवेशेनकिम् । दिग्विजयिभिरप्यजिताजरा । यतः ज्ञानाद्याक्रमति । महादुःखदायित्वेनसर्वेषणास्तिरस्करो

परिपक्वमिवालोक्यजराक्षारविधूसरम् ॥ शिरःकूष्मांडकंभुंक्तेपुंसांकालःकिलेश्वरः ॥ १०९ ॥ मरणस्य मुनेराज्ञोजराधवलचामरा ॥ आगच्छतोऽग्रेनिर्यातिह्याधिव्याधिपताकिनी ॥ ११० ॥ जरासुधालेप सितेशरीरांतःपुरांतरे ॥ अशक्तिरार्तिरापच्चतिष्ठंतिसुखमंगनाः ॥ १११ ॥ किंतेनदुर्जीवितदुर्ग्रहेणज रांगतेनापिहिजीव्यतेयत् ॥ जराजगत्यामजिताजनानांसर्वेषणास्तातातिरस्करोति ॥ ११२ ॥ क्वचि द्वाविद्यतेयेषांसंसारेसुखभावना ॥ आखुस्तंतुमिवाशेषंकालस्तामपिकृंतति ॥ ११३ ॥ नतदस्तीहयद यंकालःसकलघस्मरः ॥ ग्रसतेनजगज्जातंमहाब्धिमिववाडवः ॥ ११४ ॥

ति । अतिमहताजरादुःखेनाकुलितचित्तःतद्दुःखनिवृत्तिमेवाशास्ते नान्यदित्याशयः ॥ ११२ ॥ एवमतीतग्रंथसंदर्भेण दुःखशतसंकुलेसं सारे निरवद्यंसुखंक्वापिनास्तीतिनिर्धारितम् । संप्रतिसुखाभ्युपगमेऽपि तस्यभोक्तृभोग्यभोगात्मकस्यानित्यत्वदोषान्नमुक्तिरस्तीत्युत्तरग्रंथसं दर्भेणप्रतिपादयति । तत्रसुखस्यानित्यत्वंतावदाह ॥ क्वचिदिति ॥ वाशब्दोमतांतरद्योतनार्थः ॥ ११३ ॥ ननुसुखजनकविषयजातस्य नित्यत्वे सुखस्यापिप्रवाहरूपेणनित्यत्वंसंभवेदित्यतआह ॥ नतदिति ॥ घस्मरोभक्षणशीलः । भक्षकोघस्मरोऽद्मरइत्यमरः ॥ ११४ ॥

वराकाणांकालाद्भयेसत्यपिमहात्मनांनतदस्तीत्यत्राह ॥ महतामिति ॥ ११५ ॥ रमणीयत्वसत्कर्मत्वगुणाकरत्वान्यपि कालनिवारकाणिनभवंतीत्याह ॥ येरम्याइति ॥ शुभआरंभोयेषांतेतथा ॥ ११६ ॥ नन्वनंतपदार्थविचित्रमध्ये कालाग्रस्तंकिंचित्संभावितमित्यतआह ॥ तृणमिति ॥ आत्मंभरितयास्वोदरपूरकतया । उभौत्वात्मंभरिःकुक्षिंभरिःस्वोदरपूरकावित्यमरः ॥११७॥ सर्वमात्मसात्कर्तुमुद्यतइत्यनेन कालस्यसर्वसंहर्तृत्वमुक्तंप्रपंचयति ॥ कालोऽयमित्यादिना ॥ महाकल्पेषुराजतइत्यंतेनग्रंथसंदर्भेण ॥ तत्रप्रथमंप्राकृतप्रलये ब्रह्मांडसंहर्तृत्वमाह ॥ कालोऽयमिति ॥ भूतान्येवमशकास्तत्कृतोघुंघुमःध्वनिर्येषुतेतथातेषां ब्रह्मांडान्येवोडुंबरफलानितेषामोघाःसमूहा ब्रह्मांडोदुं



महतामपिनोदेवःपरिपालयतिक्षणम् ॥ कालःकवलिताशेषविश्वोविश्वात्मतांगतः ॥ ११५ ॥ येरम्यायेशुभारंभाःसुमेरुगुरुवोऽपिये ॥ कालेनविनिर्गीर्णास्तेगरुडेनेवपन्नगाः ॥ ११६ ॥ तृणंपांशुंमहेंद्रंचसुमेरुंपर्णमर्णवम् ॥ आत्मंभरितयासर्वमात्मसात्कर्तुमुद्यतः ॥ ११७ ॥ कालोऽयंभूतमशकघुंघुमानांप्रपातिनाम् ॥ ब्रह्मांडोदुंबरौघानांबृहत्पादपतांगतः ॥ ११८ ॥ प्रेक्ष्याहर्विनिमेषेणसूर्याक्षणापाकवत्फलम् ॥ लोकपालफलान्यत्तिजगज्जीर्णवनादयम् ॥११९॥ जगज्जीर्णकुटीकीर्णान्निक्षिपत्युग्रकोटरे ॥ क्रमेणगुणवल्लोकमणीन्मृत्युसमुद्गके ॥ १२० ॥

बरौघास्तेषां बृहत्पादपतांस्थूलवृक्षताम् ॥ ११८ ॥ ब्रह्मांडसंहर्तृत्वेकालस्याभिहिते तदंतर्वर्तिसंहर्तृत्वंयद्यपिसिद्धं तथाप्यनित्यत्वबुद्धिदार्ढ्यार्थं पृथक्तदंतःस्थवस्तुसंहर्तृत्वंदर्शयन्नादौलोकपालसंहर्तृत्वमाह ॥ प्रेक्ष्येति ॥ अविगतोनिमेषोऽस्तमयसमयलक्षणो यस्मात्सूर्याक्ष्णस्तदहर्विनिमेषं तेन ॥ ११९ ॥ पालकसंहर्तृत्वमुक्त्वापाल्यसंहर्तृत्वमाह ॥ जगदित्यादिश्लोकद्वयेन ॥ जगदेवजीर्णकुटी तस्यांकीर्णान्विक्षिप्तान् गुणवंतोलोकाएवमणयस्तान् उग्रःकोटरःछिद्रंयस्यसमुद्गकस्य सतथातस्मिन्मृत्युरेवसमुद्गकस्तस्मिन्निक्षिपति ॥ १२० ॥

स्थितिकालेतामंगेकृत्वासंहारकालेनिकृंतति ॥ १२१ ॥ प्रकारांतरेणकालस्यलोकसंहर्तृत्वं दर्शयति ॥ अस्यैवेत्यादिना कोदंडःपरिस्फु रतिसर्वतइत्यंतेनग्रंथसंदर्भेण ॥ वातभूयिष्ठदेशाभिधायकेनजांगलशब्देनात्रमृगयायोग्यादेशालक्ष्यंते । जालकंसमूहः जगज्जांगलजालके भूतमृगवृंदैरांखेटकं मृगयांचरतोऽस्यैवकालनाम्नोराजकुमारस्य कल्पकालमहार्णवः क्रीडापुष्करिणीत्येवमादिभिरुत्तरग्रंथसमूहप्रतिपाद्यै रथैंःसंबंधः । वडवानलएवपंकजं एकदेशेउल्लसच्चारुवडवानलपंकजंयस्यांसातथा ॥ १२२ ॥ १२३ ॥ मृगयाचरणजनितश्रमापनोद नाय पुष्करिणींप्रदर्श्य कालराजकुमारस्य मृगयानिर्गमनात्पूर्वंभोजनंदर्शयति ॥ कट्विति ॥ कटुतिक्ताम्लानिभूतानिप्राणिनआद्यानिये

गुणैरापूर्यतेयैवलोकरत्नावलीभृशम् ॥ भूषार्थमिवतामंगेकृत्वाभूयोनिकृंतति ॥ १२१ ॥ अस्यैवाचर तोदीनैर्मुग्धैर्भूतमृगव्रजैः ॥ आखेटकंजर्जरितैर्जगज्जांगलजालके ॥ १२२ ॥ एकदेशोल्लसच्चारुवड वानलपंकजा ॥ क्रीडापुष्करिणीरम्याकल्पकालमहार्णवः ॥ १२३ ॥ कटुतिक्ताम्लभूताद्यैःसदधिक्षी रसागरैः ॥ तैरेवयैःपर्युषितैर्जगद्भिःकल्पवर्तनम् ॥ १२४ ॥ चंडीचतुरसंचारासर्वभ्रातृगणान्विता ॥ संसारवनविन्यस्ताव्याघ्रीभूतौघघातिनी ॥१२५॥ पृथ्वीकरतलेपृथ्वीपानपात्रीरसान्विता ॥ कमलो त्पलकल्हारलोलजालकमालिता ॥ १२६ ॥

षुतानितथातैः नानारसयुक्तभूतोपदंशानांदधिक्षीरसागरोपसेचनानांजगदन्नानां पर्युषितत्वेहेतुमाह ॥ तैरिति ॥ यानियानिकल्पादौ स्थितानितानितान्येवजगंतिकल्पांतेऽपितिष्ठंतीतिपर्युषितत्वं कल्पवर्तनमुषःकालभोजनम् । प्रत्यूषोऽहर्मुखंकल्पमुषःप्रत्युषसीअपीत्यमरः ॥ १२४ ॥ मृगयामाचरतःकालस्य शुनीस्थानीयांव्याघ्रींदर्शयति ॥ चंडीति ॥ चंडीजरा ॥ १२५ ॥ तस्यमद्यपानायकरतलन्यस्तांपा त्रींदर्शयति ॥ पृथ्वीति ॥ पृथ्वीभूमिरेव कालस्यकरतलेपानपात्रीभवति साचानल्पेत्याह ॥ पृथ्वीति ॥ रसान्वितामद्यरसान्विता मद्य

स्यसौगंध्यार्थं कमलोत्पलकह्लाराणांलोलेनजालकेनसमूहेनमालितासंवलितेत्यर्थः । कह्लारंसौगंधिकम् ॥ १२६ ॥ जगदटव्यामाखेट
काटनपटीयसः कालमहाभटस्य प्रचंडभुजदंडारूढंतक्रीडायोग्यंपक्षिणंदर्शयति ॥ विरावीति ॥ विरावोनिर्घोषोऽस्यास्तीतितथा संहतयोः
प्रकोष्ठप्रगंडयोः पाणितलास्फालनमास्फोटःविकटोविरूपःआस्फोटोयस्यसतथा सटाविकटपीनांसः सटाभिर्ग्रीवारोमभिर्विकटोविरूपः पी
नावंसौस्कंधौयस्यसःपीनांसः सटाविकटश्चासौपीनांसश्चेतितथा । अथवा सटाविकटौपीनांसौयस्यसतथा । शकुंतःपक्षी ॥१२७॥ नृसिं
हवद्रुद्रानुचरभूतोमहाकालनामादेवोऽपि कालस्यक्रीडोपकरणमित्याह ॥ अलाब्विति ॥ यथाहुःक्षीरस्वामिनः । रुद्रानुचरोनंदीमहाकालो
भृंगीति । अलाबुवीणावन्मधुरोमधुरध्वनिः । मधुरध्वनिर्व्योमेतिवापाठः । कोकिलवत्तस्यकार्ष्ण्यमाह ॥ शरदिति ॥१२८॥ जगज्जीर्णा

विरावीविकटास्फोटोनृसिंहोभुजपंजरे ॥ सटाविकटपीनांसःकांतःक्रीडाशकुंतकः ॥ १२७ ॥ अला
बुवीणामधुरःशरद्व्योमामलच्छविः ॥ देवःकिलमहाकालोलीलाकोकिलपालकः ॥ १२८ ॥ अजस्रस्फू
र्जिताकारोवांतदुःखशरावलिः ॥ अभावनामाकोदंडःपरिस्फुरतिसर्वतः ॥ १२९ ॥ कालरात्रिःस्वयं
भूत्वानृत्यत्येषनिजेच्छया ॥ यस्याभूषणमंगेषुदेवलोकांतरावलिः ॥ १३० ॥

टव्यांप्रविष्टस्य प्राणिमृगवधेव्यापृतस्य धनुर्दर्शयति ॥ अजस्रेति ॥ नेंद्रोनचंद्रोनमेरुर्नविंध्यइत्यजस्रंस्फूर्जितआकारोयस्यसतथा । दुःखान्ये
वशरास्तेषामावलिःपंक्तिः वांताउद्गीर्णा दुःखशरावलिर्येनसतथा । कोदंडोधनुः कालात्मनःपरमेश्वरस्य ॥१२९॥ विधांतरेणजगत्संहारली
लांवर्णयति ॥ कालरात्रिरित्यादिना ॥ महाकल्पेष्वराजतइत्यनेन सर्वसंहारपटीयसीतमःप्रधानाशक्तिःकालरात्रिरित्युच्यते । एषकालात्मा
परमेश्वरः स्वयंकालरात्रिर्भूत्वा नृत्यतीतिसंबंधः । तस्यनृत्योपकरणानिदर्शयति ॥ यस्याइति ॥ देवलोकांतराणांदेवलोकभेदानामाव
लिर्यस्याअंगेषुभूषणंभवति साकालरात्रिरितिपूर्वेणसंबंधः ॥ १३० ॥

नरकालीच यस्याःपातालचरणेस्थितामंजीरमालाभवतीत्यन्वयः । आलीपंक्तिः मंजीरोनूपुरः मंजीरमालासाधर्म्यसंपादयति ॥ कलक लेत्यादिना ॥ कलकलेनकोलाहलेनउज्ज्वलादीप्ता ॥ १३१ ॥ हिमपांडुर्हिमवान्यस्याएकस्मिन्नश्रवणे दीर्घाकिंचिन्न्यूनलक्षयोजनदीर्घा अस्थिमुद्रिकाभवति । कर्णिकाकर्णालंकारविशेषः ॥ १३२ ॥ चंद्रार्कौयस्या अत्रैवकुंडलेभवतइत्यन्वयः । अत्रेतिपूर्वश्लोकोक्तेश्रवणे निर्दिश्येते । लोलेइतिकुंडलयोर्विशेषणं गंडमंडलेगंडमंडलयोरित्यर्थः । श्रेणीपंक्तिः ॥ १३३ ॥ तस्यारूपंलोकभयावहमितिकिंवक्तव्यमित्य भिप्रेत्याह ॥ पश्चादिति ॥ पश्चात्प्रलंबेत्यादीनां खट्वांगभंगैरित्यंतानांषण्णांतृतीयांतानामापूरितांबरमित्यनेनसंबंधः । पश्चाद्भागेकबरादौ प्र

नरकालीचमंजीरमालाकलकलोज्ज्वला ॥ प्रोतादुष्कृतसूत्रेणपातालचरणेस्थिता ॥ १३१ ॥ एकस्मि न्नश्रवणेदीर्घाहिमवानास्थिमुद्रिका ॥ अपरेहिमहामेरुःकांताकांचनकर्णिका ॥ १३२ ॥ अत्रैवकुंडलेलोले चंद्रार्कौगंडमंडले ॥ लोकालोकाचलश्रेणीसर्वतःकटिमेखला ॥ १३३ ॥ पश्चात्प्रलंबविभ्रांतकौमारमृ तबर्हिभिः ॥ नेत्रत्रयबृहद्रंध्रभूरिझांकारभीषणैः ॥ १३४ ॥ लंबलोलजटाचंद्रविकीर्णहरमूर्धभिः ॥ उ च्चरच्चारुमंदारगौरीकबरचामरैः ॥ १३५ ॥ उत्तांडवाचलाकारभैरवोदरतुंबकैः ॥ रणत्सशतरंध्रेंद्रदेह भिक्षाकपालकैः ॥ १३६ ॥

लंबाःप्रलंबमानाविभ्रांताश्चतेकौमारमृतबर्हिणः षण्मुखमृतमयूरास्तैः ॥ नेत्रेति ॥ हरमूर्धविशेषाणां नेत्रत्रयस्यबृहद्रंध्रेषु वायुपूरणवशात्भू रिझांकारास्तैर्भीषणैः ॥ १३४ ॥ लंबोलोलोजटासुचंद्रोयेषांते लंबलोलजटाचंद्रास्तेचतेविकीर्णहरमूर्धानश्चतैः उच्चरच्चारुमंदाराणिउच्चर च्चारुमंदारपुष्पाणि यानिगौरीकबराणितान्येवचामराणितैः कबरंकेशपाशम् ॥ १३५ ॥ उत्तांडवानिउल्लुठितानिअचलाकाराणिच यानि

भैरवोदराणि तान्येवतुंबकान्यलाबुफलानितैः अथवाउत्तांडवेतिकालरात्रिविशेषणम् ॥ रणदिति ॥ रणंतोध्वनंतः सशतरंध्राःशतरंध्रैःसह
वर्तमानाश्च येइंद्रदेहास्तएवभिक्षाकपालास्तैः ॥ १३६ ॥ शुष्कानियानिशारीराणिशरीरभवास्थीनि तान्येवखट्वांगभंगामंचावयवखंडा
स्तैः । ननुकौमारबर्हादीनामेकत्वाद्बर्हिभिरित्यादिबहुवचनंकथमितिचेत् मैवं महाकल्पेषुराजतइति अत्रैवबहुवचनेनपरिहृतत्वान्महाक
ल्पभेदेन मयूरादीनांबहुत्वसंभवात् । आपूरितमंबरंनभोयेनात्मनातम् ॥ १३७ ॥ किंबहुना कालरात्रेःप्रभावःसंक्षेपेणश्रूयतामित्यभिप्रे
त्याह ॥ विश्वरूपेति ॥ विश्वरूपस्यगीतासुप्रसिद्धस्य शिरसामनेककोटीनांचक्राणिसमूहाएवचारुपुष्करमालातया । विवल्गंतीतिक्वचि
त्तत्र तांडवेषुतांडवावसरेष्वित्यर्थः । विवल्गंतीत्यन्वयः । तत्रतांडवेषुनाट्येषुकर्तव्येष्वित्यर्थः ॥ १३८ ॥ एवंकालादीनांवृत्तमाख्यातमनुव

शुष्कशारीरखट्वांगभंगैरापूरितांबरम् ॥ भीषयत्यात्मनात्मानंसर्वसंहारकारिणी ॥ १३७ ॥ विश्वरू
पशिरश्चक्रचारुपुष्करमालया ॥ तांडवेषुविवल्गंतीमहाकल्पेषुराजते ॥ १३८ ॥ एतस्मिन्नेवमेतेषांका
लादीनांमहामुने ॥ संसारनाम्निकैवास्थामादृशानांभवत्विह ॥ १३९ ॥ शत्रवस्त्विंद्रियाण्येवसत्यं
यातमसत्यताम् ॥ प्रहरत्यात्मनात्मानंमनएवमनोरिपुः ॥ १४० ॥

दंस्तद्दोषपरिज्ञानफलंविशदयति । कालादीनामेवमुक्तेनप्रकारेण एवमेतस्मिन्वृत्तेसतीत्यध्याहृत्ययोजना । वृत्तेऽस्मिन्नेवमेतेषामितिक्वचि
त् । कालादीत्यत्रादिशब्देन चंद्रादिर्गृह्यते । कालादीनांवृत्तमन्येषांपूर्वोक्तसंसारदोषाणामुपलक्षणम् ॥ १३९ ॥ ननुसंसारनाम्न्यनर्थेआ
स्थानास्तिचेत्तर्हितन्निवृत्तौपरमोयत्नआस्थीयतांकिंवल्गनेनेत्याशंक्य तन्निवृत्तिप्रतिकूलानांसौलभ्यमनुकूलानांदौर्लभ्यंचाह ॥ शत्रवइ
त्यादिनाभवबंधिनीत्यंतेनग्रंथजातेन ॥ ननुप्राप्यंसत्यज्ञानादिलक्षणंवस्तुसाक्षात्प्रतिभासतेचेत्किंकरिष्यंतींद्रियशत्रवइत्यतआह ॥ सत्यमि
ति ॥ सत्यंज्ञानादिलक्षणंवस्तुअसत्यतामनृतदेहादिरूपतांयातम् । ननुमनःस्वानुकूलंचेन्नेंद्रियशत्रुभ्योभेतव्यमित्यतआह ॥ प्रहरतीति ॥

द्वितीयकल्पकंमनोरिपुर्भूत्वाआत्मनास्वेनआत्मानंस्वंप्रहरति ॥ १४० ॥ मनसोरिपुत्वंसाधयति ॥ वस्त्विति ॥ कार्यकारणसंघातसाक्षि लक्षणंवस्तुअवस्तुतयाकार्यकारणसंघातात्मनागृहीतम्। ननुसंघातसाक्षितयावस्तुग्रहणसंभवादन्यथाग्रहणंनिवर्तिष्यतइत्यतआह ॥ दत्त मिति ॥ कामाकुलंतच्चित्तंविवेकाक्षमत्वादहंकारमेवानुधावतीतिनतत्साक्षिणमित्यभिप्रायः। ननुवस्तुनावगाहतेचेच्चित्तंतर्हियानहंकारादि भावानवगाहतेतत्रैवरतिर्बध्यतामतआह ॥ अभावेति ॥ भावाःपदार्थाअभाववेधिताअभावविद्धाअनित्याइत्यर्थः। तर्हिनविनश्यद्वस्तु कूट स्थांतंविनश्यतीतिन्यायान्नाशावधितयाज्ञायतामात्मेत्यतआह ॥ भावेति ॥ भावानामनित्यपदार्थानामंतोऽवसानभूमिरात्मेत्यर्थः। भवां तइतिकचित् ॥ १४१ ॥ अनात्मनिदोषदृष्टौसत्यामात्मनिचाप्राप्तेफलितमाह ॥ तप्यतइति ॥ अंतरावस्त्ववस्तुनोरंतराले। ननुसर्वकाम

वस्त्ववस्तुतयाज्ञातंदत्तंचित्तमहंकृतौ ॥ अभाववेधिताभावाभावांतोनोपलभ्यते ॥ १४१ ॥ तप्यते केवलंसाधोमतिराकुलितांतरा ॥ रागरोगोविलसतिविरागीविरलोजनः ॥ १४२ ॥ यत्नेनयातियुव तादूरेसज्जनसंगतिः ॥ गतिर्नविद्यतेकाचित्क्वचिन्नोदेतिसत्यता ॥ १४३ ॥ मनोविमुह्यतीवांतर्मुदिता दूरतांगता ॥ नोज्ज्वलाकरुणोदेतिदूरादायातिनीचता ॥ १४४ ॥

नात्यागात्तापनिवृत्तिसंभवेकिमर्थंतप्यतइत्यतआह ॥ रागइति ॥ तर्हिविरक्तसंपर्काद्रागोनिवर्त्यतामित्यतआह ॥ विरागीति ॥ १४२ ॥ तर्हित्वरानकार्येदानीमित्यतआह ॥ यत्नेनेति ॥ यौवनेहिकार्यकारणानांपुरुषार्थसंपादनक्षमतानवार्धकइत्याशयः। तर्हिइदानीमेवतत्त्ववि दःसेव्यंतामित्यतआह ॥ दूरइति ॥ तर्ह्यन्यउपायोऽन्वेष्यतामतआह ॥ गतिरिति॥ ननुकथमन्यागतिर्नास्तितर्कबलात्स्वयमेववास्वयंप्रका शआत्माप्रतिभास्यतीत्यतआह ॥ क्वचिदिति ॥ सत्यतासत्यभावःसत्यस्वरूपमित्यर्थः। अथवा जगत्सत्यत्वांगीकारेद्वैतिनामिवान्यागति र्भविष्यतीत्यतआह ॥ क्वचिदिति ॥ क्वचिदपिजगद्वृत्तेपदार्थेसत्यतानोदेतिनभातीत्यर्थः ॥ १४३ ॥ १४४ ॥

संसारासज्जनमध्यवर्तिनःसाम्यंदुर्लभमितिदर्शयितुंतत्स्थितेरस्थिरत्वमाह ॥ धीरेतेति ॥ पातइति पातऐश्वर्यादिभ्रंशः । उत्पातस्तत्प्राप्तिः। अथवा पातोनाशउत्पातउद्भवः ॥ १४५ ॥ भावनादेहादिविषया । एवंपुरुषार्थानुकूलानांदुर्लभत्वंतत्प्रतिकूलानांसौलभ्यंचप्रतिपाद्य फलितमाह ॥ नीयतइति ॥ केवलंपुरुषार्थसाधनानुष्ठानविधुरे क्कापिपुरुषार्थपरिपंथिनिमार्गेनीयते विधिनेतिशेषः ॥ १४६ ॥ १४७ ॥ प्रदीप्तशिरसोजलावगाहनइव संसारदावाग्निदग्धस्यममनित्यानंदावगाहे अत्युत्कटेच्छास्तीतिदर्शयितुमागमापायिनोभावा इत्युक्तमनि



धीरताधीरतामेतिपातोत्पातपरोजनः ॥ सुलभोदुर्जनाश्लेषोदुर्लभःसत्समागमः ॥ १४५ ॥ आगमापायिनोभावाभाव नाभवबंधिनी ॥ नीयतेकेवलंक्कापिनित्यंभूतपरंपरा ॥ १४६ ॥ दानवाअपिदीर्यंतेध्रुवोऽप्यध्रुवजीवितः ॥ अमराअपिमार्यंतेकैवास्थामादृशेजने ॥ १४७ ॥ दिशोऽपिहिनदृश्यंतेदेशोऽप्यन्यापदेशभाक् ॥ शैलाअपिविशीर्यंतेकैवास्थामादृशेजने ॥ १४८ ॥ अद्यतेऽसत्तयाद्यौश्चभुवनंचापिभुज्यते ॥ धरापियातिवैधुर्यंकैवास्थामादृशेजने ॥ १४९ ॥ शुष्यंत्यपिसमुद्राश्चशीर्यंतेतारकाअपि ॥ सिद्धाअपिविनश्यंतिकैवास्थामादृशेजने ॥ १५० ॥ परमेष्ठ्यपिनिष्ठावान्ह्रियतेहरिरप्यजः ॥ भवोऽप्यभावमायातिकैवास्थामादृशेजने ॥ १५१ ॥

त्यत्वंप्रपंचयति ॥ दिशइत्यादिना ॥ अश्राव्येत्यतःपूर्वेणग्रंथसंदर्भेण सचस्पष्टार्थः । कानिचित्पदानिव्याख्यायंते । अन्यापदेशभागन्यशब्दभाक् । देशोऽप्यदेशशब्दभाग्भवतीत्यर्थः । अन्योपदेशभागितिक्कचित्तत्रान्यस्योपदेशमेवभजते नस्वयमेवप्रतीयते नष्टत्वादित्यर्थः॥ ॥ १४८ ॥ असत्तयेतिपदच्छेदः । वैधुर्यंअसत्ताम् ॥ १४९ ॥ १५० ॥ निष्ठावान्नाशवान् । निष्ठानिष्पत्तिनाशयोरित्यमरः ॥ १५१ ॥

अनेनपरमात्मनाकाल्यतेसंह्रियतेइत्यर्थः । नियतिर्दैवंपूर्वकर्मेत्यर्थः । मर्यादावानियतिः ॥ १५२ ॥ कालोऽपिकाल्यतेऽन्येनेत्युक्तमन्यं दर्शयति ॥ अश्राव्येति ॥ निर्विकल्पतयाअश्राव्यावाच्यंतत्त्वंपारमार्थिकंस्वरूपंयस्यसतथातेन । दुर्दर्शज्ञानमेवमूर्तिःस्वरूपंयस्यतेन । तंदुर्दर्शंगूढमनुप्रविष्टमितिश्रुतेः । विडंब्यंतेउपहास्यंते । तत्त्वमाच्छाद्यकल्पितमेवदर्शयताविप्रलभ्यंतेमायाविनेत्यर्थः ॥ १५३ ॥ अधिष्ठानभूतपरमात्मनादत्तंभ्रममेवावलंब्य भ्रामकंतमपरिज्ञाय नश्यतिलोकइत्यनुक्रोशति ॥ अद्योत्सवइति ॥ आलोलपेलवमतिःपरिचंचलतनुबुद्धिर्गलतिनश्यतीत्यर्थः ॥ १५४ ॥ एवमविवेकिनःसंसरतोऽनुक्रुश्य तन्मध्येवर्तमानोमुमुक्षुरेकांतप्रियब्रह्मनिष्ठसंनिधौश्रवणाद्यसंभवाच्चिं

कालोपिकाल्यतेऽन्येननियतिश्चापिनीयते ॥ व्योमापिलीयतेऽनंतंकैवास्थामादृशेजने ॥१५२॥ अश्राव्यावाच्यतत्त्वेनदुर्दर्शज्ञानमूर्तिना ॥ भुवनानिविडंब्यंतेकेनचिद्भ्रमदायिना ॥ १५३ ॥ अद्योत्सवोऽयमृतुरेषतथेहयात्रातेबांधवाःसुखमिदंसविशेषभोगः ॥ इत्थंमुधैवकलयन्सुविकल्पजालमालोलपेलवमतिर्गलतीहलोकः ॥ १५४ ॥ इतस्ततोदूरतरंविहृत्यप्रविश्यगेहंदिवसावसाने ॥ विवेकिलोकाश्रयसाधुवृत्तरिक्तेऽह्नियातेकउपैतिनिद्राम् ॥ १५५ ॥ पुत्रांश्चदाराश्चधनंचबुद्ध्याप्रकल्प्यतेतातरसायनाभम् ॥ सर्वंतुतन्नामकरोत्यथांतेयन्नातिरम्याविषमूर्छनेव ॥ १५६ ॥

ताक्रांताकुलितत्वात् सहजामपिनिद्रांनाद्रियतइत्याह ॥ इतइति ॥ विवेकिलोकाब्रह्मविदस्तदाश्रयंतदधीनंयत्साधुवृत्तंश्रवणादिलक्षणं तेनरिक्तेशून्ये ॥ १५५ ॥ ननुसर्वोजनःपुत्रदारादिकममृतकल्पंसंकल्प्यतत्रप्रवर्ततेनश्रवणादौ तद्वत्तवप्रवृत्तिःकिंनस्यादतआह ॥ पुत्रेति ॥ नातिरम्येत्येकंपदं अनतिरम्याविषमूर्च्छनेवेतियत्तदंतेअंतकालेकरोतीतिसंबंधः । नामशब्दःकुत्सायाम् । यत्रातिरम्येतिकचित्तत्रायमर्थः । यत्रयस्मिन्दुःखेसतिविषमूर्छनाप्यतिरम्यैवभवति तद्दुःखंकरोतीत्यर्थः ॥ १५६ ॥

क्वचित्तद्दुःखोदर्कमपिविषयसुखमननुभूय तत्संपादनप्रयासमनुभूय मृत्युग्रस्तोभवतिविषयपरइत्याह ॥ विद्रावितइति ॥ १५७ ॥ भोक्ता मृत्युवक्त्रमप्रविश्ययदाजीवति तदापितस्यभ्रांत्यात्मकःकलत्रादिव्यवहारोऽस्थिरइत्याह ॥ इतइति ॥ समानेनसाधारणेनसंकेतेननिबद्धोभावोऽभिप्रायोभोगादिविषयोयासुव्यवहारमायासुतास्तथा । अयमर्थः । फाल्गुनेमासिकृष्णचतुर्दश्यांविश्वेश्वरयात्राविधेयेतिसंकेतेनसर्वसाधारणेननराणां यथानिबद्धाभिप्रायाःक्षणिकायात्राःसमासंगाभवंति तथाविवाहादिकालीनेनसाधारणसंकेतेननिबद्धाभिप्रायाःकलत्रादिव्यवहारभ्रांतयःक्षणिकाभवंतीति ॥१५८॥ नन्वस्मदादिभोक्तुर्भोक्तव्यभोगावसरएवमृत्युसंभवेऽप्यनेकसहस्रयुगजीविनांब्रह्मादीनांनैव

विद्राविते शत्रुजने समग्रे समागतायामभितश्चलक्ष्म्याम् ॥ सेव्यंत एतानि सुखानि यावत्तावत्समायाति कुतोऽपि मृत्युः ॥ १५७ ॥ इतोऽन्यतश्चोपगतास्तथैव समानसंकेतनिबद्धभावाः ॥ यात्रासमासंगसमानराणांकलत्रमित्रव्यवहारमायाः ॥ १५८ ॥ कल्पाभिधानक्षणजीविनोहिकल्पौघसंख्याकलनेविरिंच्याः ॥ अतःकलामालिनिकालजालेलघुत्वदीर्घत्वधियोऽप्यसत्याः ॥ १५९ ॥ जनःकामासक्तोविविधकुकलाचेष्टनपरःसतुस्वप्नेऽप्यस्मिन्जगतिसुलभोनाद्यसुजनः ॥ क्रियादुःखासंगाविधुरविधुरानूनमखिलानजानेनेतव्याकथमिवदशाजीवितमयी ॥ १६० ॥

मित्यतआह ॥ कल्पेति ॥ अनादौसंसारेकल्पौघसंख्याकलनेकल्पसमूहसंख्यागणनेक्रियमाणेविरिंच्याःकल्पाभिधानक्षणजीविनोहिकल्पनामकक्षणजीविनोभवंति तथाप्यस्मदादिलघुकालापेक्षयादीर्घजीवनोहिब्रह्मेत्यतआह ॥ अतइतिलघुत्वादिकंयथास्वप्नमुहूर्तेवत्सरौघभ्रांतिःतद्वज्जागरेऽपीतिभावः ॥१५९॥ एवंसंसारवृत्तमावेद्यतन्निवृत्त्युपायालाभनिमित्तंखेदंदर्शयति ॥ जनइति ॥ कुकलाःकुविद्याः किंसुजनलाभेनक्रिययैवपुरुषार्थःसाध्यतामतआह ॥ क्रियेति ॥ अखिलाक्रियादुःखासंगाविधुरविधुराभवति । दुःखैरासंमतात्संगोयस्याःसातथो

क्ताविधुरविधुरापुरुषार्थेनात्यंतंरिक्तेत्यर्थः ॥ १६० ॥ एवमनात्मवर्गस्यानित्यत्वंविस्तरेणप्रतिपादितंसंक्षिप्याह ॥ दिवसास्तइत्यादिश्लो
कत्रयेण ॥ १६१ ॥ वाडवंवडवाग्निम् ॥ १६२ ॥ किमिवकिंस्वित्यर्थः ॥ १६३ ॥ अशूरेणेतिस्पष्टार्थः ॥ १६४ ॥ एवंबहुधासंसारदोषा
न्निरूप्य तत्फलंनिरतिशयंवैराग्यमाह ॥ इतीति ॥ १६५ ॥ भोगेषुइच्छाभावेऽपिजीवनादौप्रीतिःस्यादतआह ॥ नाभिनिंदामीति

दिवसास्तेमहांतस्तेसंपदस्ताःक्रियाश्चताः ॥ सर्वंस्मृतिपथंयातंयामोवयमतःपरम् ॥ १६१ ॥ ब्रह्मावि
ष्णुश्चरुद्रश्चसर्वावाभूतजातयः ॥ नाशमेवानुधावंतिसलिलानीववाडवम् ॥१६२॥ आपदःक्षणमायां
तिसंपदःक्षणमेवच ॥ क्षणंजन्माथमरणंमुनेकिमिवनक्षणम् ॥ १६३ ॥ अशूरेणहतःशूरएकेनबहवोह
ताः ॥ प्राकृताःप्रभुतांयाताःसर्वमावर्त्यतेजगत् ॥१६४ ॥ श्रीरामउवाच ॥ इतिमेदोषदावाग्निदग्धेस
पदिचेतसि ॥ प्रस्फुरंतिनभोगाश्चमृगतृष्णासरःस्विव ॥ १६५ ॥ नाभिनिंदामिमरणंनाभिनिंदामि
जीवितम् ॥ यथास्तिष्ठामितिष्ठामितथैवविगतज्वरः ॥ १६६ ॥ अथचेत्स्वच्छयाबुद्ध्यामुनींद्रनचिकि
त्स्यते ॥ भूयश्चित्तचिकित्सायास्तत्किलावसरःकुतः ॥ १६७ ॥ विषंविषयवैषम्यंनविषंविषमुच्यते॥
जन्मांतरघ्नाविषयाएकदेहहरंविषम् ॥ १६८ ॥

॥ १६६ ॥ ननुविषयप्रवणस्य चित्तस्यचिकित्सावार्धकेकर्तुमुचितायौवनेकिमितिक्रियतइत्यतआह ॥ अथेति ॥ बाल्यानंतर्यमथशब्दा
र्थः । तत्तर्हिचित्तमितिवा किलेत्यसंभावनायाम् ॥ १६७ ॥ विषयेषुएतच्चित्तंचिकित्सनीयमेवेतिकुतस्तत्राह ॥ विषमिति ॥ विषयेषुवैष
म्यंशोभनाशोभनत्वलक्षणरागद्वेषहेतुभूतम् ॥ १६८ ॥

ननुज्ञानवैराग्यौषधाभ्यांचिकित्सितचित्तेनकिंफलंप्राप्तं येनत्वयाचित्तचिकित्साक्रियतइत्यतआह॥ नसुखानीति॥ज्ञस्यब्रह्मविदः॥१६९॥ चित्तचिकित्सायाःसाफल्यंदर्शयित्वा फलितमाह ॥ आयुरिति ॥ वितानमुल्लोचः । सौदामिनीविद्युत् । यौवनलालनायौवनोपलालनं सैवजलरयःजलवेगः । क्वचिल्लोलेतिस्त्रीलिंगनिर्देशः ॥ तत्रजलरयइतिभिन्नंपदम् ॥ जलरयोलीलत्वेदृष्टांतत्वेनोच्यते ॥ विषयधावनवारणा यविवेकलोहकारकृतावैराग्यमुद्राचित्तेर्पितेत्यर्थः॥१७०॥ एवंमुद्रार्पिताचेतत्कृतंकृत्यमतःपरंकिंतवावशिष्टंतत्राह ॥ नावस्थितिमिति ॥ जीव एवविवेकित्वेनेश्वरोनियंता तदायत्तातदधीनाजीवस्येश्वरैकत्वप्रवणावाबुद्धिर्निर्दुःखेपदेअवस्थितिंनोपयाति । कांतापक्षेजीवेश्वरःप्राणनाथो

नसुखानिनदुःखानिनमित्राणिनबांधवाः ॥ नजीवितंनमरणंबंधायज्ञस्यचेतसः ॥ १६९ ॥ आयुर्वायु विघट्टिताभ्रपटलीलोलांबुवद्भंगुरंभोगामेघवितानमध्यविलसत्सौदामिनीचंचलाः॥ लोलायौवनलाल नाजलरयश्चेत्याकलय्याद्भुतंमुद्रैवाद्यमयार्पिताननुदृढाचित्तेचिरंशांतये॥ १७० ॥ नावस्थितिमुपाया तिनचयातियथेप्सितम् ॥ बुद्धिर्जीवेश्वरायत्ताकांतेवप्रियसद्मनि ॥ १७१ ॥ अतोऽतुच्छमनायासम नुपाधिगतभ्रमम् ॥ किंतत्स्थितिपदंसाधुयत्रशंकानविद्यते ॥ १७२ ॥

भर्ता सापिप्रियसद्मनिभर्तृगृहेस्वेच्छास्थितिंभयादिनानोपयाति । यथेप्सितंचबहिर्नयाति ॥ चित्तेतिक्वचित्तत्रापिबुद्धिरेवविवक्षिता । विम लेब्रचित्पदेचित्तविश्रांतिरेवशिष्टेतिभावः ॥ १७१ ॥ चिंतावान्स्थितिस्थानमतिवादायपृच्छति ॥ अतइति ॥ यतःस्थितिंनयातिचित्त मतःपृच्छामीत्यध्याहारः । अतुच्छंपरमार्थसद्रूपंअनायासंनिर्दुःखंअनायासत्वेहेतुर्गतभ्रममिति । गतभ्रमत्वेहेतुरनुपाधीति । उपाधिर्मनः । मनोहिसर्वभ्रांतिमूलम् । तथाचप्रागुक्तं वक्ष्यतिच । आदौमनस्तदनुबंधविमोक्षदृष्टी पश्चात्प्रपंचरचनाभुवनाभिधानेति । साधुशोभनमानं दरूपमित्यर्थः । यत्रपदेपुनर्दुःखसंबंधशंकानविद्यतेतदितिसंबंधः ॥ १७२ ॥

चित्तविश्रांतिस्थानंपृष्ट्वाचित्तविक्षेपेऽपिदुःखासंस्पर्शोपायंपृच्छति ॥ कथंचेति ॥ धीरवर्येतिसंबोधनं दाहप्राप्तिंदर्शयितुंवासनारसशालिने
तिविशेषणं रस्यतइतिरसआज्यादिः वासनैवरसस्तेनशालतेशोभतेपुरुषइतितथातेन अग्नौसंसाराख्येपततापिपुरुषेण संसाराग्न्यर्चिर्भिः
कथंनदह्यते केनोपायेननदह्यते। पारदोरसः। क्षीराकारोऽथचपलोरसःसूतश्चपारदइत्यमरः। रसेनरसशालिनेतिपाठे रसेनेतिपारदशब्दार्थक

कथंचधीरवर्याग्नौपततापिनदह्यते ॥ पावकेपारदेनेववासनारसशालिना ॥ १७३ ॥ यस्मात्किलमहा
बाहोऽव्यवहारक्रियांविना ॥ नास्थितिर्दग्धसंसारेविनांबुजलधाविव ॥ १७४ ॥ यथाजानासिभगवं
स्तथामोहनिवृत्तये ॥ ब्रूहिमेसाधवोयेननूनंनिर्दुःखतांगताः ॥ १७५ ॥ अथवाताद्दशीयुक्तिर्यदिब्रह्मन्न
विद्यते ॥ नवक्तिममवाकश्चिद्विद्यमानामपिस्फुटम् ॥ १७६ ॥ स्वयंचैवनचाप्नोमितांविश्रांतिमनुत्त
माम् ॥ तदहंत्यक्तसंदेहोनिरहंकारतांगतः ॥ १७७ ॥ नभोक्ष्येनपिबाम्यंबुनातःपरिदधेऽबरम् ॥ करो
मिनाहंव्यापारंस्नानदानाशनादिकम् ॥ १७८ ॥ नचतिष्ठामिकार्येषुसंपत्स्वापद्दशासुच ॥ नकिंचि
दभिवांछामिदेहत्यागाद्दतेमुने ॥ १७९ ॥ केवलंविगताशंकंनिर्ममोगतमत्सरः ॥ मौनमेवाधितिष्ठामि
लिपिकर्मस्विवार्पितः ॥ १८० ॥ वाल्मीकिरुवाच ॥ इत्युक्तवानमलशीतकराभिरामोरामोमहत्तरवि
वेकविकाशिचेताः ॥ तूष्णींबभूवपुरतोमहतांघनानांकेकारवश्रमवशादिवनीलकंठः ॥ १८१ ॥

थनं पारदोऽदुर्दाहइतिप्रसिद्धिः ॥ १७३ ॥ संसारेनिर्व्यापारतयावस्थानमेवदाहोपायइत्यतआह ॥ यस्मादिति ॥ अंबुस्पर्शंविनासमुद्रमध्ये
स्थितिर्यथानसंभवतितद्वदित्यर्थः ॥ १७४ ॥ यथाजानासीत्यादिग्रंथसमूहः स्पष्टार्थः ॥ १७५ ॥ १७६ ॥ १७७ ॥ १७८ ॥ १७९ ॥
॥ १८० ॥ केकामयूरध्वनिः नीलकंठोमयूरः ॥ १८१ ॥ ॥ ॥ ॥ ॥

इतिश्रीपरमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौवासिष्ठचंद्रिकायांद्वितीयःसर्गः ॥ २ ॥ अतीतग्रंथसंदर्भेणनि त्यानित्यवस्तुविवेकतोवैराग्यंप्रतिपादितं तस्यविद्वज्जनमनोहरत्वंखेचरदुर्लभत्वंचाह रामस्यस्तुत्यर्थम् ॥ वदत्येवमित्यादिसार्धैःपंचभिः ॥ श्रुतंश्रुतिरसायनमित्यंतउत्तरग्रंथसंदर्भःस्पष्टार्थः ॥ १ ॥ देहरुहैरोमभिः उद्धुरैरुन्मुखैः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ वीतरागोक्तिःसारार्थ



इतिश्रीमोक्षोपायेवैराग्यप्रकरणेजगद्दोषप्रकाशोनामद्वितीयःसर्गः ॥ २ ॥ वाल्मीकिरुवाच ॥ वदत्येवंमहामोहविनिवृत्तिकरंवचः ॥ रामेराजीवपत्राक्षेतस्मिन्राजकुमारके ॥ १ ॥ सर्वेबभूवुस्तत्रस्थाविस्मयोत्फुल्ललोचनाः ॥ भिन्नांबरादेहरुहैर्गिरःश्रोतुमिवोद्धुरैः ॥ २ ॥ अथतूष्णींस्थितवतिरामेराजीवलोचने ॥ साधुवादगिरासार्धंसिद्धसंघसमीरिता ॥ ३ ॥ वितानकसमाव्योम्नःपौष्पीवृष्टिःपपातह ॥ मुहूर्तस्यचतुर्भागाच्छांतेकुसुमवर्षणे ॥ ४ ॥ इमान्सिद्धगणालापान्शुश्रुवुस्तेसमागताः ॥ आकल्पंसिद्धसेनासुभ्रमद्भिरभितोदिवम् ॥ अपूर्वमिदमस्माभिःश्रुतंश्रुतिरसायनम् ॥ ५ ॥ उपशमामृतसुंदरमादरादधिगतोत्तमतापदमेषयत् ॥ कथितवाननुचितंरघुनंदनःसपदितेनवयंप्रतिबोधिताः ॥ ६ ॥ भरद्वाजउवाच ॥ पावनस्याथवचसःप्रोक्तस्यरघुकेतुना ॥ निर्णयंश्रोतुमिच्छामिवक्ष्यमाणंमहात्मभिः ॥ ७ ॥

विषयाश्रोतृष्णसद्यःफलतीत्यभिप्रायेणाह ॥ उपशमेति ॥ उत्तमतायाःपदंस्थानंपरमपुरुषार्थः अधिगतंप्राप्तंउत्तमतापदंयेनवचसातत्तथा । ज्ञानार्थिनागंतव्याःसंतःसद्भिश्चससम्यक्परिग्राह्यस्तेनचसर्वानुकूल्येनतत्रवर्तितव्यमितिप्रतिपादितोऽर्थः ॥ ६ ॥ पावनस्येत्यादिः इतिनादेनेत्यतःप्राक्तनोग्रंथसमूहः स्पष्टार्थः । क्वचित्किंचिद्दुर्बोधंतद्व्याख्यायते । रघुकेतुना रथस्यकेतुवद्घृणामलंकारेण ॥ ७ ॥

॥ ८ ॥ रसांभूमिम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ उद्दामदौरात्म्यश्चासौदैवनिर्माणनिर्मितश्चेतितथोक्तस्तस्मिन्संसारेहि निरंकुशेनदौरात्म्येनयुक्तोभवत्यमानुषव्यापारनिर्मितश्च । दैवनिर्माणनिर्मितइत्यनेनानिर्वाच्यत्वंसूचितम् ॥ १४ ॥ १५ ॥ इतिनादेने

वाल्मीकिरुवाच ॥ इत्युक्त्वासासमस्तैवव्योमावासनिवासिनी ॥ तांपपातसभांतत्रदिव्यामुनिपरंपरा ॥८॥ अथास्यांसिद्धसेनायांपतंत्यांनभसोरसाम् ॥ उत्तस्थौमुनिसंपूर्णातदादाशरथीसभा ॥९॥ वसिष्ठविश्वामित्रौतान्पूजयामासतुःक्षणात् ॥ वसिष्ठविश्वामित्रौतेपूजयामासुरादरात् ॥ १० ॥ सर्वादरेण सिद्धौघान्पूजयामासभूपतिः ॥ सिद्धौघाभूपतिंचैवकुशलप्रश्नवार्तया ॥ ११ ॥ वचोभिःपुष्पवर्षेणसाधुवादेनचाभितः ॥ रामंतेपूजयामासुःपुरःप्रणतमास्थितम् ॥ १२ ॥ मुनयऊचुः ॥ अहोबतकुमारेणकल्याणगुणशालिनी ॥ वागुक्तापरमोदारावैराग्यरसगर्भिणी ॥ १३ ॥ अस्मिन्नुद्दामदौरात्म्यदैवनिर्माणनिर्मिते ॥ द्विजेंद्रादग्धसंसारेसारोह्यत्यंतदुर्लभः ॥ १४ ॥ सकललोकचमत्कृतिकारिणोऽप्यभिमतंयदिराघवचेतसः ॥ फलतिनोतदिमेवयमेवहिस्फुटतरंमुनयोहतबुद्धयः ॥ १५ ॥ इतिनादेनमहतावचस्युक्तेमहाजनैः ॥ राममग्रगतंप्रीत्याविश्वामित्रोऽभ्यभाषत ॥ १६ ॥ विश्वामित्रउवाच ॥ नराघवतवास्त्यन्यज्ज्ञेयंज्ञानवतांवर ॥ स्वयैवसूक्ष्मयाबुद्ध्यासर्वंविज्ञातवानसि ॥ १७ ॥ भगवद्व्यासपुत्रस्यशुकस्येव मतिस्तव ॥ विश्रांतिमात्रमेवांतर्ज्ञातज्ञेयेऽप्यपेक्षते ॥ १८ ॥

त्यादिः आप्रकरणसमाप्तेर्ग्रंथःस्पष्टार्थः । तत्रकानिचित्पदानिव्याख्यायंते ॥ १६ ॥ १७ ॥ १८ ॥ ॥ ॥

ज्ञेयेऽपीत्यपिशब्दोविरोधेसर्वक्लेशरहिते प्रमाणव्यापारात्प्रागेवस्वतःप्रकाशमानपरमानंदरूपेऽपि धियानविश्रांतमितिविरुद्धम् ॥ १९ ॥ उदंतोवृत्तांतः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ चातकोभूमिस्थोदकपानविमुखःपक्षिविशेषः। धाराभ्योवर्षधाराभ्यः चातकस्तुष्यनंतरयं





श्रीरामउवाच ॥ भगवद्व्यासपुत्रस्यशुकस्यभगवन्कथम् ॥ ज्ञेयेऽप्यादौनविश्रांतंविश्रांतंचधियापुनः ॥ १९ ॥ विश्वामित्रउवाच ॥ आत्मोदंतसमंरामवक्ष्यमाणमिदंमया ॥ शृणुव्यासात्मजोदंतंजन्मनामंतकारणम् ॥ २० ॥ तस्यचिंतयतोलोकयात्रामेवमिमांहृदि ॥ तवेवकिलसद्बुद्धेर्विवेकउदभूदयम् ॥ २१ ॥ तेनासौस्वविवेकेनस्वयमेवमहामनाः ॥ विचार्यसुचिरंचारुयत्सत्यंतदवाप्तवान् ॥ २२ ॥ स्वयंप्राप्तेपरेवस्तुन्यविश्रांतमनाःस्थितः ॥ इदंवस्त्वितिविश्वासंनासावात्मन्युपाययौ ॥ २३ ॥ केवलंविरराभास्यचेतोविगतचापलम् ॥ भोगेभ्योभूरिभंगेभ्योधाराभ्यइवचातकः ॥ २४ ॥ एकदासोऽमलप्रज्ञोमेरावेकांतमास्थितम् ॥ पप्रच्छपितरंभक्त्याकृष्णद्वैपायनंमुनिम् ॥ २५ ॥ संसाराडंबरमिदंकथमभ्युत्थितंमुने ॥ कथंचप्रशमंयातिकियत्कस्यकदेतिच ॥ २६ ॥ इतिपृष्टेनमुनिनाव्यासेनाखिलमात्मजे ॥ यथावदमलंप्रोक्तंवक्तव्यंविदितात्मना ॥ २७ ॥ आज्ञासिषंपूर्वमेतदहमित्यथतातपितुः ॥ सशुकःशुभयाबुद्ध्यानवाक्यंबहुमन्यत ॥ २८ ॥ व्यासोऽपिभगवान्ज्ञात्वापुत्राभिप्रायमीदृशम् ॥ प्रत्युवाचपुनःपुत्रंनाहंजानामितत्त्वतः ॥ २९ ॥



थावर्षधाराभ्यउपरमतेस्मतथेत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ॥ ॥

॥ ३० ॥ ३१ ॥ यार्ष्टीकैर्यष्ट्यायुधैः ॥ ३२ ॥उन्मनाःजनकदर्शनेसोत्कंठः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ बद्धपीठंबद्धाधिष्ठानम् ॥
॥ ३७ ॥ ३८ ॥ ३९ ॥ निःशेषितेति ॥ जगतिश्रेयसेयानिकार्याणिसंतितानिनिःशेषितानिअनवशेषितानियेनसतथानिरवशेषितसर्व

जनकोनामभूपालोविद्यतेवसुधातले ॥ यथावद्वेत्त्यसौवेद्यंतस्मात्सर्वमवाप्स्यसि ॥ ३० ॥ पित्रेत्युक्तः शुकःप्रायात्सुमेरोर्वसुधातलम् ॥ विदेहनगरींप्रापजनकेनाभिपालिताम् ॥ ३१ ॥ आवेदितोऽसौयार्ष्टी कैर्जनकायमहात्मने ॥ द्वारिव्यासुसुतोराजन्शुकोऽत्रस्थितवानिति ॥ ३२ ॥ जिज्ञासार्थंशुकस्यासा वास्तामेवेत्यवज्ञया ॥ उक्त्वाबभूवजनकस्तूष्णींसप्तदिनान्यथ ॥३३॥ ततःप्रवेशयामासजनकःशुक मंगणम् ॥ तत्राहानिससप्तैवतथैवाससउन्मनाः ॥ ३४ ॥ ततःप्रवेशयामासजनकोऽतःपुरंशुकम् ॥ राजानदृश्यतेतावदितिसप्तदिनानितम् ॥ ३५ ॥ तत्रोन्मदाभिःकांताभिर्भोजनैर्भोगसंचयैः ॥ जन कोलालयामासशुकंशशिनिभाननम् ॥ ३६ ॥ तेभोगास्तानिदुःखानिव्यासपुत्रस्यतन्मनः ॥ नाज ह्रुर्मंदपवनोबद्धपीठमिवाचलम् ॥ ३७ ॥ केवलंसुमनाःस्वच्छोमौनीमुदितमानसः ॥ संपूर्णइवशीतां शुरतिष्ठदमलःशुकः ॥३८॥ परिज्ञातस्वभावंतंशुकंसजनकोनृपः ॥ आनीयमुदितात्मानमवलोक्यननना मह ॥ ३९॥ निःशेषितजगत्कार्यप्राप्ताखिलमनोरथ ॥ किमीहितंतवेत्याशुकृतस्वागतमाहतम् ॥४०॥ शुकउवाच ॥ संसाराडंबरमिदंकथमभ्युत्थितंगुरो ॥ कथंप्रशममायातियथावत्कथयाशुमे ॥ ४१ ॥

कार्यइतिवार्थः ॥ ४० ॥ संसाराडंबरंसंसारसंरंभः ॥ ४१ ॥

॥४२॥४३॥४४॥४५॥४६॥४७॥अव्युच्छिन्नोऽविनाशीकूटस्थःनित्यःसचासौचिदात्माचेतितथास्वतोऽद्वितीयोऽप्यात्मासद्वितीयतयास्व संकल्पवशाद्बद्धोभवति। तथाचोक्तम् सुरेश्वराचार्यैः। अभूताभिनिवेशेनस्वात्मानंवंचयत्यसौ ॥ असत्यपिद्वितीयेऽर्थेसोमशर्मपितायथेति।

विश्वामित्रउवाच ॥ जनकेनेतिपृष्टेनशुकस्यकथितंतदा॥ तदेवयत्पुराप्रोक्तंतस्यपित्रामहात्मना॥४२॥ शुकउवाच ॥ स्वयमेवमयापूर्वमेतज्ज्ञातंविवेकतः ॥ एतदेवचपृष्टेनपित्रामेसमुदाहृतम् ॥ ४३ ॥ भवताप्येषएवार्थःकथितोवाग्विदांवर ॥ एषएवचवाक्यार्थःशास्त्रेषुपरिदृश्यते ॥ ४४ ॥ यथायंस्वविकल्पोत्थःस्वविकल्पपरिक्षयात् ॥ क्षीयतेदग्धसंसारोनिःसारइतिनिश्चयः ॥ ४५ ॥ तत्किमेतन्महाबाहोसत्यंब्रूहिममाचलम् ॥ त्वत्तोविश्राममाप्नोतिचेतसाभ्रमताजगत् ॥ ४६ ॥ जनकउवाच ॥ नातःपरतरःकश्चिन्निश्चयोऽस्त्यपरोमुने ॥ स्वयमेवत्वयाज्ञातंगुरुतश्चपुनःश्रुतम् ॥ ४७ ॥ अव्युच्छिन्नचिदात्मैकःपुमानस्तीहनेतरत् ॥ स्वसंकल्पवशाद्बद्धोनिःसंकल्पश्चमुच्यते ॥ ४८ ॥ तेनत्वयास्फुटंज्ञातंज्ञेयंयस्यमहात्मनः ॥ भोगेभ्योऽप्यरतिर्जातादृश्याद्वासकलादिह ॥ ४९ ॥ प्राप्तंप्राप्तव्यमखिलंभवतापूर्णचेतसा ॥ नदृश्येयतसिब्रह्मन्मुक्तस्त्वंभ्रांतिमुत्सृज ॥ ५० ॥ अनुशिष्टःइसत्येवंजनकेनमहात्मना ॥ विशश्रामशुकस्तूष्णींस्वस्थेपरमवस्तुनि ॥५१॥ वीतशोकभयायासोनिरीहश्छिन्नसंशयः ॥ जगामशिखरंमेरोःसमाध्यर्थमनिंदितम् ॥ ५२ ॥ ॥ ॥ ॥

निःसंकल्पश्चमुच्यते ॥४८॥४९॥५०॥ अनुशिष्टःज्ञानप्राप्त्यास्वस्मिन्प्रतिबिंबकल्पेजीवेधिष्ठानतयास्थितःस्वस्थस्तस्मिन् ॥ ५१ ॥ ५२ ॥

॥५३॥ व्यपगतेति ॥ कलनासंकल्पःसैवकलंकोऽपवादः। कलंकोऽकापवादयोरित्यमरः। व्यपगतःकलनाकलंकोयस्मात्सतथा सचासौ शुद्धश्च व्यपगतकलनाकलंकेतिमूलाज्ञाननिवृत्तिरुक्ता शुद्धइतिमूलाज्ञाननिवृत्तिः। ब्रह्माप्यनाद्यागंतुकमलद्वयरहितमित्याह ॥ अमलात्मनिपावनइति ॥ ५४ ॥ ५५ ॥ समग्राणिभोगवृंदानिपुनर्नस्वादन्तेरोचंतइति यत्तदेतज्ज्ञातज्ञेयस्यमनसोलक्षणंहिनूनंनिश्चयः। नूनंत

तत्रवर्षसहस्राणिनिर्विकल्पसमाधिना॥ दशस्थित्वाशशामासावात्मन्यस्नेहदीपवत्॥५३॥व्यपगतकलनाकलंकशुद्धःस्वयममलात्मनिपावनेपदेऽसौ ॥ सलिलकणइवांबुधौमहात्माविगलितवासनमेकतां जगाम ॥ ५४ ॥ विश्वामित्रउवाच ॥ तस्यव्यासतनूजस्यमलमात्रापमार्जनम् ॥ यथोपयुक्तंतेरामतावदेवोपयुज्यते ॥ ५५ ॥ ज्ञातज्ञेयस्यमनसोनूनमेतद्धिलक्षणम् ॥ नस्वादन्तेसमग्राणिभोगवृंदानियत्पुनः ॥ ५६ ॥ भोगभावनयायातिबंधोदार्ढ्यमवस्तुजः ॥ तयोपशांतयायातिबंधोजगतितानवम् ॥ ५७ ॥ वासनातानवंराममोक्षइत्युच्यतेबुधैः ॥ पदार्थवासनादार्ढ्यंबंधइत्यभिधीयते ॥ ५८ ॥ यशःप्रभृतिनायस्मैहेतुनैवविनापुनः ॥ भोगाइहनरोचंतेसजीवन्मुक्तउच्यते ॥ ५९ ॥ रामोयदेतज्जानातिवस्त्वस्तीत्येवसन्मुखात् ॥ आकर्ण्यचित्तविश्रांतिमाप्नोत्येवमुनीश्वराः ॥ ६० ॥ अत्रास्यचित्तविश्रांत्यैराघवस्यमहात्मनः ॥ युक्तिंकथयतुश्रीमान्वसिष्ठोभगवानयम् ॥ ६१ ॥

केंऽर्थनिश्चयइत्यमरः ॥ ५६ ॥ ५७ ॥ ५८ ॥ कीर्तिलाभादिनानिमित्तेनयस्मैभोगानरोचंतेसजीवन्मुक्तोमाभूदित्याह ॥ यशःप्रभृतिनेति ॥ यशःप्रभृतिनाहेतुनाविनैवेति ॥ ५९ ॥ ६० ॥ ६१ ॥ ॥ ॥ ॥ ॥ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ दृतिर्भस्त्रा ॥ ६६ ॥ ६७ ॥ ६८ ॥ आदिशसिआज्ञापयसि ॥ ६९ ॥ ७० ॥ इतीति ॥ परिकरबंधे ति ॥ अभिवदनोपयोगिनोयेपरिकरास्तेषांपरिकराणांबंधेनबंधनेनगृहीतंस्वीकृतंवक्तृतेजोयेनसःपरिकरबंधगृहीतवक्तृतेजाः॥७१॥ इतिश्री





रघूणामेषसर्वेषांप्रभुःकुलगुरुःसदा ॥ सर्वज्ञःसर्वसाक्षीचत्रिकालामलदर्शनः॥६२॥ वसिष्ठभगवन्पूर्वंक श्चित्स्मरसियत्स्वयम् ॥ आवयोर्वैरशांत्यर्थंश्रेयसेचमहाधिया ॥ ६३ ॥ उपदिष्टंभगवताज्ञानंपद्मभुवा मुहुः ॥ तदेवोपदिशाद्यत्वंरामायांतेनिवासिने ॥ ६४ ॥ तज्ज्ञानंचसशास्त्रार्थस्तद्वैदग्ध्यमखंडितम् ॥ सुशिष्यायाविरक्तायसाधोयदुपदिश्यते ॥ ६५ ॥ अशिष्यायाविरक्तायययत्किंचिदुपदिश्यते ॥ तत्प्रया त्यपवित्रत्वंगोक्षीरंश्वदृताविव ॥ ६६ ॥ इत्युक्तेगाधिपुत्रेणव्यासनारदपूर्वकाः ॥ मुनयस्तेतमेवार्थंसा धुसाध्वित्यपूजयन् ॥ ६७ अथोवाचमहातेजाराज्ञःपार्श्वेव्यवस्थितः॥ ब्रह्मेवब्रह्मणःपुत्रोवसिष्ठोभग वान्मुनिः ॥ ६८ ॥ मुनेयदादिशसिमेतदविघ्नंकरोम्यहम्॥ कःसमर्थःसमर्थोऽपिसतांलंघयितुंवचः॥६९॥ स्मराम्यखंडितंसर्वंसंसारभ्रमशांतये ॥ निषधाद्रौपुराप्रोक्तंयज्ज्ञानंपद्मयोनिना ॥ ७० ॥ वाल्मीकि रुवाच ॥ इतिनिगदितवानसौमहात्मापरिकरबंधगृहीतवक्तृतेजाः ॥ अकथयदिदमज्ञतोपशांत्यैपरम पदैकविबोधनंवसिष्ठः ॥ ७१ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायेवैराग्यप्रकरणेतृतीयःसर्गः ॥ ३ ॥ सं पूर्णमिदंवैराग्यप्रकरणम् ॥



मत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौवासिष्ठचंद्रिकायां वैराग्यप्रकरणंनामतृतीयःसर्गः ॥ ३ ॥

॥ ॐस्वस्ति ॥ श्रीगणेशायनमः ॥ पूर्वप्रकरणेननित्यानित्यवस्तुविवेकतोवैराग्यंशमाद्यंकुरबीजंमुमुक्षुफलपर्यवसायिप्राधान्येनप्रतिपादितम् । इदानींमुमुक्षव्यवहारः शमादीतिकर्तव्यताको मनननिदिध्यासनांगकश्रवणलक्षणउत्तरप्रकरणेनप्रतिपाद्यते । प्रसंगागतंचकिंचित्किंचित् । तत्राद्यश्लोकेनदैवाधीनंसर्वंपौरुषंव्यर्थमतोविचारविषयप्रयत्नपरतानाश्रयणीयेतीतरजनशंकागमंनिमित्तीकृत्यपरिहरति भगवान्वसिष्ठः ॥ सर्वमेवेति ॥ पौरुषंपुरुषकारउद्योगइत्यर्थः । एवशब्दस्यसमवाप्यतइत्यनेनापिसंबंधः ॥ १ ॥ पौरुषात्सर्वंसमवाप्यतेचेत्



ॐश्रीरामायनमः ॥ श्रीवसिष्ठउवाच ॥ सर्वदासर्वमेवेहसंसारेरघुनंदन ॥ सम्यक्प्रयुक्तात्सर्वेणपौरुषात्समवाप्यते ॥ १ ॥ उच्छास्त्रंशास्त्रितंचेतिद्विविधंपौरुषंस्मृतम् ॥ तत्रोच्छास्त्रमनर्थायपरमार्थायशास्त्रितम् ॥ २ ॥ आबाल्यादलमभ्यस्तैःशास्त्रसत्संगमादिभिः ॥ गुणैःपुरुषयत्नेनस्वार्थःसंप्राप्यतेहितः ॥ ३ ॥ श्रीरामउवाच ॥ प्राक्तनंवासनाजालंनियोजयतिमांयथा ॥ तथैवतिष्ठामिमुनेकृपणःकिंकरोम्यहम् ॥ ४ ॥ वसिष्ठउवाच ॥ अतएवहिहेरामश्रेयःप्राप्नोषिशाश्वतम् ॥ स्वप्रयत्नोपनीतेनपौरुषेणैवनान्यथा ॥ ५ ॥

अशास्त्रीयादपिपौरुषात्परमार्थप्राप्तिःस्यादतस्तदपिमुमुक्षुणानुष्ठेयंस्यादित्याशंक्याह ॥ उच्छास्त्रमिति ॥ २ ॥ परमार्थायशास्त्रितमित्येतत्प्रपंचयति ॥ आबाल्यादिति ॥ ३ ॥ वासनापारतंत्र्यात्स्वतंत्रप्रवृत्त्यास्वार्थःसंप्राप्तुंनशक्यतइत्याक्षिपति ॥ प्राक्तनमिति ॥ ४ ॥ परिहरति ॥ अतइति ॥ अतएवप्राक्तनवासनायाअनियोज्यत्वादेवस्वप्रयत्नोपनीतेनपौरुषेणैवपुरुषव्यापारेणैवश्रेयःप्राप्नोषि । अयमभिप्रायः । नपूर्ववासनातीव्रवायुवत्पुरुषंप्रेरयति । किंचिच्छोपसंहारमुखेनस्वातंत्र्यंप्रयच्छति तथासति स्वतंत्रप्रवृत्त्यास्वार्थःसंप्राप्तुंशक्यइति ॥ ५ ॥

स्वप्रयत्नोपनीतेनपौरुषेणैवश्रेयःप्राप्तिः । केनप्रकारेणेत्याशंक्यविभागेनप्राक्तनवासनाजालसद्भावंदर्शयंस्तत्रापिप्रकारंदर्शयति ॥ द्विविध इत्यादिना ॥ शुभाशुभवासनासमूहयोर्मध्येऽन्यतरस्यात्यल्पत्वेनाविद्यमानकल्पकत्वाभिप्रायेणद्वयोरेकतरोऽथवेत्युक्तम् ॥ ६ ॥ तत्रत योर्व्यूहयोर्मध्ये । तत्तर्हीत्यर्थः ॥ ७ ॥ ८ ॥ भावशब्देनवासनौघोऽत्रविवक्षितः । शुभाशुभवासनासमूहयोरन्यतरेणपुंसःप्रेर्यत्वेनिश्रेयसः प्राप्तिप्रकारमभिधायोभाभ्यांप्रेर्यत्वेऽपितमाह ॥ शुभाशुभाभ्यामिति ॥ ९ ॥ उक्तमर्थंप्रपंचयति ॥ अशुभेष्विति ॥ पुरुषार्थहेतुनेत्यर्थः

द्विविधोवासनाव्यूहःशुभश्चैवाशुभश्चते ॥ प्राक्तनोविद्यतेरामद्वयोरेकतरोऽथवा ॥६॥ वासनौघेनशुद्धे नतत्रचेदपनीयसे ॥ तत्क्रमेणशुभेनैवपदंप्राप्स्यसिशाश्वतम् ॥ ७ ॥ अथचेदशुभोभावस्त्वांयोजय तिसंकटे ॥ प्राक्तनस्तदसौयत्नाज्जेतव्योभवतास्वयम् ॥ ८ ॥ शुभाशुभाभ्यांमार्गाभ्यांवहंतीवासनास रित् ॥ पौरुषेणप्रयत्नेनयोजनीयाशुभेपथि ॥ ९ ॥ अशुभेषुसमाविष्टंशुभेष्वेवावतारयेत् ॥ स्वंमनः पुरुषार्थेनबलेनबलिनांवर ॥ १० ॥ अशुभाच्चालितंयातिशुभंतस्मादपीतरत् ॥ जंतोश्चित्तंतुशिशुवत् तस्मात्तच्चालयेद्बलात् ॥ ११ ॥ समतासांत्वनेनाशुनद्रागितिशनैःशनैः ॥ पौरुषेणप्रयत्नेनलालयेच्चित्त बालकम् ॥ १२ ॥

॥ १० ॥ शुभेष्ववतारणाययोग्यतांदर्शयन्नुक्तंनिगमयति ॥ अशुभादिति ॥ शुभोविषयःपौरुषमनपेक्ष्यैवस्वयमेवाशुभात्मनश्चालयति अ तःपौरुषंव्यर्थमित्याशंक्याहेत्येवमवतारयंतिकेचिदिमंश्लोकम् ॥ ११ ॥ चित्तस्यशिशुसमत्वेसतितदुचितंचालनप्रकारंदर्शयति ॥ समतेति ॥ हेचित्तबालक नामतोऽर्थतश्चविषादप्यधिकान्विषयान्माग्रहाण । प्रियाप्रियविषयप्राप्तौहर्षविषादरहिततालक्षणसमतांनिरतिशयसुखप्राप्ति कामाश्रयेत्येवंसमतासांत्वनेन । द्राक्शब्दोद्रुतार्थः । सद्योद्राक्मंक्षुसपदिद्रुतइत्यमरः ॥ १२ ॥

अशुभाच्चित्तचालनाभ्यासस्यसाफल्यंकदाभवतीत्यतआह ॥ प्रागिति ॥ अस्मिन्नपिजन्मन्यत्यभ्यासंकुर्वतस्तेप्रागभ्यासवशात् प्राग्जन्म नोऽभ्यासवशात् अथवाप्राक्पूर्ववयसिआबाल्यादलमभ्यस्तैरित्युक्तम् । द्रागितिक्वचित् । नन्वस्मिन्पक्षे नद्रागितिशनैःशनैरितिपूर्वश्लोको क्तंविरुद्ध्येतेतिचेन्न । चित्तनिग्रहारंभदशापेक्षयातथाविहितत्वात्तदुत्तरावस्थापेक्षयाद्रागित्यभिधानात् ॥ १३ ॥ अशुभवासनायाःशुभवा सनातआधिक्येतत्साम्येचकर्तव्यमभिधाय तत्संदेहेऽपितदाह ॥ संदिग्धायामिति ॥ शुभायामितिस्पष्टार्थः ॥ १४ ॥ ननु शुभवासनावृ द्धौदोषोनास्तीतिकथम् । तस्याअप्यविद्याकार्यत्वेनदोषावहत्वसंभवात् इत्याशंक्यात्मसाक्षात्कारपर्यंतमादेया ततःपरंत्याज्येत्याह ॥ अ

प्रागभ्यासवशाज्जातोयदातेवासनोदयः ॥ तदाभ्यासस्यसाफल्यंविद्धित्वमरिमर्दन ॥ १३ ॥ संदि ग्धायामपिभृशंशुभामेवसमाहर ॥ शुभायांवासनावृद्धौतातदोषोनकश्चन ॥ १४ ॥ अव्युत्पन्नमनाया वद्भवानज्ञाततत्पदः ॥ गुरुशास्त्रप्रमाणैस्तुनिर्णीतंतावदाचर ॥ १५॥ ततःपक्वकषायेणनूनंविज्ञातव स्तुना ॥ शुभोऽप्यसौपरित्याज्योवासनौघोनिरोधिना ॥ १६ ॥ यदतिसुभगमार्यसेवितंतच्छुभमनुसृ त्यमनोज्ञभावबुद्ध्या ॥ अधिगमयमदंसदाविशोकंतदनुतदप्यवमुच्यसाधुतिष्ठ ॥ १७ ॥

व्युत्पन्नेत्यादिश्लोकत्रयेण ॥ अज्ञातंतत्पदंब्रह्मस्वरूपंयेनसतथा । तुशब्दोऽवधारणे । तुस्याद्भेदेऽवधारणइत्यमरः ॥ १५ ॥ पक्वकषायेणद ग्धरागादिना विवेकिनेत्यर्थः ॥१६॥ अतिशोभनोभगोमाहात्म्यंयस्यतदतिसुभगम् । शुभवासनाजालमनुसृत्यमनोविशोकंपदमभिगम येतिसंबंधः । अधिगमयप्रापयेत्यर्थः । मनःज्ञभावबुद्ध्येतिपदच्छेदः । तत्रज्ञभावोज्ञत्वंतद्विशिष्टबुद्ध्येत्यर्थः । अथवामनोज्ञभावबुद्ध्येत्येकंप दम् । मनोज्ञोमनोहरोभावोऽभिप्रायोयस्याःसामनोज्ञभावा साचासौबुद्धिश्चतया । मनोज्ञभाव इतिसंबोधनं वा ॥ १७ ॥

गुरुशास्त्रप्रमाणैस्तुनिर्णीतंतावदाचरेत्युक्तंविवृण्वन्श्रोतव्यस्यज्ञानशास्त्रस्यविशिष्टसंप्रदायमूलत्वंपरमपुरुषार्थकरत्वंचाह ॥ अपुनरित्यादि श्लोकत्रयेण ॥ भावनांवासनाम् । उदारयामहत्त्याउत्तमयेत्यर्थः॥१८॥सुपूर्वेति॥ शोभनोयःपूर्वापरवाक्यार्थविचारःसएवविषयस्तस्मिन्नादृत म् । स्वपूर्वेतिक्वचित् तत्रस्वावधारणौयौपूर्वापरवाक्यार्थौतयोर्विचारविषयादृतमित्यर्थः । मनोविचारविषयादृतंसमरसमात्मनिसानुबंधंचकृ त्वा ॥ १९ ॥ शृण्वित्यन्वयः ॥ २० ॥ केनोक्तमितिस्पष्टार्थः ॥२१॥ ब्रह्मविद्यासंप्रदायकर्तुर्ब्रह्मणोमहत्त्वख्यापनाय परमकारणोत्पन्नत्व

वसिष्ठउवाच॥ अपुनर्ग्रहणायांतस्त्यक्त्वासंसारभावनाम् ॥ संपूर्णौशमसंतोषौचादायोदारयाधिया ॥ ॥ १८ ॥ सुपूर्वापरवाक्यार्थविचारविषयादृतम् ॥ मनःसमरसंकृत्वासानुसंधानमात्मनि ॥ १९ ॥ शृ णुरामपुराप्रोक्तंब्रह्मणापरमेष्ठिना ॥ सर्वदुःखक्षयकरंपरमाश्वासनंधियः ॥ २० ॥ श्रीरामउवाच ॥ के नोक्तंकारणेनेदंब्रह्मन्पूर्वंस्वयंभुवा ॥ कथंचभवताप्राप्तमेतत्कथयमेप्रभो ॥ २१ ॥ वसिष्ठउवाच ॥ अ स्त्यनंतविलासात्मासर्वगःसर्वसंश्रयः ॥ चिदाकाशोऽविनाशात्माप्रदीपःसर्ववस्तुषु ॥ २२ ॥ स्पंदा स्पंदसमाकारात्ततोविष्णुरजायत ॥ तस्यापिहृदयांभोजात्परमेष्ठीव्यजायत ॥ २३ ॥ सोऽसृजत्सक लंसर्गंविकल्पौघंयथामनः ॥ एतस्मिन्भारतेवर्षेनानाव्यसनसंकुलम् ॥ २४ ॥

जगत्कर्तृत्वेदर्शयन्केनोक्तमित्यादिप्रश्नद्वयस्योत्तरेआह ॥ अस्त्यनंतेत्यादिना ॥ यज्ज्ञात्वाहंसुखीस्थितइत्यंतेनग्रंथजातेन। अनंतविलासा त्माअनंतकार्यस्वरूपभूतः सर्ववस्तुषुविषयेषुप्रदीपोभासकः ॥ २२ ॥ स्पंदोजगद्रूपेणजृंभणं अस्पंदस्तद्विपर्ययः तयोःसमाकारात्समस्वरू पात् ॥ २३ ॥ सृज्यतइतिसर्गोजगत् । [illegible] ॥ विकल्पौघमिति ॥ विकल्पौघोमनोरथसमूहः ॥ २४ ॥

संप्रदायतोलब्धस्यैवज्ञानस्यमुक्तिदत्वंनान्यस्येतिदर्शयितुं ब्रह्मविदोलोकानुग्रहंमुक्त्वान्यत्कर्तव्यंनास्तीतिज्ञापयितुं पुरुषार्थसिद्धौभारतवर्ष



जनस्यैतस्यदुःखंसदृष्ट्वासकललोककृत् ॥ जगामकरुणामीशःपुत्रदुःखात्पितायथा ॥ २५ ॥ कएतेषां हताशानांदुःखस्यान्तोहतायुषाम् ॥ स्यादितिक्षणमेकाग्रश्चिंतयित्वात्वतप्यत ॥ २६ ॥ तपोदानंजप स्तीर्थंनात्यंतंदुःखशांतये ॥ तत्तावद्दुःखमोक्षार्थंज्ञानंप्रकथयाम्यहम् ॥ २७ ॥ इतिसंचिंत्यभगवा न्ब्रह्माकमलसंस्थितः ॥ मनसापरिसंकल्प्यमामुत्पादितवानिमम् ॥ २८ ॥ कमंडलुधरोनाथःसकमं डलुनामया ॥ साक्षमालंस्थितःपद्मेसप्रणम्याभिवादितः ॥२९॥ एहिपुत्रेतिमामुक्त्वासस्वाब्जस्योत्त रेदले ॥ मांनिवेश्यमहाबाहोप्रोवाचभगवानजः ॥ ३० ॥ मुहूर्तमात्रंतेपुत्रचेतोवानरचंचलम् ॥ अज्ञान मभ्याविशतुसबाष्पंदर्पणंयथा ॥ ३१ ॥ इतितेनाशुशप्तःसन्विचारंसमनंतरम् ॥ अहंविस्मृतवान्सर्वं स्वरूपममलंकिल ॥ ३२ ॥ अथाहंदीनतामेत्यास्थितोऽसंबुद्धयाधिया ॥ दुःखशोकाभिसंतप्तोजातोज नइवाधमः ॥ ३३ ॥ अथाभ्ययात्समांनाथःपुत्रकिंदुःखवानसि ॥ दुःखोपघातंमांपृच्छसुखीनित्यंभवि ष्यसि ॥ ३४ ॥ ततःपृष्टःसभगवान्मयासंसारभेषजम् ॥ कथंनाथमहादुःखमयःसंसारआगतः ॥ ३५॥ कथंचक्षीयतेनाथततस्तेनमहात्मना ॥ तज्ज्ञानंसुबहुप्रोक्तंयज्ज्ञात्वाहंसुखीस्थितः ॥ ३६ ॥



स्यान्यस्माद्विशिष्टतांचदर्शयितुमाह ॥ ततइति ॥ ३५ ॥ ३६ ॥

ततोविदितवेद्यमित्यादयःकर्तव्यमस्तीत्यतःप्राक्तनाःश्लोकाःस्पष्टार्थाः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ कल्पपर्यंतंक
र्मभूमावस्थानं गुरोर्वाक्यंपरिपालयतस्तवलोकानुग्रहार्थमेवकेवलंनभवति किंतुकृत्यशेषंचकर्तुंचेत्याशंक्याह ॥ कर्तव्यमिति ॥ अतिम
नाअतिक्रांतमना । जितमनाइत्यर्थः ॥ अथवातिमनाःप्रकृष्टमनाः । अविमनाइतिकचित् । तत्रविमनाःदुर्मनाःसनभवतीत्यविमनाः । अज्ञव

ततोविदितवेद्यंमांनिजायांप्रकृतौस्थितम् ॥ सउवाचजगत्कर्तावाक्यंसकलकारणम् ॥३७॥ शापेनाज्ञ
पदंनीत्वापृच्छकस्त्वंमयाकृतः ॥ पुत्रास्यज्ञानसारस्यसमस्तजनसिद्धये ॥ ३८ ॥ इदानींशांतशाप
स्त्वंबोधंपरमुपागतः ॥ गच्छवत्समहीपीठंजंबूद्वीपांतरस्थितम् ॥ ३९ ॥ साधोभारतवर्षेत्वंलोकानु
ग्रहहेतुना ॥ तत्रक्रियाकांडपरास्त्वयापुत्रमहाधियः ॥ ४० ॥ उपदेश्याःक्रियाकांडक्रमेणशमशालिना
॥ विरक्तचित्ताश्चतथामहाप्राज्ञाविचारिणः ॥ ४१ ॥ उपदेश्यास्त्वयासाधोज्ञानेनानंददायिना ॥४२॥
इतितेननियुक्तोऽहंपित्राकमलजन्मना ॥ इहसाधोऽवतिष्ठामियावद्भूतपरंपरा ॥ ४३ ॥ कर्तव्यमस्तिन
ममेहहिकिंचिदेवस्थातव्यमित्यतिमनाभुविसंस्थितोऽस्मि ॥ संशांतयासततसुप्तधियैववृत्त्याकार्यंक
रोमिनचकिंचिदहंकरोमि ॥ ४४ ॥

त्तवापिकार्येषुप्रवृत्तिदर्शनात् कथंकृतकृत्यस्त्वंतत्राह ॥ समिति ॥ संशांतया इष्टानिष्टप्राप्तौ हर्षविषादरहितया [सततंसुप्ताधीर्यस्यांवृत्तौत
यावृत्त्यावर्तनेन परमार्थदृष्ट्या प्रातिभासिकदृष्ट्यावा कार्यकर्तृत्वमुक्त्वा पारमार्थिकदृष्ट्यातदभावमाह ॥ नचेति ॥ धियःसुप्तत्वंसत्याद्वैत
विषयत्वम् । तथाचोक्तमाचार्यैः । सुषुप्तवज्जाग्रतियोनपश्यतिद्वयंतुपश्यन्नपिचाद्वयत्वतः । तथापिकुर्वन्नपिनिष्क्रियश्चयः सआत्मविन्नान्यइती

हनिश्चयइति ॥ अहमित्यात्मधीर्याचममेत्यात्मीयधीरपि । अर्थशून्येयदायस्यस आत्मज्ञोनचेतरइतिच ॥ तथाचभगवद्वचनम् ॥ यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेः इति ॥ ४४ ॥ एवंकेनोक्तमित्यादिप्रश्नोत्तरेआख्याय प्रसंगागतंचाकिंचिदुक्त्वा शृणुरामपुराप्रोक्तमितिवचनादभिमुखीभूतायरामाय ज्ञानंसोपायंविवक्षुर्विशिष्टपृच्छकवक्तृकयोरावयोःसंवादोऽवश्यंफलायकल्पतइतिदर्शयितुं पृच्छकवक्तारौलक्षयति ॥ अज्ञतेत्यादिश्लोकद्वयेन ॥ ४५ ॥ गुरुतःश्रुतयोःपूर्वापरवाक्यार्थयोरनन्विततयाक्षेपेकृतेतत्समाधानेक्षमासमर्थाबुद्धिर्यस्यत

श्रीवसिष्ठउवाच ॥ अज्ञतानज्ञतेपूर्वंवक्तुर्निर्णीयकार्यतः ॥ यःकरोतिनरःप्रश्नंपृच्छकःसमहामतिः ॥ ४५ ॥ पूर्वापरसमाधानक्षमबुद्धावनिंदिते ॥ पृष्टंप्राज्ञेनवक्तव्यंनाधमेपशुधर्मिणि ॥ ४६ ॥ मोक्षद्वारेद्वारपालाश्चत्वारःपरिकीर्तिताः ॥ शमोविचारःसंतोषश्चतुर्थःसाधुसंगमः ॥ ४७ ॥ एतेसेव्याःप्रयत्नेनचत्वारोद्वौत्रयोऽथवा ॥ द्वारमुद्घाटयंत्येतेमोक्षेराजगृहेयथा ॥ ४८ ॥ एकंवासर्वयत्नेनसर्वमुत्सृज्यसंश्रयेत् ॥ एकस्मिन्वशगेयांतिचत्वारोऽपिवशंयतः ॥४९॥ शास्त्रैःसज्जनसंसर्गपूर्वकैःसतपोदमैः ॥ आदौसंसारमुक्त्यर्थंप्रज्ञामेवाभिवर्धयेत् ॥ ५० ॥ दुःसहारामसंसारविषवेगविषूचिका ॥ योगगारुडमंत्रेणपावनेनप्रशाम्यते ॥ ५१ ॥

थातस्मिन् । अत्रैवंनियमः । पूर्वापरसमाधानक्षमबुद्धावेववक्तव्यं शिष्यायानिंदितायैववक्तव्यं पृष्टमेववक्तव्यमितिच ॥४६॥ संवादसाफल्यज्ञापनायपृच्छकवक्तृलक्षणेआख्यायादौमुमुक्षुकृत्यमाचष्टे ॥ मोक्षद्वारमित्यादिभिरभिवर्धयेदित्यंतैःश्लोकैः तेचस्पष्टार्थाः ॥ ४७॥४८॥४९॥ ॥ ५० ॥ अभिवृद्धयाप्रज्ञयाकिंभवेदित्यतआह ॥ दुःसहेति ॥ संसारएवविषवेगविषूचिका विषवेगोत्पन्नविषूचिकाख्यरोगः । योगोब्रह्मा

त्मैक्यविज्ञानंसएवगारुडमंत्रस्तेन। अयमेवयोगशब्दार्थइति। बृहद्वासिष्ठगतादेतच्छ्लोकोत्तरश्लोकात्। सचयोगःसज्जनेनसहशास्त्रविचारणा
त्परमार्थज्ञानमयोनूनंलभ्यतएवचेत्यस्मादवगम्यते। संसाररोगच्छेदकदृढप्रज्ञायैशमाद्युपेतआत्मानंविचारयेदित्युक्तम् ॥ ५१ ॥ इदानीमेव
मात्मानमविचारतोनिरतिशयदुःखमाह ॥ दुरंतेयमित्यादिना ॥ विषयाएवविषमविषूचिका। विषयविषूचिकेतिक्वचित्। तत्रविषयाएववि
षूचिकेत्यर्थः । नचिकित्स्यतेयदि तत्तर्हिनितरांसुतरांनरकाएवनगराणितेषांनिकराःसमूहास्तएवफलानितैरनुषंगोयस्याःसानरकनगर
निकरफलानुबंधिनीभूत्वातद्दुःखंकरोति ॥ किंतद्दुःखंकरोतीत्याकांक्षायामाह ॥ यत्रेति ॥ यत्रयस्मिन्नविषयविषमविषूचिकाजनित

दुरंतेयंकिलविषयविषजाविषूचिका यदिनचिकित्स्यतेतन्नितरांनरकनगरनिकरफलानुबंधिनीतदैत
त्करोति यत्राशिलाशितासिशतपातोत्पलताडनम् ॥ ५२ ॥ अग्निदाहोहिमावसेचनंअंगावकर्तनचं
दनचर्चानिरवधिनाराचनिकरनिपातोनिदाघविनोदनधारागृहशीकरवर्षेशिरच्छेदः सुखनिद्रामूकीक
रणमाननमुद्राबाधिर्यमहानुपचयः ॥५३॥ तदेवंरामशास्त्रेणावहेलयाव्यवहर्तव्यम्। अवश्यमेवविचार
णीयम्। एवंचावबोद्धव्यम् ॥ यथाकिलशास्त्रविचाराद्बोधोभवतीति ॥ ५४ ॥

दुःखेशितानांतेजितानामसीनांशतानांपातोगात्रेषूत्पलताडनंभवति ॥५२॥ यत्रेतिसर्वत्रसंबध्यते। यत्राग्निदाहः शरीरेहिमावसेचनंभवति।
अंगावकर्तनमवयवकृंतनंचंदनचर्चाचंदनलेपनम् ॥ नाराचाःसर्वलोहमयाबाणा निदाघविनोदनधारागृहशीकरवर्षणंनिदाघविनोदनायघर्म
विनाशाययंत्रप्रेरितजलधारावतिगृहेशीकरवर्षणमंबुकणवर्षणम्। आननमुद्राआस्यपिधानमित्यर्थः। उपचयोऽभिवृद्धिः। अयमभिप्रायः। म
हादुःखहेतवोऽप्यसिशतपातादयोयस्मिन्दुःखेदृश्यमानाःसुखहेतुवदाचरंतितन्निरतिशयदुःखंविषयविषमविषूचिकाकरोतीति ॥५३॥ यस्मा
देवंतस्माद्विषयरोगचिकित्सायांप्रयतितव्यमित्याह ॥ तदेवमिति ॥ अवहेला अवज्ञालीलावा काचिच्चिकित्साकर्तव्याविषयरोगनिवृत्तयेत

 

त्राह ॥ एवमिति ॥ किलशब्दः श्रुतीतिहासपुराणप्रसिद्धिद्योतनार्थः । सकलानर्थनिवृत्तिपरमानंदपदप्राप्तिकामेनशास्त्रार्थविचारःसम्यक्कर्तव्यइत्यर्थः ॥ ५४ ॥ ननुशास्त्रविचारात्सम्यग्ज्ञानविचारद्वारैवश्रेयोभवतितत्सम्यग्ज्ञानंविचारकारिणांसर्वेषांकिमितिनभवतितत्राह ॥ स्वेति ॥ यस्यपुरुषस्यसंततेनाभ्यासेनस्वानुभूत्यादित्रयसंवादोभवतितेनपुंसाआत्मावलोक्यतेसाक्षात्क्रियतेनान्येन ॥ ५५ ॥ कस्यशास्त्रस्यार्थविचारःश्रेयोऽर्थिनाकर्तव्यइत्यतआह ॥ किंचिदिति ॥ शास्त्रंमौर्ख्यापहमित्युक्तम् ॥ ५६ ॥ मौर्ख्यस्यावश्यहेयत्वमाह ॥ वरमिति ॥ ५७ ॥



स्वानुभूतेश्चशास्त्रस्यगुरोश्चैवैकवाक्यता ॥ यस्याभ्यासेनतेनात्मासंततेनावलोक्यते ॥ ५५ ॥ किंचित्संस्कृतबुद्धीनांश्रुतंशास्त्रमिदंयथा ॥ मौर्ख्यापहंतथाशास्त्रमन्यदस्तिनकिंचन ॥ ५६ ॥ वरंशरावहस्तस्यचांडालागारवीथिषु ॥ भिक्षार्थमटनंरामनमौर्ख्यहतजीवितम् ॥ ५७ ॥ नधनान्युपकुर्वंतिनमित्राणिनबांधवाः ॥ नहस्तपादचलनंनदेशांतरसंगमः ॥ ५८ ॥ नकायक्लेशवैधुर्यंनतीर्थायनजीवितम् ॥ केवलंतन्मनोमात्रजयेनासाद्यतेपरम् ॥ ५९ ॥ मोक्षद्वारेद्वारपालानिमान्शृणुयथाक्रमम् ॥ एषामेकतमासक्त्यामोक्षद्वारेप्रवेश्यते ॥ ६० ॥

शास्त्रार्थविचारवत्सत्पात्रेधनादिदानमपिब्रह्मप्राप्तावभ्यर्हितोपायइत्याशंकांनिराकरोति ॥ नधनानीत्यादिना ॥ यथाधनादिकंब्रह्मप्राप्तिकरंनभवति एवंविचारोऽपितत्प्राप्तिकरोनभवति । विचारवतामपिबहूनांतत्प्राप्त्यदर्शनादित्याशंक्याह ॥ केवलमिति ॥ मनोजयाभावादेवविचारवत्सुब्रह्मप्राप्तिर्नदृश्यतइतिभावः ॥ ५८ ॥ ५९ ॥ मोक्षद्वारेद्वारपालाइतियेपूर्वमुक्ताः यत्करणेपुरुषार्थउक्तःयदकरणेऽनर्थउक्तस्तान्प्रपंचयितुमारभते ॥ मोक्षइति ॥ ६० ॥

पूर्वस्मिन्नाकाशजाख्यानेचिन्मात्रस्वरूपस्यपरमात्मनोमायैवमनोभूत्वाजगत्सृजतीत्युक्तम् ।इदानींमायायाबहुदुर्घटहेतुत्वंजगन्मायिकत्व निश्चयदार्ढ्यायप्रपंचयितुंलीलाख्यानमवतारयति ॥ अत्रेदमिति ॥ तथाचमहद्भिरुक्तम् । पूर्वत्राकाशजाख्यानेचिन्मात्रस्यपरात्मनः ॥ यामायासामनोभूत्वासृजतीत्युपवर्णितम् । लीलाख्यानेनमायायाबहुदुर्घटहेतुता । प्रपंच्यतेमायिकत्वंजगत्येतत्स्फुटीभवेदिति ग्रंथस्तु चित्ताकाशमित्यतःप्राक्तनःस्पष्टार्थः । क्वचित्किंद्विविच्यते ॥ १ ॥ कुलपद्मःकुलालंकारः । पद्मशब्दोवापुल्लिंगेभवति । वापुंसिपद्मं इत्य मरः । विकाशवान्कीर्तिमान् अथवा मुखविकाशवान्नित्यप्रमुदितमुखइतियावत् ॥ २ ॥ मर्यादापालनांभोधिःमर्यादापालनेऽभोनिधि





वसिष्ठउवाच ॥ अत्रेदंमंडपाख्यानंशृणुश्रवणभूषणम् ॥ निःसंदेहोयथैषोऽर्थश्चित्तेविश्रांतिमेति ते ॥ १ ॥ आसीदस्मिन्महीपीठेकुलपद्मोविकाशवान् ॥ पद्मोनामनृपःश्रीमान्बहुपुत्रोविवेकवान् ॥ २ ॥ मर्यादापालनांभोधिर्द्विषत्तिमिरभास्करः ॥ सरःसद्गुणहंसानांदोषतृण्याहुताशनः ॥३॥ तस्यासीत्सुभगाभार्यालीलानामविलासिनी ॥ सर्वसौभाग्यवलिताकमलेवोदितावनौ ॥ ४ ॥ उद्विग्नेप्रोद्विग्नामुदितेमुदितासमाकुलाकुलिते ॥ प्रतिबिंबसमाक्रांतासंक्रुद्धेकेवलंभीता ॥ ५ ॥ सैकदाचिंतयामासशुभसंकल्पशालिनी ॥ प्राणेभ्योऽपिप्रियोभर्ताममैषजगतीपतिः ॥ ६ ॥

तुल्यः । यथांभोधिर्वेलांमर्यादांनातिक्रामति तथावर्णाश्रममर्यादांनातिक्रामतीत्यर्थः । द्विषत्तिमिरभास्करः शत्र्वंधकारसूर्यः । सद्गुणाःशोभ नगुणास्तेचहंसास्तेषांसरः । दोषतृण्याहुताशनःदोषाएवतृण्यातृणसमूहस्तस्यहुताशनोऽग्निः । पाशादिभ्योयइतिसमूहार्थेतृणशब्दाद्यःप्र त्ययः ॥ ३ ॥ शोभनोभगःश्रीर्यस्याःसासुभगा । कमलालक्ष्मीःउदितोत्पन्ना अवनिर्भूमिः । अवनाउदिताकमलेवेतिसंबंधः ॥ ४ ॥ भर्त र्युद्विग्नेसंतप्तेसतिप्रोद्विग्नाप्रकर्षेणसंतप्ताभवति ॥ ५ ॥ ६ ॥

यौवनोल्लासवान्यौवनोद्रेकवान् ॥ ७ ॥ ज्ञानंब्रह्मविषयं विद्यादेवताधर्मादिविषया ॥ ८ ॥ इत्यानीयेत्यत्रेतिशब्दस्यचिंतयामासेति पूर्वेणान्वयः । हेविप्राः मर्त्यानाममरत्वंकथंभवेदितिपुनःपुनःपप्रच्छेत्यन्वयः ॥ ९ ॥ यमाअहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः । सिद्धानां सिद्धयोऽणिमादयःसिद्धसिद्धयः ॥ १० ॥ ११ ॥ तत्तर्हिआत्मन्यद्वितीयानंदस्वरूपे संस्थास्ये सम्यक्पुनरुन्मज्जनायोग्यतयास्थितिंक

यौवनोल्लासवान्श्रीमान्कथंस्यादजरामरः ॥ भर्त्रानेनकथंसाकंरमेयुगशतान्यहम् ॥ ७ ॥
ज्ञानवृद्धांस्तपोवृद्धान्विद्यावृद्धानहंद्विजान् ॥ पृच्छामितावन्मरणंकथंनस्यान्नृणामिति ॥८॥
इत्यानीयाथसंपूज्यद्विजान्पप्रच्छसानता ॥ अमरत्वंकथंविप्राभवेदितिपुनःपुनः ॥९॥ विप्रा
ऊचुः ॥ तपोजपयमैर्देविसमस्ताःसिद्धसिद्धयः ॥ संप्राप्यंतेऽमरत्वंतुनकथंचनलभ्यते ॥ १०॥
इत्याकर्ण्यद्विजमुखाच्चिंतयामाससापुनः ॥ इदंस्वप्रज्ञयैवाशुभीताप्रियवियोगतः ॥ ११ ॥
मरणंभर्तुरग्रेमेयदिदैवाद्भविष्यति ॥ तत्सर्वदुःखनिर्मुक्तासंस्थास्येसुखमात्मनि ॥ १२ ॥
अथवर्षसहस्रेणभर्तादौचेन्मरिष्यति ॥ तत्करिष्येयथायेनजीवोगेहान्नयास्यति ॥ १३ ॥
तद्भ्रमद्भर्तृजीवेऽस्मिन्निजेशुद्धांतमंडपे ॥ भर्त्रावलोकितानित्यंनिवत्स्यामियथासुखम् ॥१४॥
अद्यैवारभ्यैतदर्थंदेवींज्ञप्तिंसरस्वतीम् ॥ जपोपवासनियमैरातोषंपूजयाम्यहम् ॥ १५ ॥
इतिनिश्चित्यसानाथमनुक्त्वैववरांगना ॥ यथाशास्त्रंचकारोग्रंतपोनियममास्थिता ॥ १६ ॥

रिष्ये ॥ १२ ॥ अथेतिपक्षांतरे ॥ १३ ॥ तत्तदाभ्रमद्भर्तृजीवेपरिभ्रमत्पतिजीवे शुद्धांतमंडपेअंतःपुरमंडपे ॥ १४ ॥ आतोषंतुष्टिपर्यंतम् ॥ १५ ॥ आस्थिताआश्रिता ॥ १६ ॥

प्राज्ञोधर्माद्यभिज्ञः विद्वान्ब्रह्मवित् देवद्विजगुरुप्राज्ञवृद्धपूजापरायणेतिक्कचित् ॥ १७ ॥ स्नानदानतपोध्यानेषुनित्यमुद्युक्तंशरीरंयस्याः सातथोक्ता। सर्वास्तिक्येनसदाचारकारिणीसर्वास्तिक्यसदाचारकारिणी ॥ १८ ॥ अनारतंसततंतपोनिष्ठामवलंब्यातिष्ठदित्यध्याहारः। अथवातिष्ठदित्यंतर्भावितण्यर्थः अस्थापयदित्यर्थः ॥१९॥ प्रतिमानिताप्रतिपूजिता आदरातिशयद्योतनायपूजिताप्रतिमानितेत्युक्तम्। प्र

त्रिरात्रस्यत्रिरात्रस्यपर्यंतेकृतपारणा ॥ देवद्विजगुरुप्राज्ञविद्वत्पूजापरायणा ॥ १७ ॥ स्नान
दानतपोध्याननित्योद्युक्तशरीरका ॥ सर्वास्तिक्यसदाचारकारिणीक्लेशहारिणी ॥ १८ ॥
त्रिरात्रशतमेवंसाबालानियमशालिनी ॥ अनारतंतपोनिष्ठामतिष्टत्कष्ठचेष्टया ॥ १९ ॥
त्रिरात्राणांशतेनाथपूजिताप्रतिमानिता ॥ तुष्टाभगवतीगौरीवागीशासमुवाचताम् ॥ २० ॥
निरंतरेणतपसाभर्तृभक्त्यतिशायिना ॥ परितुष्टास्मितेवत्सेगृहाणवरमीप्सितम् ॥ २१ ॥
राज्ञ्युवाच ॥ जयजन्मजराज्वालादाहदोषशशिप्रभे ॥ जयहार्दांधकारौघनिवारणरविप्रभे
॥ २२ ॥ अंबमातर्जगन्मातस्त्रायस्वकृपणामिमाम् ॥ इदंवरद्वयंदेहियदिहप्रार्थ्यतेमया ॥ २३ ॥
एकंतावद्विदेहस्यभर्तुर्जीवोममांतिकात् ॥ अस्मादेवहिमायार्सान्निजांतःपुरमंडपात् ॥ २४ ॥
द्वितीयंतुमहादेविप्रार्थयेऽहंयदायदा ॥ दर्शनायवरार्थेनतदामेदेहिदर्शनम् ॥ २५ ॥

तिमागतेतिक्कचित् ॥ २० ॥ भर्तृभक्त्यतिशायिनेति ॥ भर्तृभक्त्यतिशयितेन ॥ २१ ॥ जन्मजराएवज्वालास्ताभिर्दाहएवदोषस्त च्छामकशशिप्रभे। हृत्संबंधीहार्दः ॥ २२ ॥ २३ ॥ विदेहस्यमृतस्य ॥ २४ ॥ वरार्थेनवरप्रयोजनेनहेतुनादर्शनाययदात्वांप्रार्थयेतदाद र्शनंद्वितीयंवरंमेदेहीत्यन्वयः ॥ २५ ॥

॥ २६ ॥ २७ ॥ पक्षमासर्तुकटकइत्यादीनिपंच कालचक्रस्यविशेषणानि पक्षमासर्तवःकटकंनाभिवलयंयस्यतत्तथा । भूभृन्नितंबेवलये चक्रेचकटकोऽस्त्रियामित्यमरः । दिनान्यरायस्यतत्तथा । नाभिमारभ्यनेमिपर्यंतंपरितःसमर्पिताअयोविकाराअराउच्यंते । वर्षदंडकेसंवत्सराक्षके नाभिःपिंडिका स्पंदमयेस्पंदस्वरूपे रविगतेःकालव्यंजकत्वेनोपचारात्तन्मयत्वमुक्तम् । वहतीतिसतिसप्तमी ॥ २८ ॥ इष्टवियोग

इत्याकर्ण्यजगन्मातातथास्त्वेवमितिस्वयम् ॥ उक्त्वांतर्धानमगमत्प्रोत्थायोर्मिरिवार्णवे ॥ २६॥ अथसाराजमहिषीपरितुष्टेष्टदेवता ॥ पूर्णेवामृतवर्षेणबभूवानंदधारिणी ॥ २७ ॥ पक्षमासर्तुकटकेदिनारेवर्षदंडके ॥ क्षणनाभौस्पंदमयेकालचक्रेवहत्यथ ॥ अंतर्धिमाजगामास्याःपत्युस्तच्चेतनातनौ ॥ २८॥ मृतेतस्मिन्महीपालेशोकसंतापपीडिता ॥ निर्जलानलिनीवासौपरांम्लानिमुपाययौ ॥ २९ ॥ क्षिप्रमाक्रंदिनीक्षिप्रंमौनमूकावियोगिनी ॥ बभूवचक्रवाकीवमानिनीमरणोन्मुखी ॥ ३० ॥ अथतामतिमात्रविह्वलांसकृपाकाशभवासरस्वती ॥ शफरींह्रदशोषविह्वलांप्रथमावृष्टिरिवान्वकंपत ॥ ३१ ॥ सरस्वत्युवाच ॥ शवीभूतामिमंवत्सेभर्तारंपुष्पखंडके ॥ आच्छाद्यस्थापयैनंत्वंपुनर्भर्तारमाप्स्यसि ॥ ३२ ॥ पुष्पाणिम्लानिमेष्यंतिनोनवैषविनंक्ष्यति ॥ भूयश्चतवभर्तृत्वमचिरेणकरिष्यति ॥ ३३ ॥ एतदीयश्चजीवोऽसावाकाशविशदस्तव ॥ ननिर्गमिष्यतिक्षिप्रमितोंऽतःपुरमंडपात् ॥ ३४ ॥

जंदुःखंशोकः तापोदुःखमात्रं नलिनीपद्मिनी ॥ २९ ॥ ३० ॥ अतिमात्रविव्हलामत्यर्थपरवशां शफरीमत्स्यावांतरजातिः । प्रोष्ठीतुशफरीद्वयोरित्यमरः । क्षुद्रमत्स्यइतिकेचित् ॥ ३१ ॥ पुष्पखंडकेपुष्पसमूहे ॥ ३२ ॥ ३३ ॥ ३४ ॥

आह्वाययामासेतिणिजर्थोऽत्राविवक्षितः । आजुहावेत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ब्रह्मणिविदितेसतितस्मिंश्चित्तवृत्तिनिरोधात्मकाद्योगा दयोगिजनागोचरपदार्थदर्शनसामर्थ्यंसंभवति यतस्ततोलीलायाअंतःपुरमंडपाकाशेवर्तमानभर्तृदर्शनसामर्थ्यसिद्ध्यर्थं ब्रह्मस्वरूपंप्रतिपाद यतिभगवतीसरस्वती ॥ चित्ताकाशमित्यादिश्लोकद्वयेन ॥ ननुवक्ष्यमाणविदूरथभार्याभूतलीलायाइवब्रह्मप्रतिपादनादिकंविनापि लीलायै सृष्ट्यंतरदर्शनसामर्थ्यंकुतोनददातिसरस्वती ब्रह्मप्रतिपादनादावेवकुतःप्रवर्ततेइतिचेदुच्यते । लीलयालीलांतरवत्सांसारिकफलाभिलाषेणा नाराधितत्वादीश्वर्याःसंसारान्मुक्ताभवेयमित्यभिसंधायाराधितत्वाच्चसातदनुकूलमेवप्रवर्तते । चित्तमेवस्वच्छत्वसूक्ष्मत्वादिनाकाशकल्पत्वा

सादिव्यांभारतींश्रुत्वास्थापयित्वातथापतिम् ॥ दुःखादाह्वाययामासदेवींज्ञप्तिंसरस्वतीम् ॥ ३५॥ सरस्वत्युवाच ॥ किंस्मृत्वास्मित्वयावत्सेधत्सेकिमतिशोकताम् ॥ इत्युपेत्यपुरोज्ञप्तिस्तामुवाचसरस्वती ॥३६॥ लीलोवाच ॥ क्वममावस्थितोभर्ताकिंकरोत्यथकीदृशः ॥ समीपंनयमांतस्यनैकाशक्नोमिजीवितुम् ॥ ३७॥ ज्ञप्तिरुवाच ॥ चित्ताकाशंचिदाकाशमाकाशंचतृतीयकम् ॥ द्वाभ्यांशून्यतरंविद्धिचिदाकाशंवरानने ॥३८॥ देशाद्देशांतरप्राप्तौसंविदोमध्यमेवयत् ॥ निमेषेणचिदाकाशंतद्विद्धिवरवर्णिनि ॥ ३९ ॥

दाकाशं चित्परमात्मैवाकाशंचिदाकाशंआकाशंचमहाभूतसंज्ञंतृतीयमस्ति स्वच्छत्वसूक्ष्मत्वादिनाजगतिप्रसिद्धेषुतेषुत्रिषु यच्चिदाकाशंत द्वाभ्यांशून्यतरमत्यंतशून्यंविद्धि । अथवा आकाशंचतृतीयकमितिव्याकृतमुच्यते द्वाभ्यांशून्यतरमित्यनेनब्रह्मणोनिष्प्रपंचत्वमुक्तं चित्ता व्याकृतातिरिक्तप्रपंचाभावात् ॥३८॥ देशादिति ॥ संविदःचित्तस्यदेशाद्देशांतरप्राप्तौविषयाद्विषयांतरप्राप्तौसत्यां निमेषेणात्यल्पकालेनप्रती यमानंयन्मध्यमस्तितदेवचिदाकाशंविद्धिजानीहि । एतदुक्तंभवति । चित्तस्यपूर्ववृत्तौनष्टायामुत्तरवृत्तौभवित्र्यांमध्येयन्निर्विषयंसंधिसाक्षि भूतंचैतन्यंस्वयंप्रकाशते वृत्त्योर्मध्येप्रतीयमानत्वान्मध्यमित्युच्यमानं तच्चिदाकाशंविद्धीति । तथाच सप्तभूमिकानिरूपणावसरेवक्ष्यति ।

अर्थादर्थांतरंचित्तेयातिमध्येतुयास्थितिः । निरस्तमननाकारास्वरूपस्थितिरुच्यते इति । उक्तंचमहद्भिः । संधयोऽखिलवृत्तीनामभावाश्चा वभासिताः । निर्विकारेणयेनासौकूटस्थइतिगीयते इति ॥ ३९ ॥ एवंब्रह्मात्मकंचिदाकाशंप्रतिपाद्य तद्विषयंयोगंतत्फलंचाह ॥ तस्मिन्निति ॥ निरस्तोनिःशेषोनिरवशेषःसंकल्पोऽनात्मप्रत्ययलक्षणोययासातथोक्ता । एषिगच्छसि । इण्गतावितिधातोर्लण्मध्यमपुरुषैकवचनं प्राप्नोषि । अवगतिप्राप्तिद्वारामुच्यसइत्यर्थः । तथाचोक्तम् । वृत्तिहीनंमनःकृत्वाक्षेत्रज्ञंपरमात्मनि ॥ एकीकृत्यविमुच्येतयोगोऽयंमुख्यउच्यते

तस्मिन्निरस्तनिःशेषसंकल्पस्थितिमेषिचेत् ॥ सर्वात्मकंपदंशांतंतदाप्राप्नोष्यसंशयम् ॥ ४० ॥
अत्यंताभावसंपत्त्याजगतस्त्वेतदाप्यते ॥ नान्यथामद्वरेणाशुत्वंतुप्राप्स्यसिसुंदरि ॥ ४१ ॥
वसिष्ठउवाच ॥ इत्युक्त्वासाययौदेवीदिव्यमात्मीयमास्पदम् ॥लीलातुलीलयैवासीन्निर्विकल्पसमाधिभाक् ॥ ४२ ॥ तत्याजाथनिमेषेणसांतःकरणपंजरम् ॥ स्वदेहंखमिवोड्डीनामुक्तनीडाविहंगमी ॥ ४३ ॥ ददर्शखस्थंभर्तारंतस्मिन्नेवांबरालये ॥ संस्थितंपृथिवीपालमास्थानेबहुराजके ॥ ४४ ॥ सिंहासनसमारूढंजयजीवेतिसंस्तुतम् ॥ पूर्वद्वारस्थितासंख्यमुनिविप्रर्षिमंडलम् ॥ ४५ ॥ पश्चिमद्वारगाशेषराजराजेशमंडलम् ॥ उत्तरद्वारगासंख्यरथहस्त्यश्वसंकुलम् ॥ ४६ ॥

इति । यदासर्वाणिभूतानिसमाधिस्थोनपश्यति ॥ एकीभूतःपरेणासौतदाभवतिकेवलः इतिच ॥ ४० ॥ सर्वात्मकपदप्राप्तावुपायमाह ॥ अत्यंताभावसंपत्त्येति ॥ जगतोऽत्यंताभावसंपत्त्यात्यंतासत्त्वनिश्चयेनेतियावत् । एतत्सर्वात्मकंपदम् । मद्वरेणाश्वित्यादिर्यथापत्युरित्यतः प्राक्तनोग्रंथःस्पष्टार्थः । क्वचित्किंचिद्व्याख्यायते ॥ ४१ ॥ ४२ ॥ ४३ ॥ तस्मिन्नेवांबरालये स्वएवगृहाकाश इत्यर्थः ॥ ४४ ॥ जीवेतिक्रियापदम् ॥ ४५ ॥ ४६ ॥

पपातजगाम ॥ ४७ ॥ तच्छब्दैर्लीलयाप्रागनुभूतदेशादयःपरामृश्यंते । तालकाबंदिनः ॥ ४८ ॥ पुरंशाखानगरं पत्तनंमूलनगरं राजधानीत्यर्थः ॥ ४९ ॥ ५० ॥ भद्रासनगतांसिंहासनगताम् । नृपासनंयत्तद्भद्रासनंसिंहासनंचतदित्यमरः । शुभासनगतामिति ॥ ५१ ॥ पद्मनृपेणमरणानंतरक्षणएव तस्मिन्नेववसिष्ठगृहाकाशेदृष्टस्यप्रपंचांतरस्योत्पन्नावुचितदेशकालसाधनाद्यभावात्स्वप्नप्रपंचवन्मिथ्यात्वंनिश्चित्य तदृष्टांतेनसंभावितस्यजगन्मिथ्यात्वस्यनिश्चयाय पत्युःप्रपंचांतरभ्रमकारणं यथेत्यादिश्लोकेनपृच्छति ॥ तद्भ्रमकारणेविदितेतत्कारणकस्यस

दक्षिणद्वारगासंख्यललनालोकसंकुलम् ॥ पपाताथमहारंभासातांनरपतेःसभाम् ॥ ४७ ॥ तद्देशांस्तत्समाचारांस्तथातानेवतालकान् ॥ अथान्यालँप्यपूर्वांश्चपंडितान्सुहृदस्तथा॥४८॥ महानदनदीशैलपुरपत्तनमंडितान् ॥ द्विरष्टवर्षभूपालंप्राक्तन्याजरसोज्झितम् ॥ ४९ ॥ सर्वमालोक्यसाराज्ञीविस्मयंपरमंययौ ॥ अथाभ्युत्थायसाराज्ञीनिजांतःपुरमागता ॥ ५० ॥ देवींसस्मारविज्ञप्तिंददर्शचपुरःस्थिताम् ॥ भद्रासनगतांदेवींलीलापृच्छद्धुविस्थिता ॥ ५१ ॥ यथापत्युरमूर्तोऽस्मात्सर्गात्सर्गोभ्रमात्मकः ॥ जातस्तथाकथयमेजगद्भ्रमनिवृत्तये ॥५२॥ श्रीदेव्युवाच ॥ प्राक्स्मृतेर्भ्रांतिमात्रात्मासर्गोऽयमुदितोयथा ॥ तथाद्वितीयःपत्युस्तेयथैतत्कथ्यतेशृणु ॥५३॥

र्वस्यापिजगतोमिथ्यात्वंनिश्चेतुंशक्यतइतिमूर्तोमूर्तिताऽवयवःसनभवतीत्यमूर्तः । अमूर्तत्वेहेतुः ॥ भ्रमात्मकइति ॥ तस्मात्सर्गादन्यइत्यध्याहार्यम् ॥५२॥ सर्वोऽयंप्रपंचोभ्रमात्मकएव तत्रपूर्वभ्रमाद्युत्तरोत्तरभ्रमोत्पत्तिरितिसिद्धांतेस्थिते त्वत्पत्युर्मरणात्प्राक्तनप्रपंचभ्रमोयथापूर्वजन्मसंचितात्उत्पन्नस्तथामरणानंतरभाविप्रपंचभ्रमोऽपिपूर्वजन्मभावनायाउत्पन्नइत्युत्तरमाह ॥ प्रागिति ॥ दृष्टांतएवासंप्रतिपन्नइत्याशंक्याह ॥ यथैतदिति ॥ यथैतत्स्पष्टंभवतितथाकथ्यते ॥ ५३ ॥

पद्मलीलयोःसर्गांतरे ब्राह्मणदंपतितया पूर्वमवस्थानादिकंदर्शयितुं तदीयंपूर्वसंसारंजीर्णमंडपतयावर्णयतिहेयत्वाय ॥ अस्तिकश्चिदि त्यादिना ॥ संछाद्यतेऽनेनेतिसंछादनं आकाशमेवनीलत्वात्काचदलात्मकसंछादनं तेनाच्छादिताकृतिराकारोयस्यसतथा ॥ ५४ ॥ मेरुरेवस्तंभस्तत्स्थायालोकेशानामिंद्रादीनांपुरंध्र्यः कुटुंबिन्यस्ताएवशालभंजिकाःपुत्तलिकायस्यसतथा । मंडपश्चिरकालस्थोवल्मीकव्या प्तलोष्टकोभवति तथासंसारमंडपोऽपिकोणस्थभूतवल्मीकव्याप्तपर्वतलोष्टकः । लोष्टंपांशुपिंडः पर्वतकोणेषुस्थिताःप्राणिनोभूतशब्देनोच्यंते । पर्वताएवलोष्टानि कोणस्थभूतान्येववल्मीकानितैर्व्याप्तानिपर्वतलोष्टानियस्मिन्सतथा । अथवा कोणस्थानिभूतवल्मीकव्याप्तानिपर्वत

अस्तिकश्चिच्चिदाकाशेक्वचित्संसारमंडपः ॥ अकाशविशदःकाचदलसंछादिताकृतिः ॥ ५४ ॥
मेरुस्तंभस्थलोकेशपुरंध्रीशालभंजिकः ॥ कोणस्थभूतवल्मीकव्याप्तपर्वतलोष्टकः ॥ ५५ ॥ अ
नेकपुत्रजरठप्रजेशब्राह्मणास्पदम् ॥ वातमार्गमहावंशस्थितवैमानिकीटकः ॥ ५६ ॥ नभोनि
वासिसिद्धौघमशकाहितघुंघुमः ॥ सुरासुरादिदुर्बाललीलाकलकलाकुलः ॥ ५७ ॥

लोष्टानियस्यसतथोक्तः ॥ ५५ ॥ जरठोजरायुक्तः अनेकेपुत्रामरीच्यादयोयस्यसोऽनेकपुत्रः अनेकपुत्रोजरठश्चयःप्रजेशोब्राह्मणस्तस्यास्पदं स्थानं मंडपोह्यूर्ध्वभागेतिर्यगायतमहावंशस्थितकीटकोभवति तथासंसारमंडपोऽपीत्याह ॥ वातेति ॥ मेघमार्गसौरमार्गयोर्मध्येवातमा र्गःप्रसिद्धः । यंमार्गमासाद्यभीमसेनेनप्रक्षिप्ताअनेकसहस्रगजास्तूलायंतेस्म । वैमानिनोविमानगामिनस्तएवकीटकाः । वातमार्गएवम हावंशस्तस्मिन्स्थितावैमानिकीटायस्यसतथा ॥ ५६ ॥ नभोनिवासिसिद्धौघाएवमशकास्तैराहितःकृतोघुंघुमोघुंघुमध्वनिर्यस्मिन्सतथा । सुरादयएवदुर्बालाडुष्टबालास्तेषांलीलाकलकलेनलीलाकोलाहलेनाकुलः ॥ ५७ ॥

तत्रकस्मिंश्चिदित्यादिरेषतेकथितइत्यंतःप्राक्तनोग्रंथसंदर्भःस्पष्टार्थः । तत्रकानिचित्पदानिविविच्यंते । अपवरकंगर्भागारः । शैललोष्टतले पर्वतलोष्टाधः । गिरिग्रामइतिग्रामनाम सचग्रामःपर्वतस्यनिम्नप्रदेशस्थइतिदर्शयितुंगर्तकशब्दः ॥ ५८ ॥ उपगूढेआलिंगिते ॥ ५९ ॥ व सिष्ठस्येवसदृशइत्यत्रेवशब्दोऽवधारणे । वसिष्ठस्यसदृशएवनतुवासिष्ठचेतनःनैववसिष्ठसंबंधीजोवः प्रसिद्धवसिष्ठादन्यएवेत्यर्थः ॥ ६० ॥ व



तत्रकस्मिंश्चिदेकस्मिन्कोणापवरकोदरे ॥ शैललोष्टतलेऽस्त्येकोगिरिग्रामकगर्तकः ॥ ५८ ॥ त स्मिन्नदीशैलवनोपगूढेसाग्निःसदारःश्रुतवानरोगः ॥ गोक्षीरवान्राजभयानभिज्ञःसर्वातिथि र्धर्मपरोद्विजोऽभूत् ॥ ५९ ॥ वित्तवेषवयःकर्मविद्याविभवचेष्टितैः ॥ वसिष्ठस्येवसदृशोनतुवा सिष्ठचेतनः ॥ ६० ॥ वसिष्ठइतिनाम्नासौतस्याभूदिंदुसुंदरी ॥ नाम्नात्वरुंधतीभार्याभूमौव्यो मन्यरुंधती ॥ ६१ ॥ वित्तवेषवयःकर्मविद्याविभवचेष्टितैः ॥ समैवसाप्यरुंधत्यातुनचैतन्यवत्तया ॥ ६२ ॥ सविप्रस्तस्यशैलस्यसानौसरलशाद्वले ॥ कदाचिदुपविष्टःसन्ददर्शाधोमहीपतिम् ॥ ६३ ॥ समग्रपरिवारेणयातमाखेटकेच्छया ॥ तमालोक्यमहीपालमिदंचिंतितवानसौ ॥ ६४ ॥ अहो नुरम्यान्नृपतासर्वसौभाग्यलालिता ॥ कदास्यांदशदिक्कुंजपूरकोऽहंमहीपतिः ॥ ६५ ॥

सिष्ठइतिनाम्नासौविख्यातइतिशेषः ॥ ६१ ॥ ६२ ॥ सरलशाद्वलेसरलैःपूतिकाष्ठाख्यवृक्षैःशाद्वलेहरिते । पीतद्रुःसरलःपूतिकाष्ठंचेत्यमरः । यद्यपि । शाद्वलःशादहरितइतिशादेनषष्पेणहरितेनोलेदेशेशाद्वलशब्दमाहामरः । पाणिनिरपि शादोऽस्त्यस्मिन्प्रदेशइत्येवमर्थे नडशादा ड्वलजितिड्वलच्प्रत्ययमाह । तथापितस्यार्थस्यात्रासंभवाच्छाद्वलशब्देनहरितत्वमेवविवक्षितम् ॥ ६३ ॥ आखेटोमृगया ॥ ६४ ॥ ६५ ॥

॥ ६६ ॥ ६७ ॥ हिममेवांभोजनाशकत्वादशनिर्हिमाशनिः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ पंचत्वंमरणम् । स्यात्पंचताकालधर्मोदिष्टांतःप्रलयोऽत्ययइत्यमरः। जीवाकाशतयाजीवएवस्वच्छत्वसूक्ष्मत्वादिनाकाशकल्पत्वादाकाशस्तस्यभावस्तत्तातया॥ ७२॥ संपन्नइतिस्वयमाकाशवपु

पदातिरथहस्त्यश्वपताकाछत्रचामरैः ॥ कदामेवायवःकुंदमकरंदसुगंधयः ॥ ६६ ॥ यास्यंत्यंतःपुरस्त्रीणांसुरतश्रमशीकरान् ॥ इत्थंततःप्रभृत्येवविप्रःसंकल्पवानभूत् ॥ ६७ ॥ स्वधर्मनिरतोनित्यंयावज्जीवमतंद्रितः ॥ हिमाशनिरिवांभोजंजर्जरीकर्तुमाहृतः ॥ ६८ ॥ तंतथाचिंतयाविष्टंजराद्विजमुपाययौ ॥ आसन्नमरणस्यास्यभार्याम्लानिमुपागता ॥ ६९ ॥ मामप्याराधितवतीसाततस्त्वमिवांगने ॥ अमरत्वंसुदुष्प्रापंबुद्ध्वमंसावृणोद्वरम् ॥ ७० ॥ देविस्वमंडपादेवजीवोभर्तुर्मृतस्यमे ॥ मायासीदित्यतस्तस्याःसएवांगीकृतोमया ॥ ७१ ॥ अथकालवशाद्विप्रःसपंचत्वमुपाययौ ॥ तास्मिन्नेवगृहाकाशेजीवाकाशतयास्थितः ॥ ७२ ॥ संपन्नःप्राक्तनानल्पसंकल्पवशतःस्वयम् ॥ आकाशवपुरेवोर्वीपतिःपरमशक्तिमान् ॥ ७३ ॥ तस्मिन्विप्रेशवीभूतेशोकेनात्यंतकर्शिता ॥ सातस्यब्राह्मणीभार्याहृदयेनद्विधागमत् ॥ ७४ ॥ भर्त्रासहशवीभूतादेहमुत्सृज्यदूरतः ॥ आतिवाहिकदेहेनसाभर्तारमुपाययौ ॥ ७५ ॥ तत्रास्यविप्रस्यसुतागृहाणिभूस्थावरादीनिधनानिसंति ॥ अद्याष्टमंवासरमाप्यमृत्योर्जीवोगिरिग्रामककंदरस्थः ॥ ७६ ॥

रेवसन्प्राक्तनानल्पसंकल्पवशतःपरमशक्तिमानुर्वीपतिःसंपन्नइत्यन्वयः॥ ७३ ॥ ७४ ॥ ७५ ॥ कंदरोदरी । दरीतुकंदरोवास्त्रीत्यमरः ॥ ७६॥

सतेभर्तेति ॥ सद्विजोभूपत्वमागतःसन्नद्यतेभर्तासंपन्नइत्यन्वयः ॥ ७७॥ शिवौपार्वतीपरमेश्वरौ ॥७८॥ तद्यावयोःप्राक्तनःसंसारःसत्यइति शंकानिरसनेनोपसंहरंतीफलितमाह ॥एषइति॥ भ्रांतिमात्रकंइतिविशेष्यमाकाशमितिविशेषणम् । यःसर्गोऽवभासतेसएवमुक्तेनन्यायेनाका शमर्थशून्यंभ्रांतिमात्रकंहीत्यन्वयः ॥ ७९ ॥ अनन्वितार्थतयोक्तमाक्षिपति ॥ देवित्वद्वचनमित्यादिना ॥ ८० ॥ अमीवयंयत्रदेशांतरा

देव्युवाच ॥ सतेभर्ताद्यसंपन्नोद्विजोभूपत्वमागतः ॥ यासावरुंधतीनाम्नाब्राह्मणीसात्वमंगने ॥ ७७॥ इहेमौकुरुतोराज्यंतौभवंतौसुदंपती ॥ चक्रवाकाविवनवौभुविजातौशिवाविव ॥ ७८ ॥ एषतेकथितःसर्गःप्राक्तनःसंसृतिभ्रमः ॥ भ्रांतिमात्रकमाकाशमेवंसर्गोहिभासते ॥ ७९ ॥ लीलोवाच ॥ देवित्वद्वचनंमिथ्याकथंसंपन्नमीदृशं ॥ क्वविप्रजीवःस्वगृहेक्वामीवयमिहस्थिताः ॥ ८० ॥ तादृग्लोकांतरंसाभूस्तेशैलास्तादिशोदश ॥ कथंमांतिगृहस्यांतर्यत्रामीवयमास्महे ॥ ८१ ॥ मत्तऐरावणोबद्धःसर्षपाकोणकोटरे ॥ मशकेनकृतंयुद्धंसिंहौघैरणुकोटरे ॥ ८२ ॥ पद्माक्षेस्थापितोमेरुर्निगीर्णोभृंगसूनुना ॥ असमंजसमेवैतद्यथेमंदेवितादृशम् ॥ ८३ ॥ देव्युवाच ॥ नाहंमिथ्यावदामीदंयथावच्छृणुसुंदरि ॥ भेदनंनियतीनांहिक्रियतेनास्मदादिभिः ॥ ८४ ॥

दिष्विदानीमास्महेतादृग्देशांतरादयोवसिष्ठविप्रगृहस्यांतःकथंमांति नकथमपीत्यर्थः । वसिष्ठविप्रदेशापेक्षयांतरशब्दः । कथंमांतिगृहस्यांत र्मद्भर्तादयेष्ववस्थितः इतिक्वचित् ॥ ८१ ॥ ऐरावणऐरावतः । ऐरावतोऽभ्रमातंगैरावणाभ्रमुवल्लभा इत्यमरः ॥ ८२ ॥ ८३ ॥ ईश्वर्यामम परमाप्तत्वात् परिज्ञानविलसितमिदंचोद्यमित्यभिप्रायेणपरिहरति ॥ नाहंमिथ्यावदामीत्यादिना ॥ नियतीनांजगन्मर्यादानाम् ॥ ८४ ॥

ग्रामद्विजजीवात्मा गिरिग्रामब्राह्मणजीवात्माव्योमात्माचित्तशरीरः । चित्ताकाशंचिदाकाशमितिहिपूर्वमुक्तम् । अथवाव्योमात्मानिरा कारःव्योमैवेदंमहीराष्ट्रंनिजस्वरूपमेवेदंमहीसहितंराष्ट्रंस्वप्नदृगिवपश्यति ॥ ८५॥ ननुतर्ह्यावयोःपूर्वसंसारविषयास्मृतिःकुतोनानुवर्तते कुत इयंतद्विपरीतप्रवृत्तिरुदितेत्यतआह ॥ प्राक्तनीति ॥ जागरेऽनुभूतपदार्थविषयास्मृतिः स्वप्नावस्थायांयथानजायतेऽन्यथाप्रतीतिश्चजाय ते तथापूर्वजन्मन्यनुभूतपदार्थविषयास्मृतिरस्मिन्नजन्मनिलुप्ताभवतिनानुवर्तते । पूर्वजन्मनिभावनाविशेषादन्यथाप्रतीतिश्चोत्पद्यतेस्म ए तन्मरणं तत्रकारणमितिशेषः । मरणंहिसंस्कारलक्षणंस्मृतिबीजंविप्रतिमृद्नाति अतःस्मृतिर्नानुवर्ततइतिभावः ॥ ८६ ॥ कथंमांतिगृह

सग्रामद्विजजीवात्मातस्मिन्नेवस्वसद्मनि ॥ व्योमैवेदंमहीराष्ट्रंव्योमात्मैवप्रपश्यति ॥ ८५ ॥ प्रा क्तनीसास्मृतिर्लुप्तायुवयोरुदितान्यथा ॥ स्वप्नेजाग्रत्स्मृतिर्यद्वद्तन्मरणमंगने ॥ ८६ ॥ इयमंतःस्थि ताभूमिःसंकल्पादर्शयोरिव ॥ तस्यसत्यावभासस्यचिद्व्योम्नःकोशकोटरे ॥ ८७॥ परमाणौसंतिवत्से जीवेप्रतिचिदात्मनि ॥ अंतरंतर्जगंतीतिप्रतिभासात्मकान्युत ॥ ८८ ॥

स्यांतरितिचोद्यपरिहारंविशदयति ॥ इयमिति ॥ सत्यतयावभासोयस्यससत्यावभासस्तस्यचिद्व्योम्नः परमात्माकाशस्यकोशोजीवत्वोपा धिभूतमन्तःकरणं तस्यकोटरेऽभ्यंतरे तत्राप्यंतरियंभूमिःसशैलवनकाननास्थिता । संकल्पशब्देनमनोराज्यंप्रकुर्वतःपुंसःसंकल्पोगृह्यते अथ वांतःस्थितामनसिस्थिता अस्मिन्पक्षेतस्येत्यादेरुपरिसंबंधः ॥ ८७ ॥ जगदंतर्वर्ततइत्येतत्कचिदेव सर्वत्रेतिनमंतव्यमित्याह ॥ परमाणा विति ॥ चिदात्मनिब्रह्मणिपरमाणौजीवेपरमसूक्ष्मांतःकरणोपहितत्वाज्जीवस्यपरमाणुत्वम् । वालाग्रशतभागस्यशतधाकल्पितस्यच । भा गोजीवःसविज्ञेयइतिश्रुतेः । अंतरंतःप्रतिभासमात्रकारणानिजगन्त्येवंविधानिजगंतिसंति संसारस्यानादित्वात् । दृष्टेरेवसृष्टित्वात्स्व प्नावस्थायामतिसूक्ष्मनाडीगततयाणुकल्पेजीवेऽन्तरंतर्जगतांदर्शनाच्च । प्रतिजीवमंतरंतर्जगंतिसंतीत्युपपन्नमुक्तम् ॥ ८८ ॥

अष्टमेदिवसइत्यादिश्लोकद्वयंस्पष्टार्थम् ॥ ८९ ॥ चिद्विलासैकरूपिणश्चिद्विवर्तैकस्वरूपात् ॥ ९० ॥ कथंतर्हिप्रतिभासशब्दितभ्रांतिक्रमइ तितत्राह ॥ यथावदित्यादि ॥ मरणद्वारमूर्छनामरणमूर्छनाताम् ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ चिदात्मव्यतिरिक्तस्यसर्वस्यमिथ्यात्व परिज्ञानमात्मनआवेदयंत्याह ॥ अहोइति ॥ एवमाप्तोक्त्याप्रपंचमिथ्यात्वंविज्ञायोक्तार्थप्रत्यक्षीकरणादिनातद्दार्ढ्यार्थंप्रयतते लीला ॥ इ

लीलोवाच ॥ अष्टमेदिवसेविप्रःसमृतःपरमेश्वरि ॥ गतोवर्षगणोऽस्माकंमातःकथमिदंभवेत् ॥ ८९ ॥ देव्युवाच ॥ देशदैर्घ्यंयथानास्तिकालदैर्घ्यंतथांगने ॥ प्रतिभामात्रकादन्यच्चिद्विलासैकरूपिणः ॥ ९० ॥ यथावत्प्रतिभासस्यवत्सैक्रमामिमंशृणु ॥ अनुभूयक्षणंजीवोमिथ्यामरणमूर्छनाम् ॥ ९१ ॥ विस्मृत्य प्राक्तनंभावमन्यंपश्यतिसुव्रते ॥ आधेयोऽहमिहाधारेस्थितोऽहमितिसुंदरि ॥ ९२ ॥ हस्तपादादिमान्दे होममायमितिपश्यति ॥ एतस्याहंपितुःपुत्रोवर्षाण्येतानिसंतिमे ॥ ९३ ॥ इमेमेबांधवारम्याममेदंर म्यमास्पदम् ॥ इतिभ्रांतिर्जगत्यत्रमृतिमोहादनंतरम् ॥ ९४ ॥ लीलोवाच ॥ अहोनुपरमाद्दृष्टिर्दर्शि तादेविमेत्वया ॥ इदानीमहमेतस्यांयावत्परिणतादृशि ॥ ९५ ॥ नाभ्यासेनविनातावद्धिन्धीदंदेवि कौतुकम् ॥ सर्गब्राह्मणदंपत्योस्तंमांनयमहेश्वरि ॥ ९६ ॥ देव्युवाच ॥ अचेत्यचिद्रूपमयींपरमांपा वनींदृशम् ॥ अवलंब्येममाकारमवमुच्यभवामला ॥ ९७ ॥

दानीमिति ॥ अभ्यासेनविनैतस्यांदृशिदृष्टाविदानींयावत्परिणतापक्वाप्रौढानभविष्यामितावदिदंकौतुकंकुतूहलंभिन्धिविदारय । सृज्यतइ तिसर्गःप्रपंचस्तंसर्गंनेतुंसमर्थात्वमित्याह ॥ महेश्वरीति ॥ ९५ ॥ ९६ ॥ लीलायाःस्थूलशरीरेणसर्गांतरनयनकारणकर्मपश्यंतीभगव

ती ब्रह्मविद्यादानव्यग्रंतदीयंपुण्यपुंजमाकलय्य तदनुरूपमाह ॥ अचेत्येत्यादि ॥ चेत्यादृश्याःशब्दादयोनविद्यंतेयस्मिंस्तदचेत्यंचिद्रूपं तन्मयींतत्प्रधानांतद्विषयामितियावत् दृशमवगतिम् ॥ ९७ ॥ सहसंभूय अनर्गलमबाध्यं अथवानर्गलमप्रतिबंधकंयथातथापश्यावः ॥९८॥ ननुस्थूलशरीरस्यसर्गांतरदर्शनद्वारभूतगमनप्रतिबंधकत्वंकुतइत्याशंक्याह ॥ जगंतीति ॥ अमूर्तानिमूर्छितावयवानिनभवंतीत्यमूर्तानी मानिजगंति भवद्भिरज्ञैर्जीवैर्मुधाग्रहाद्व्यर्थाभिनिवेशान्मूर्तिमंत्यवयवमूर्छनवंत्यवबुद्धानि । यथाहुः । मूर्छनंमूर्छतिचमूर्तिरिति । तत्त्वविपरी तग्रहणेदृष्टांतमाह ॥ हेमानीति ॥ ऊर्मिकाधियाअंगुलीयकबुद्ध्या । अंगुलीयकमूर्मिकेत्यमरः । नहिहैममूर्मिकात्वंनिपुणतरंचक्षुषापरिवी क्ष्यमाणंसंस्थानविशेषापन्नेभ्यस्तेभ्योव्यतिरिक्तमुपलभ्यते । अतस्तानियथोर्मिकाबुद्ध्यामूढैर्विपरीतगृहीतानि । तथानिराकाराण्यपिजगं

एवंस्थितेतंपश्यावःसहसर्गमनर्गलम् ॥ अयंतद्दर्शनद्वारेदेहस्तवमहार्गलः ॥ ९८ ॥ जगंतीमा न्यमूर्तानिमूर्तिमंतिमुधाग्रहात् ॥ भवद्भिरवबुद्धानिहैमानीवोर्मिकाधिया ॥ ९९ ॥ तवाभ्यासं विनाबालेनाकारोब्रह्मतांगतः ॥ स्थितःकलनरूपात्मातेनत्वंनानुपश्यसि ॥ २०० ॥ तत्ररू ढिमुपायातायइमेत्वस्मदादयः ॥ अभ्यासाद्ब्रह्मसंवित्तेःपश्यामस्तेहितत्पदम् ॥ १ ॥

तिसाकारतयाभ्रांतिगृहीतानि । तस्मान्मूर्तस्यशरीरस्य मूर्त्यंतरेणप्रतिरोधात्प्रपंचांतरदर्शनद्वारभूतगमनार्गलत्वंयुक्तम् ॥ ९९ ॥ नकेवलंदेहः सर्गांतरद्वारगमनप्रतिबंधकस्तत्त्वज्ञानप्रतिबंधकश्चेत्याह ॥ तवेति ॥ तवाकारआकृतिर्वक्ष्यमाणज्ञानाभ्यासंविनाब्रह्मतामधिष्ठानभूतब्रह्मत्वंन गतः । अधिष्ठानब्रह्मव्यतिरेकेणासन्नितिननिश्चितइतियावत् । कलनरूपात्मास्थितः कलनरूपंकल्पनास्वरूपंतदेवात्मास्वरूपंयस्यसतथा तेनकारणेननानुपश्यसितद्ब्रह्मेतिशेषः । तथाचोक्तंबृहद्वासिष्ठे । यावदभ्यासयोगेननयाताभेदभीस्तव । नूनंतावदतद्रूपानब्रह्मपरिपश्यसी ति ॥ २०० ॥ तर्हिभवत्प्रभृतिभिःप्रतिबंधकेशरीरादिभ्रमेस्थितेकथंतद्ब्रह्मदृश्यतइत्याशंक्याह ॥ तत्रेति ॥ यइमेऽस्मदादयोब्रह्मसंवित्ते

ब्रह्मज्ञानस्याभ्यासात्तत्रज्ञानाभ्यासेरूढिमुपायाताःप्रसिद्धिमुपागतास्तेवयंहितस्मात्तज्ज्ञेयंपश्यामोऽनुभवामः । अयमभिप्रायः । ब्रह्मज्ञाना भ्यासपरिपाकाद्देहाद्यात्मत्वभ्रमकारणभूतवासनालयेप्रतिबंधकाभावादस्मदादिभिर्ब्रह्मात्मतत्त्वंकरामलकवदनुभूयतइति ॥ १ ॥ देहस्य कलनरूपत्वमसिद्धमित्याशंक्याह ॥ आतिवाहिकइति ॥ अतिवाह्यतेतंतंदेशमप्रतिहतयागत्यानीयतइत्यातिवाहिकः सूक्ष्मचित्तदेहकःआ तिवाहिकएवसूक्ष्मएव सचताहशैरज्ञैश्चिरभावनाच्चिरकालविपरीतभावनादाधिभौतिकयाआधिभौतिकोऽयमित्येवमाकारयाबुद्ध्यागृहीतः ॥ २ ॥ तर्ह्यातिवाहिकतासहजाचित्तदेहंकदायास्यतीत्यतआह ॥ वासनेति ॥ ज्ञानाभ्यासेनवासना तानवंद्वैतवासनाल्पत्वंयदातेनूनंस्थि

आतिवाहिकएवायंत्वादृशैश्चित्तदेहकः ॥ आधिभौतिकयाबुद्ध्यागृहीतश्चिरभावनात् ॥२॥ वा सनातानवंनूनंयदातेस्थितिमेष्यति ॥ तदातिवाहिकोभावःपुनरेष्यतिदेहके ॥ ३ ॥ शुद्धस त्त्वानुपतितंचेतःप्रतनुवासनम् ॥ आतिवाहिकतामेतिहिमंतापादिवांबुताम् ॥ ४ ॥ वासना तानवेतस्मात्कुरुयत्नमनिंदिते ॥ तस्मिन्प्रौढिमुपायातेजीवन्मुक्ताभविष्यसि ॥ ५ ॥

तिमेष्यति तदादेहकेचित्तदेहके आतिवाहिकोभावःसूक्ष्मभावइत्यर्थः । पुनरेष्यत्यायास्यति ॥ ३ ॥ उक्तंविशदयति ॥ शुद्धेति ॥ शुद्धस त्त्वानुपतितंरजस्तमोभ्यामनभिभूतंसत्वगुणानुगतम् । अयमर्थः । स्वप्नदशायामिवजागरेऽपिशरीरादिप्रपंचरूपेणवर्तमानंचित्तंज्ञानाभ्या साद्वासनातानवेसति शरीरादिरूपतांविहाय प्रतिभासमात्रात्मकस्वीयसूक्ष्मरूपतामेति । अतएवजीवन्मुक्तिदशायांप्रातिभासिकंजगदि त्याचचक्षिरे ॥ ४ ॥ यतोवासनातानवेसतिचेतसःपीनत्वंविलीयते तस्मात्तत्सिद्ध्येज्ञानाभ्यासलक्षणोयत्नआस्थेयइत्याह ॥ वासनेति ॥ वासनातानवेप्रभूतेसति नकेवलंचेतसःपीनत्वंविलीयते किंत्वनुभवपर्यंतज्ञानोदयाद्बंधोऽपिलीयतइत्याह ॥ तस्मिन्निति ॥ ५ ॥

एवंज्ञानपरिपूर्त्युपायमभिधाय तत्परिपूर्तेः प्राक्पूर्वसर्गदर्शनाय यत्कर्तव्यंतत्स्मारयति ॥ यावदिति ॥ ननुबोधोयावन्नपूरितस्तावत्स्थूल देहमिहसंस्थाप्य प्रपंचान्तरमवेक्ष्यतामितिवदंत्यापूरितेबोधे देहस्थापनंविनैवप्रपंचांतरदर्शनमभ्यनुज्ञातमितिप्रतीयते तन्नोपपद्यते पूर्णबोधादाकाशगमनादेरनुदयेन तेनैवशरीरेणसर्गांतरदर्शनासंभवात्पूर्णज्ञानायाअपिचूडालाया आकाशगमनादिसिद्ध्यर्थंप्रयत्नांतरास्थानदर्शनान्नैषदोषः । ज्ञानमार्गेलीलायाआदरातिशयोत्पादनायतथाभिधानात् ॥ ६ ॥ तथाभ्यासंविनाबालेनाकारोब्रह्मतांगत इत्यादिनोक्तस्यबोधपूरकज्ञानाभ्यासस्यस्वरूपंतत्प्रकारंतत्परिपाकहेतुंतत्परिपाकफलंच क्रमेणपृच्छति ॥ अत्रेति॥ अत्रबोधपूरणेयोऽभ्यासउपकुरु

यावन्नपूरितस्त्वेषशीतलोबोधचंद्रमाः ॥ तावद्देहमवस्थाप्यसर्गांतरमवेक्ष्यताम् ॥ ६ ॥ लीलोवाच ॥ अत्रोपकुरुतेब्रूहिकोभ्यासःकीदृशोऽथवा ॥ सकथंपोषमायातिपुष्टेतस्मिंश्चकिंभवेत् ॥ ७ ॥देव्युवाच ॥ तच्चिंतनंतत्कथनमन्योन्यंतत्प्रबोधनम् ॥ एतदेकपरत्वंचतदभ्यासंविदुर्बुधाः ॥ ८ ॥ उदितौदार्यसौंदर्यवैराग्यरसगर्भिणी ॥ आनंदस्यंदिनीयेषांमतिस्तेऽभ्यासिनःपरे ॥९॥ अत्यंताभावसंपत्तौज्ञातुर्ज्ञेयस्यवस्तुनः ॥ युक्त्याशास्त्रैर्यतंतेयेतेब्रह्माभ्यासिनःस्थिराः ॥ २१० ॥

ते सकइतियोजना ॥ ७ ॥ तत्राभ्यासस्वरूपमाह ॥ तच्चिंतनमिति ॥ तस्यब्रह्मणोगुरुतःश्रुतस्यचिंतनं युक्तितःपर्यालोचनं तस्यान्यस्मैशिष्यायगुणसंपन्नायकथनंतत्कथनम् ॥ ८ ॥ एतदेकपरत्वमितिनिदिध्यासनमुक्तं कीदृशोऽभ्यासइतिप्रश्नस्योत्तरमभिप्रेत्याह ॥ उदितेति ॥ उदितमौदार्येणमहत्त्वेनसौंदर्यंयस्यांसाउदितौदार्यसौंदर्या वैराग्यरसोवैराग्यसारोगर्भेऽन्तर्यस्याःसातथोक्ता उदितौदार्यसौंदर्याचासौवैराग्यरसगर्भिणीचेतितथा । आनंदस्यंदिनीआनंदवर्षिणी । परेमरमात्मनि ॥९॥ मंदमध्यमाधिकारिणोर्ज्ञानाभ्यासंक्रमेणश्लोकद्वयेनाह ॥ अत्यंतेत्यादिना ॥ अथवाकीदृशइतिप्रश्नस्योत्तरमभिप्रेत्यैतदपिश्लोकद्वयमाह ॥ अत्यंतेति ॥ ज्ञेयस्यवस्तुनोदृश्यपदार्थस्य ॥ २१० ॥

इदंजगदहंचदृश्यंसर्गादौसृष्ट्यादौ वस्तुतोत्पन्नमेवातस्तद्दृश्यंसदानास्तीत्यभ्यासं परेपरमात्मनिविषये बोधाभ्यासंविदुः उदितौदार्यसौंदर्ये त्यनेनोक्तादृढविदितप्रपंचमिथ्यात्वान्निःप्रपंचब्रह्मानंदेनिमग्नचित्ताउत्तमाः । दृश्यमिथ्यात्वंपरिज्ञायतद्दार्ढ्यायप्रयतमानामध्यमाः । जगन्मिथ्यात्वंपरिज्ञातुंशास्त्रयुक्तिभ्यांप्रयतमानाअधमाइतिविवेकः ॥ ११ ॥ सकथंपोषमायातीत्यस्योत्तरमाह ॥ दृश्येति ॥ दृश्यंद्रष्टरिकालत्रयेऽपिनसंभवतीतिबोधेनरागद्वेषलोभादीनांतानवेकृशत्वेसति बलोदिताभ्यासबलेनाभिव्यक्तायासौरतिर्ब्रह्मानंदलक्षणासब्रह्माभ्यासःपरिपक्वब्रह्मज्ञानाभ्यासउच्यतइतियावत् ॥ १२ ॥ दृश्यासंभवबोधस्यपरिपाकहेतुंस्तुवन् पुष्टेतस्मिंश्चकिंभवेदितिप्रश्नस्योत्तरमाह ॥ दृश्यासंभ

सर्गादावेवनोत्पन्नंदृश्यंनास्त्येवतत्सदा ॥ इदंजगदहंचेतिबोधाभ्यासंविदुःपरे ॥ ११ ॥ दृश्यासंभवबोधेनरागद्वेषादितानवे ॥ रतिर्बलोदितायासौब्रह्माभ्यासःसउच्यते ॥ १२ ॥ दृश्यासंभवबोधोहिज्ञानंज्ञेयंचकथ्यते ॥ तदभ्यासेननिर्वाणमित्यभ्यासोमहोदयः ॥ १३ ॥ वसिष्ठउवाच ॥ इतिसंकथनंकृत्वातस्यांनिशिवरांगने ॥ समाधिस्थानकंगत्वातस्थतुर्निश्चलांगके ॥ १४ ॥ निर्विकल्पसमाधानाज्जहतुःपूर्वसंविदम् ॥ तेनैवज्ञानदेहेनचचारज्ञप्तिदेवता ॥ १५ ॥ मानुषीमानुषंदेहंत्यक्त्वाबभ्रामसातदा ॥ देहांतरंचप्रादेशमात्रमारुह्यसंविदा ॥ १६ ॥

वबोधोहीति ॥ तदभ्यासेनतस्यदृश्यासंभवबोधस्याभ्यासस्तेन तत्पूर्वकब्रह्मज्ञानाभ्यासपरिपाकेनेतियावत् । अपरोक्षज्ञानप्राप्त्यानिर्वाणंकैवल्यंभवति । महानुदयऐश्वर्यंब्रह्मानंदप्राप्तिलक्षणंयस्मादभ्यासात्समहोदयः ॥ १३ ॥ इतिसंकथनमित्यादयःएकार्णवमिवोच्छूनमित्यतःप्राक्तनाःश्लोकाःस्पष्टार्थाः । क्वचित्किंचिद्विविच्यते ॥ १४ ॥ जहतुःविससर्जतुः । पूर्वसंविदंसमाधेःपूर्वकालंज्ञानमहमित्येवमाकारं ज्ञानदेहेनज्ञानप्रधानदेहेन ॥ १५ ॥ संविदासंकल्पेन चिदाकाशरूपिण्यौब्रह्माकाशरूपिण्यौ व्योमगेआकाशगेआकृतीययोस्तेव्योमगाकृ

ती। चिदाकाशरूपिण्यौते संविदाव्योमगाकृतीबभूवतुरित्यन्वयः ॥ १६ ॥ १७ ॥ चेत्यसंवित्तेर्दृश्यज्ञानस्य । चेत्यसंवित्तेःस्वभावादेव गतेनचिद्दृष्टस्वभावात् । तस्यसर्वव्यापारविमर्दकत्वात् ॥ १८ ॥ परिच्छिन्नेब्राह्मणदत्तमंडपाकाशेमहान्प्रपंचोवर्ततइतितन्मिथ्यात्वनि श्चयायदर्शयितुमावर्णयति एकार्णवमित्यादिना ॥ १९ ॥ कोमलमकर्कशं कोमलमरुतोमंदवायोरासमंतात्संगेनासंगेन सुखभोगदंसुखा नुभवदं कोमलमरुदासंगसुखभोगदम् । मनोवेगैर्महासिद्धैर्जितौवातगमागमौ वायुगमनागमनेयस्मिंस्तत्तथा वातगमागमजयेमनोवेग

बभूवतुश्चिदाकाशरूपिण्यौव्योमगाकृती ॥१७॥ अथतेललनेलीलालोलेललितलोचने॥ स्वभा वाच्चेत्यसंवित्तेर्नभोदूरमितोगते ॥ १८ ॥ दूराद्दूरमभिप्लुत्यययांत्यौददृशतुर्नभः ॥ एकार्णवमि वोच्छूनंगंभीरंनिर्मलांतरम् ॥ १९ ॥ कोमलंकोमलमरुदासंगसुखभोगदम् ॥ मनोवेगमहासि द्धजितवातगमागमम् ॥ २० ॥ पर्यंतस्थितकूष्मांडरक्षःपैशाचमंडलम् ॥ नृत्यद्भिर्डाकि नीसंघैस्तरंगितमिवक्वचित् ॥२१॥ प्रवृत्तैर्योगिनीसंघैःश्वकाकोष्ट्रखराननैः ॥ निरर्थयोजनशतं गत्वागच्छद्भिरावृतम् ॥२२॥ वातस्कंधनिखातांतर्बहिस्त्रिपथगाजलम् ॥ क्वचिन्निर्भित्तिसदनं गायन्नारदतुंबुरु ॥ २३ ॥

त्वंहेतुः । नभसिहिवातेनसहगंतुमागंतुंचप्रवृत्ताःसिद्धा मनोवेगत्वात्पूर्वमेवगच्छंत्यागच्छंतिचेत्यर्थः ॥२२०॥ पिशाचानामिदंपैशाचंचकू ष्मांडमंडलंच । कूष्मांडाभूतविशेषाः । कूष्मांडाश्चरक्षांसिचपैशाचमंडलंचेतितथा। पर्यंतेस्थितानिकूष्मांडरक्षःपैशाचमंडलानियस्मिंस्तत्तथा डाकिन्योग्रहविशेषाः । तरंगितंसंजाततरंगंप्रकृष्टंवृत्तंयेषुयोगिनीसंघेषुतेप्रवृत्तास्तैः ॥ २१ ॥ निरर्थंनिष्प्रयोजनंआगच्छद्भिरितिशे षः ॥ २२ ॥ वातस्कंधेति॥ मेघमार्गसौरमार्गयोर्मध्येवातमार्गंगच्छति तत्रस्थितायेवातास्तेषांस्कंधाअंसास्तदूर्ध्वभागाः ।अथवा वातस्कं

धावायुप्रभेदाः । यथोक्तंकल्पतरौ । स्कंधाःप्रभेदाइति । अथवा वातस्कंधावातसमूहाः । तथाचक्षीरस्वामिनआहुः । स्कंधःस्कंधेऽपिवेतसे । न्याकुर्वाणाःसमुदये यथासप्तवातस्कंधाः । अपिशब्दात्सैन्यवाटोयथा । स्कंधव्यापारः । वृक्षजपायामंसेराज्ञिसमूहेबोधेचेति । तेशुनिखातानिगर्तास्तेषांअंतर्बहिःत्रिपथगाजलानि । अधोमुखतयाप्रवहत्सुरनदीजलानियस्मिंस्तत्तथोक्तम् ॥ २३ ॥ चित्रन्यस्तसमाकारा चित्रार्पिततुल्याकारा मूकानिःशब्दाश्च कल्पांतवारिदाःप्रलयमेघायस्मिंस्तत्तथा । मातरोब्राह्म्यादयः निरन्तरेणोन्मत्तमातृमंडलमालितं निरंतरेणनिबिडेनोन्मत्तमातृणां मंडलेनमालितंसंजातमालम् । मालाकारमातृमंडलयुक्तमित्यर्थः ॥ २४ ॥ क्वचिद्योजनलक्षाणिदुःप्रापानिभूता

चित्रन्यस्तसमाकारमूककल्पांतवारिदम् ॥ क्वचिन्निरंतरोन्मत्तमातृमंडलमालितम् ॥ २४ ॥ अपियोजनलक्षाणिक्वचिद्दुःप्रापभूतकम् ॥ अविनाशितमःपुंजैर्दृषद्गर्भोपमंक्वचित् ॥ अविनाशिबृहत्तेजःक्वचिदर्कानलोपमम् ॥ २५ ॥ उदुंबरोदरमशकक्रमभ्रमज्जगत्त्रयांतरगतभूतसंचयम् ॥ विलंघ्यतद्वरललनेखमुच्चकैर्महीतलंपुनरपिगंतुमुद्यते ॥ २६ ॥ वसिष्ठउवाच ॥ इतितेवरवर्णिन्यौ ततोब्रह्मांडमंडलात् ॥ निर्गत्यान्यदनुप्राप्तेयत्रतद्ब्राह्मणास्पदम् ॥ २७ ॥ ततोददृशतुःसर्गेतत्रतेसिद्धयोषितौ ॥ अदृश्येएवलोकस्यमंडलंब्राह्मणास्पदम् ॥ २८ ॥

निष्प्राणिनोयस्मिंस्तत्तथा । क्वचित्सर्वतःप्राणिरहितानेकलक्षयोजनकमित्यर्थः । कालाध्वनोरत्यंतसंयोगइतिसूत्राद्योजनलक्षाणीतिद्वितीया । दृषद्गर्भस्यपाषाणाभ्यंतरस्योपमायस्मिंस्तद्दृषद्गर्भोपमं अविनाशिबृहन्महत्तेजोयस्मिंस्तत्तथा अतएवार्कानलोपमम् ॥ २५ ॥ उदुंबरफलोदरस्थामशकाउदुंबरोदरमशकास्तत्क्रमेणतन्न्यायेनभ्रमज्जगत्त्रयांतर्गतभूतानांसंचयःसमूहोयस्मिंश्चतत्तथा । विलंघ्येत्याद्याअहोनुपरमेत्यंताः प्राक्तनाःश्लोकाःस्पष्टार्थाः । क्वचित्किंचिद्विविच्यते ॥ २६ ॥ वरवर्णिन्यौउत्तमस्त्रियौ ॥ २७ ॥ २८ ॥

चिंतयाविधुराइष्टार्थवर्जितादास्योयस्मिन्मंडपेसचिन्ताविधुरदासीकस्तम् । बाष्पेणाश्रुणाक्लिन्नान्यार्द्राणिअंगनानांमुखानियस्मिंस्तत्तथो
क्तम् । विध्वस्तंविहतंपूर्वसंस्थानंपूर्वविन्यासोयस्मिंस्तत्तथोक्तम् । विद्युदशनिः ॥ ३० ॥ सालीलादेववत्सत्यसंकल्पासत्यकामाचसंपन्नेत्य

चिंताविधुरदासीकंबाष्पक्लिन्नांगनामुखम् ॥ विध्वस्तपूर्वसंस्थानंविद्युद्दग्धमिवद्रुमम् ॥ ३० ॥
अथसानिर्मलज्ञानचिराभ्यासेनसुंदरी ॥ संपन्नासत्यसंकल्पासत्यकामाचदेववत् ॥ ३१ ॥
चिंतयामासमामेतेदेवींचेमांस्वबांधवाः ॥ पश्यंतुतावत्सामान्यललनारूपधारिणीम् ॥ ३२ ॥
ततोगृहजनस्तत्रसंददर्शांगनाद्वयम् ॥ लक्ष्मीगौर्योर्युगमिवसमुद्भासितमंदिरम् ॥ ३३ ॥
नमोऽस्तुवनदेवीभ्यामित्युक्त्वाकुसुमांजलिम् ॥ तत्याजज्येष्ठशर्माथसार्धंगृहजनेनसः ॥३४॥
देव्यौचजगतांश्रेष्ठाविहब्राह्मणदंपती ॥ सर्वातिथीकुलकरौस्तंभभूतौद्विजस्थितेः ॥ ३५ ॥
तावेतौगृहमुत्सृज्यसपुत्रपशुबांधवम् ॥ स्वर्गंगतौनःपितरौतेनशून्यंजगत्त्रयम् ॥ ३६ ॥ तद्देव्यौ
क्रियतांतावदस्माकंशोकनाशनम् ॥ महतांदर्शनंनामनकदाचननिष्फलम् ॥३७॥ इत्युक्तवंतं
सापुत्रंमूर्ध्निपस्पर्शपाणिना ॥ तस्याःस्पर्शेनतेनासौदुःखदौर्भाग्यसंकटम् ॥ ३८ ॥ जहौप्रावृ
ड्घनासंगाद्ग्रीष्मतापमिवाचलः ॥ अथान्योऽपिजनस्तत्रजहौशोकंसुदुष्करम् ॥ ३९ ॥

न्वयः ॥३१॥३२॥३३॥३४॥ सर्वोजनोऽतिथिर्ययोस्तौसर्वातिथी । कुलकरौकुलवर्धकौ द्विजस्थितेर्द्विजमर्यादायाः । यद्वा द्विजस्थितेर्द्विजा
वस्थानस्यस्तंभभूतावाधारभूतौ ॥३५॥३६॥ नामशब्दःप्रसिद्धौ ॥३७॥ तेनकारणेन दुःखमेवदौर्भाग्यसंकटंदुर्भगत्वसंबाधस्तम् ॥३८॥३९॥

॥ ४० ॥ दृष्टांतसंविदः प्रपंचमिथ्यात्वेदृष्टांतस्मृतयोदृष्टालब्धाइत्यर्थः । ब्रह्मसत्ताब्रह्मरूपभूतासत्ताईदृशीसत्यजगद्रूपानिष्प्रपंचावा ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥ लीलास्मीतिविनेति ॥ अभ्यासंज्ञानाभ्यासंविनातेतवलीलास्मीतिभावोभावनायदास्तंगतोनाभवत् । तदातेसत्यसंकल्पत्वंनाभूदितिसंबंधः ॥ ४४ ॥ अद्वैतेब्रह्मणिचित्तवृत्तिनिरोधात्मकयोगप्रतिबंधभूतद्वैतनिश्चयस्यप्रविलयादद्यसत्यसंकल्पासंपन्नासि ॥४५॥

तस्मिन्गिरितटेग्रामेतास्मिन्मंडपकोटरे ॥ अंतर्धिमापतुर्दृष्ट्वाततस्तेसिद्धयोषितौ ॥ ४० ॥ देव्युवाच ॥ ज्ञेयंज्ञातमशेषेणदृष्टाद्दृष्टांतसंविदः ॥ ईदृशीयंब्रह्मसत्ताकिमन्यद्वदपृच्छसि ॥४१॥ लीलोवाच ॥ मृतस्यभर्तुर्जीवोऽसौयत्रराज्यंकरोतिमे ॥ तत्राहंकिंनतैर्दृष्टादृष्टास्मीहसुतेनकिम् ॥४२॥ देव्युवाच ॥ अभ्यासेनविनावत्सेतदातेद्वैतनिश्चयः ॥ नूनमस्तंगतोनाभून्निःशेषंवरवर्णिनि ॥ ४३ ॥ लीलास्मीतिविनाभ्यासंतवनास्तंगतोऽभवत ॥ यद्वाभावस्तदासत्यसंकल्पत्वमभून्नते ॥४४॥ अद्यासिसत्यसंकल्पासंपन्नातेनमांसुतः ॥ संपश्यत्वित्यभिमतंफलितंतवसुंदरि ॥४५॥ इदानींतस्यभर्तुस्त्वंसमीपंयदिगच्छसि ॥ तत्तेनव्यवहारस्तेपूर्ववत्संप्रवर्तते ॥४६॥ लीलोवाच ॥ अहोहंतजगन्मातर्मयास्मृतामिहाधुना ॥ ममेदंराजसंजन्मनतमोनचसात्विकम् ॥ ४७ ॥



॥ ४६ ॥ सरस्वतीप्रसादसमासादितास्पर्शयोगलब्धलौकिकप्रभावालीलानुस्मृतपूर्वजन्मावलिरुत्पन्नपरमनिर्वेदासंसारस्यात्मनाझटितिहेयत्वज्ञापनायपूर्वजन्मानिवर्णयति ॥ अहोइत्यादिना ॥ हंतेतिखेदे इदंवर्तमानंजन्मराजसंरजोगुणनिर्वृत्तम् ॥ ४७ ॥

ब्रह्मणः कमलासनादेतत्कल्पादाववतीर्णाया: ॥ ४८ ॥ मनुष्यलोकापेक्षयालोकांतरंविद्याधरस्थानंतदेवाब्जंकमलंतस्मिन्भ्रमरीलोकांतराब्ज भ्रमरी विद्याधरलोकवासिनीत्यर्थः ॥ ४९ ॥ ५० ॥ करंजोनक्तमालाख्योवृक्षः । चिरबिल्वोनक्तमालःकरजश्चकरंजक इत्यमरः ॥ ५१ ॥ विहंग्यापक्षिण्यासत्यामयावैरिविन्यस्तवागुरालुब्धकविन्यस्तजाला । वागुरामृगबंधनीत्युक्तोऽर्थोऽत्रासंभवान्नगृह्यते । विपिनावनौ अरण्यभूमौ

ब्रह्मणस्त्ववतीर्णायाअष्टौजन्मशतानिमे ॥ नानायोनीन्यतीतानिपश्यामीवाधुनापुनः ॥४८॥ संसारमंडलेदेविकस्मिंश्चिदभवंपुरा ॥ लोकान्तराब्जभ्रमरीविद्याधरवरांगना ॥ ४९ ॥ दुर्वासनाकलुषिताततोऽहंमानुषीस्थिता ॥ संसारमंडलेऽन्यस्मिन्पन्नगेश्वरकामिनी ॥ ५० ॥ करंजकुंजजंबीरकदंबवनवासिनी ॥ पत्रांबरवतीश्यामाशबर्यहमथाभवम् ॥ ५१ ॥ विहंग्यावैरिविन्यस्तवागुराविपिनावनौ ॥ क्लेशेनमहताछिन्नाअधमावासनाइव ॥ ५२ ॥ कर्णिकाक्रोडशय्यासुविश्रांतमलिनासह ॥ पद्मकुड्मलकोशेषुभुक्तकिंजल्कयारहः ॥५३॥ ततोऽस्त्रीफलदातॄणांकर्मणांपरिपाकतः ॥ राजाहमभवंश्रीमान्सुराष्ट्रेषुसमाःशतम् ॥ ५४ ॥ शाद्वलीदलदोलायामांदोलनदरिद्रताम् ॥ मशकस्यमयासद्यःस्थितंमशकयासह ॥ ५५ ॥

॥ ५२ ॥ कर्णिकाकमलमध्यवर्तीबीजकोशः । कर्णिकानांक्रोडानिमध्यप्रदेशास्तान्येवशय्याःकर्णिकाक्रोडशय्यास्तासु कुड्मलोमुकुलः । भुक्तकिंजल्कयाभुक्तकेसरमालिन्यामयाविश्रांतम् ॥ ५३ ॥ अस्त्रीत्वंपुंस्त्वंतदेवफलंतद्दातॄणाम् । समाःसंवत्सरान् ॥ ५४ ॥ शाद्वलीशष्पवतीभूस्तथातृणदलदोलाशाद्वलीदलदोला तस्याआंदोलनेनचलनेनदरिद्रताआंदोलनदरिद्रतातां ॥ ५५ ॥

विमर्दोविहतिः। लहर्याऊर्म्या। अत्रविषयतृष्णासंसारसरितोलहरीविवक्षिता। दुर्वारोवातोयस्याःसादुर्वारवातासाचासौतरणीचनौस्तस्याः सरणंगमनं तत्क्रमेणतन्न्यायेन दीर्घसरितश्चंचलोर्म्यातिविषमसुह्यमानायाः प्रचंडवायुमध्यवर्तिनौकायागमनन्यायेन संसारदीर्घसरितो विषयतृष्णालक्षणयालहर्यायोनिष्वावर्ततुल्यासुभ्रांतमित्यर्थः॥५६॥ उत्पेततुर्ब्राह्मणमंडपादूर्ध्वंजग्मतुः। योगप्रयुक्तंचंक्रमणंतत्क्रमैः॥५७॥ आप्यप्राप्यद्वितीयकंपद्मनृपसंबंधिनम् ॥ ५८ ॥ पुनरपिलीलासरस्वत्योःप्रपंचमिथ्यात्वनिश्चयदार्ढ्यापादकप्रवृत्तिप्राप्तिप्रतिपादनाद्यर्थस्त

योनिष्वनेकविधदुःखशतान्वितासुभ्रांतंमयाबहुविमर्दसमाकुलासु॥ संसारदीर्घसरितश्चलयालहर्यादुर्वारवाततरणीसरणक्रमेण॥ ५६॥ वसिष्ठउवाच॥ एवमाकथयंत्यौतेललनेललिताकृती ॥ उत्पेततुर्नभोदूरंयोगचंक्रमणक्रमैः ॥ ५७॥ विनिर्गत्यततःसर्गादाप्यसर्गंद्वितीयकम् ॥ अंतःपुरेददृशतुर्झटितीव विनिर्गते॥ ५८॥ स्थितंपुष्पभराकीर्णंमहाराजंमहाशवम्॥ ततःपुनर्विनिर्गत्ययोगस्थादिव्ययोगिनी ॥ ५९ ॥ विवेशभर्तृसंसारंलीलाज्ञप्तिसमन्विता ॥ एतस्मिन्नंतरेतस्मिन्मंडलेमंडितावनौ॥ ६० ॥ चक्रेवस्कंदनंकश्चित्सामंतोद्रिक्तभूमिपः॥ कस्मिंश्चिद्दिततारण्येद्वितीयाकाशभीषणे॥ ६१ ॥ सेनाद्वितयमक्षुब्धंसौम्याब्धिद्वितयोपमम् ॥ महारंभघनंमध्यस्थितराजद्वयान्वितम् ॥ ६२ ॥

तःपुनरित्यादिराख्यानसमाप्तिपर्यंतोग्रंथसंदर्भःप्रायेणस्पष्टार्थः। तत्रकानिचिद्विविच्यंते। विचित्रमहासंरंभोऽपिसंसारोमिथ्येतिदर्शयितुं पद्मनृपतिमंडपाकाशाभ्यंतर्गतसंसारांतरेवृत्तस्यसाटोपयुद्धस्यवर्णनीयत्वमितिज्ञेयम् ॥५९॥६०॥ अवस्कंदनमागमनंराष्ट्रशोषणंवा। सामन्तैरुद्रिक्तोऽभिवृद्धःसामंतोद्रिक्तःसचासौभूमिपश्चेतितथोक्तः॥ ६१॥ सौम्यंसुंदरंमहारंभेणमहायुद्धारंभेणहेतुनाघनंनिबिडंमहारंभघनम्॥ ६२॥

युद्धार्थंसज्जंसन्नद्धंयुद्धसज्जम् । इद्धंदीप्तम् ॥६३॥ रंहसावेगेनकिरन्विक्षिपन् अनलविद्युतःअनलाएववायुवसंघट्टजाविद्युदाकारत्वात्द्विद्युतःताः किरन् ॥६४॥ पतद्भिःसमदमातंगैःकंपितायामुर्व्यांचलंतिजलानियस्मिन्संपातेसतथा । यंत्रप्रेरितपाषाणैश्चक्राणामोघैश्चदूरंविद्रुताःखेचरा देवादयोयस्मिन्सतथा ॥६५॥ दूरोड्डीनानिदूरोद्गतानि कचंतिविकसंतिचयानिखड्गखंडानितैस्तारकितंसंजाततारकमंबरमाकाशं यस्मिन्स तथा । वज्रमुष्टिभिरिति । वज्रसममुष्टिभिर्येविनिष्पेषाःसंपेषणानितैःपिष्टाश्चूर्णिताःसद्भटकंकटाःसाधुभटकवचायस्मिन्सतथा । उरच्छदःकंक

युद्धसज्जंसमुन्नद्धमिद्धमग्निमिवाद्भुतम् ॥ लीलाचञ्चत्प्रिदेवीचसंददर्शनभःस्थिता ॥ ६३ ॥ अथ प्रवृत्तःप्रसभंप्रलयार्णवरंहसा ॥ सेनयोःशस्त्रसंपातःकिरन्ननलविद्युतः ॥६४॥ पतत्समदमातंग कंपितोर्वीचलज्जलः ॥ यंत्रपाषाणचक्रौघदूरविद्रुतखेचरः ॥ ६५ ॥ दूरोड्डीनकचत्खड्गखंडतार कितांबरः ॥ वज्रमुष्टिविनिष्पेषपिष्टसद्भटकंकटः ॥ ६६ ॥ नाराचवर्षवरवारिदवीरपूरमत्ता भ्रसंभ्रमविनृत्तकबंधबर्हो ॥ कल्पांतकालइववेगविवर्तमानमातंगशैलवलितोरणसंभ्रमोऽभूत् ॥ ६७ ॥ एवमत्याकुलेयुद्धेसास्फोटभटसंकटे ॥ अष्टभागदशाशेषप्रतापमधुराकृतिः ॥ शस्त्र घातहतोवीरइवार्कस्तनुतांययौ ॥ ६८ ॥

टकोऽजगरःकवचोऽस्त्रियामित्यमरः ॥६६॥ नाराचानांसर्वलोहमयबाणानांवर्षाण्येववरवारीणितानिददतीतिनाराचवर्षवरवारिदानि वीरपू रावीरसमूहाःतएवमत्ताभ्राणि नाराचवर्षवरवारिदानिचतानिवीरपूरमत्ताभ्राणिचतेषांसंभ्रमाद्विनृत्ताःप्रनर्तनाःकबंधबर्हिणःकबंधमयूराय स्मिन्रणसंभ्रमेसतथा । अथवामत्ताभ्रेभ्योनिमित्तेभ्यःसंभ्रमेणविनृत्ताःकबंधबर्हिणोयस्मिन्सतथा । कबंधोमूर्धरहितःक्रियायुक्तोदेहः । कबं धोऽस्त्रीक्रियायुक्तमपमूर्धकलेवरमित्यमरः । वेगेनविवर्तमानाःभ्रमंतोयेमातंगाःशैलाःपर्वतास्तैःवलितःसंबद्धः ॥६७॥ त्रिंशद्भागस्यदिनस्याष्टौ

भागायस्यासाष्टभागा अष्टभागादशाशेषोयस्य रवेः सोष्टभागदशाशेषः सचासौप्रकृष्टतापेनमधुराकृतिश्चेतितथोक्तः । यद्वा अष्टभागादशावि शरणावस्थासाशेषोयस्यसोष्टभागदशाशेषः सचासौप्रतापश्चतेनमधुरादर्शनीयाऽऽकृतिराकारोयस्यसतथोक्तः । वीरपक्षेतुदूरादेवशत्रुभयजन कःप्रभावःप्रतापः । अष्टौभागायस्यसोष्टभागःदशामरणदशाशेषोयस्यसदशाशेषः अष्टभागश्चासौदशाशेषश्चेत्यष्टभागदशाशेषः सचासौप्रता पमधुराकृतिश्चेतितथोक्तः । अथवा अष्टौभागायस्यांदशायांसाशेषोयस्यवीरस्येतिविग्रहः । यद्वा अष्टभागादशाविशरणावस्थासाशेषोय

अथसेनादिनाथाभ्यांविचार्यसहमंत्रिभिः ॥ दूताःपरस्परंदत्तायुद्धंसंहियतामिति ॥ ६९ ॥ ततोदुंदुभयः शेमुःप्रतिध्वनितदिङ्मुखाः ॥ विनिर्गंतुंप्रववृतेरणारण्याद्बलद्वयम् ॥ ७० ॥ अथवीरइवारक्तःकाले नास्तमितोरविः ॥ ततोध्वांतौघनासीरेनिशीथेसमुपस्थिते ॥ ७१ ॥ लीलापतिरुदारात्माकिंचि त्खिन्नमनाइव ॥ प्रातःकार्यंविचार्याशुमंत्रिभिर्मंत्रकोविदैः ॥ ७२ ॥ निद्रांमुहूर्तमारेभेगृहेशशिकरा मले ॥ ततस्तेदिव्ययोगिन्यौराज्ञोविविशतुर्गृहम् ॥ ७३ ॥ कोमलामलसौगंध्यमृदुमंदारमारुतम् ॥ तत्प्रभावेणनिद्राणंनृपतेरंतरांगनम् ॥ ७४ ॥ तयोर्देहप्रभापूरैःशशिनिष्पंदशीतलैः ॥ आह्लादितो ऽसौबुबुधेराजोक्षितइवामृतैः ॥ ७५ ॥

स्यप्रतापस्यतेनमधुरादर्शनीयाऽऽकृतिर्यस्यसतथोक्तः ॥ ६८ ॥ ६९ ॥ शेमुःशांताः । शमुउपशमनइतिधातोर्लिङ्बहुवचनम् ॥७०॥ वीरोऽपि रुधिरोक्षितत्वादारक्तोभवति । ध्वांतौघोऽधकारसमूहएवनासीरंसेनाग्रंयस्यनिशीथराजस्यसतथोक्तः ॥७१॥ तस्मिन्नुदारात्माउत्तमचित्तः ॥७२॥ ७३ ॥ कोमलेति ॥ मृदुःकोमलोमंदोऽमलसौगंध्योनिर्मलसौरभश्चमृदुश्चमंदारपुष्पाणांमारुतोयस्मिन्गृहेतत्तथेतिविग्रहः ॥ ७४ ॥ निष्पंदोऽत्रकिरणः । आह्लादितःसुखितः ॥ ७५ ॥

॥ ७६ ॥ पुष्पाणांहारोयस्यसपुष्पहारः । पुष्पाधारइतिक्वचित् । तत्रमालाकारइत्यर्थः । उत्फुल्लंविकाशितम् ॥ ७७ ॥ विवसनेविवस्त्रेदे शेवस्त्रास्तरणरहितदेशइत्यर्थः ॥ जनदौस्थित्येति ॥ जनानांदौस्थित्यंजनादिदोषदुष्टचित्तत्वंतेनाग्निनादाहइवदोषःतच्छामकशशिप्रभे॥७८॥

आसनद्वयविश्रांतंसददर्शांगनाद्वयम् ॥ सभूपालोऽथसंचिंत्यसुविस्मितमनाःक्षणात् ॥ ७६ ॥ उत्तस्थौ शयनाच्छेषादिवचक्रगदाधरः ॥ पुष्पहारइवोत्फुल्लंजग्राहकुसुमांजलिम् ॥ ७७ ॥ भूमौविवसनेशुद्धे बद्धपद्मासनोनृपः ॥ जयतांजनदौस्थित्यदाहदोषशशिप्रभे ॥ ७८ ॥ देव्यौबाह्यांतरतमोविद्रावणरविप्र भे ॥ तयोरुक्त्वेतितत्याजपादयोःकुसुमांजलिम् ॥७९॥ लीलायैभूपजन्माथवक्तुंमंत्रिणमीश्वरी ॥ बो धयामासपार्श्वस्थंसंकल्पेनसरस्वती ॥ १८० ॥ योगिन्यौसतुतेदृष्ट्वाप्रणम्यकुसुमांजलिम् ॥ तयोःपादेषु संत्यज्यविवेशपुरतोनतः ॥ ८१ ॥ उवाचदेवीहेराजन्कथंकस्यसुतःकदा ॥ इहजातइतिश्रुत्वासमंत्री वाक्यमब्रवीत् ॥ ८२ ॥ देव्यौयुष्मत्प्रसादोऽयंभवत्योरपियत्पुरः ॥ वक्तुंशक्नोमितदिदंश्रूयतांजन्मम त्प्रभोः ॥ ८३ ॥ आसीदिक्ष्वाकुवंशस्थोराजाराजीवलोचनः ॥ श्रीमान्कुंदरथोनामदोश्छायाच्छादिता वनिः ॥ ८४ ॥ तस्याभूदिंदुबिंबाभःपुत्रोभद्ररथाभिधः ॥ तस्यविश्वरथःपुत्रस्तस्यपुत्रोमनोरथः ॥ ८५ ॥

बाह्यांतरेति ॥ बाह्यांतरपदार्थविषयाज्ञानांधकारविद्रावकादित्यप्रभे । तयोः पादयोरितिसंबंधःप्रत्येकाभिप्रायेण ॥ ७९ ॥ ८० ॥ ८१ ॥ ॥ ८२ ॥ वक्तुंशक्नोमीतियत्अयंयुष्मत्प्रसादइतिसंबंधः ॥ ८३ ॥ दोश्छायाच्छादितावनिर्भुजच्छायासंछादितभूमिः सम्यग्रक्षितभूमिरि त्यर्थः ॥ ८४ ॥ ८५ ॥

तस्यविष्णुरथःपुत्रस्तस्यपुत्रोबृहद्रथः ॥ तस्यासिंधुरथःपुत्रस्तस्यशैलरथःसुतः ॥ ८६ ॥ तस्य कामरथःपुत्रस्तस्यपुत्रोमहारथः ॥ अयमस्मत्प्रभुस्तस्यपुत्रःपूर्णामलाकृतिः ॥ ८७ ॥ महद्भिः पुण्यसंभारैर्विदूरथइतिश्रुतः ॥ जातोमातुःसुमित्रायागौर्याइवगुहोऽपरः ॥ ८८ ॥ पितास्यदश वर्षस्यदत्वाराज्यंवनंययौ ॥ पालयामासभूपीठंततःप्रभृतिधर्मतः ॥८९॥ इत्युक्त्वासंस्थितेतू ष्णींमंत्रिण्यथनृपेतथा ॥ कृतांजलौनतमुखेबद्धपद्मासनेस्थिते ॥ १९० ॥ राजन्स्मरविवेकेन पूर्वजातिमितिस्वयम् ॥ वदंतीमूर्ध्निपस्पर्शतंकरेणसरस्वती ॥ ९१ ॥ अथहार्दतमोमायारा ज्ञोऽस्यक्षयमाययौ ॥ सस्मारपूर्ववृत्तांतमंतःस्फुरादिवस्थितम् ॥ ९२ ॥ अन्यदेहैकराजत्वंली लाविलसितान्वितम् ॥ उवाचात्मनिसंसारोबतमायेयमातता ॥९३॥ परिज्ञाताप्रसादेनदेव्यो रिहमयाधुना ॥ हेदेव्यौकिमिदंनामदिनमेकंमृतस्यमे ॥ ९४ ॥ गतमद्येहजातानिममवर्षाणि सप्ततिः ॥ स्मराम्यनेककर्माणिमित्रबंधुपरिच्छदान् ॥ ९५ ॥ ज्ञप्तिरुवाच ॥ राजन्मृतिमहामो हमूर्छायाःसमनंतरम् ॥ तस्मिँल्लोकेतवातीतेतास्मिन्नेवमुहूर्तके ॥ ९६ ॥



लासैरन्वितंलीलाविलसितान्वितम् । आसमंताच्चताव्याप्ताआतता ॥ ९३ ॥ ९४ ॥ ९५ ॥ लोक्यतइतिलोकोदेहः तस्मिन् ॥ ९६ ॥

स्फारोभूरिः । एवकारोक्तमर्थंविशदयति ॥ तदैवेति ॥ १७ ॥ व्यवहारभ्रमैराततंव्याप्तंव्यवहारभ्रमाततम् । प्रतिभानमेवलेशतोदर्शयति ॥ वयसइति ॥ शतायुर्वैपुरुषइत्युक्तायुषःसंबंधीनिसप्ततिर्वर्षाणिसमतीतानीतिप्रतिभानंजातमितिसंबंधः ॥ १८ ॥ १९ ॥ किंतर्हिवस्तुवृत्त मित्याकांक्षायांतदाह ॥ वस्तुतस्त्वित्यादिनाश्लोकद्वयेन ॥ २०० ॥ तत्त्वदृष्टिमवलंब्याह ॥ नचपश्यसीति ॥ प्रकचसिविस्फुरसि ॥ १ ॥

तस्मिन्नेवगृहेजातःसर्गःस्फारौघविभ्रमः ॥ तदैवचेतसितवनिर्मलाकाशनिर्मले ॥ १७ ॥ प्रति भानमिदंजातंव्यवहारभ्रमाततम् ॥ वयसःसमतीतानिममवर्षाणिसप्ततिः ॥ १८ ॥ यथास्व प्नमूहूर्तेतुसंवत्सरशतभ्रमः ॥ तवमायाविलासेनतथायंजाग्रतिभ्रमः ॥ १९ ॥ वस्तुतस्तुनजा तोऽसिनमृतोऽसिकदाचन ॥ शुद्धविज्ञानरूपस्त्वंशांतआत्मनितिष्ठसि ॥ २०० ॥ पश्यस्यथै तदखिलंनचपश्यासिकिंचन ॥ सर्वात्मकतयानित्यंप्रकचस्यात्मनात्मनि ॥ १ ॥ यस्त्वशुद्धम तिर्मूढोरूढोनविततेपदे ॥ वज्रसारमिदंतस्यजगदस्त्यसदेवसत् ॥ २ ॥ यथाबालस्यवेताली मृतिपर्यंतदुःखदः ॥ असदेवसदाकारंतथामूढमतेर्जगत् ॥ ३ ॥ तापएवयथावारिमृगाणां भ्रमतोभवेत् ॥ असत्यमेवसत्याभंतथामूढमतेर्जगत् ॥ ४ ॥

इदानीमुपन्यस्तविद्वद्दृष्टिस्तुत्यर्थंतद्विपरीतदृष्टिपरिहानार्थंचविद्वद्दृष्टिंवर्णयति ॥ यस्त्वशुद्धमतिरित्यादिनादीर्घस्वप्नमित्यतःप्राक्तनग्रंथसं दर्भेण । विततेसंव्याप्तेपदेवस्तुनिनरूढःप्रसिद्धः । वस्तुतोऽसदेवजगत्तस्यमूढस्यदृष्ट्यासत्परमार्थंसद्वज्रसारंचास्ति । वज्रस्यसारइवसारः स्थिरांशोयस्मिन्तत्तथा ॥ २ ॥ वेतालोऽत्रबालेनस्वच्छायायामारोपितोविवक्षितः । मृतिपर्यंतदुःखदोमरणपर्यवसायिदुःखंददन्यथा ससत्यइवाभाति तथामूढमतेर्जगत्सत्याभंभवति ॥ ३ ॥ तापोमरुभूमिगतः भ्रमतोभ्रमात् ॥ ४ ॥

कटककल्पनाया अधिष्ठानभूते कनके हेम्नि विषये अव्युत्पन्नस्यासंजातविज्ञानस्य कानके कनकविकृते कटके कटकज्ञप्तिः कटकोऽयमिति विपरी तज्ज्ञानमेवास्ति मनागपि ईषदपि हेमधीर्नास्ति नायं कटकः किंतु हेमैवेति प्रमितिर्नास्तीत्यर्थः ॥ ५ ॥ यथायं दृष्टांतस्तथाज्ञस्याधिष्ठानब्रह्मान भिज्ञस्येयं दृश्यदृक् दृश्यभ्रांतिरेवास्ति अन्या परमार्थदृङ् नास्ति नेदं दृश्यं किंतु ब्रह्मैवेति प्रमितिर्नास्तीत्यर्थः । नगः पर्वतो वृक्षो वा । नागो गजः काद्र वेयो वा ॥ ६ ॥ एवं हेयामज्ञदृष्टिं दर्शयित्वोपादेयां तज्ज्ञदृष्टिं प्रपंचयति ॥ दीर्घस्वप्नमित्यादिना ॥ अत्र जगति स्वप्नदृष्टुरन्ये स्वप्नदृष्टाः पुरुषा यथा

अव्युत्पन्नस्य कनके कानके कटके यथा ॥ कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥ ५ ॥ तथाज्ञ स्य पुरागारनगनागेंद्रभासुरा ॥ इयं दृश्यदृगेवास्ति न चान्या परमार्थदृक् ॥ ६ ॥ दीर्घस्वप्नमिदं विश्वं चित्ताहंतादिसंयुतम् ॥ अत्रान्ये स्वप्नपुरुषा यथामी जाग्रतः स्थिताः ॥ ७ ॥ अस्ति सर्वगतं शांतं परमार्थघनं शुचि ॥ अचेत्यचिन्मात्रवपुः परमाकाशमाततम् ॥ ८ ॥ तत्सर्वगं सर्वशक्तिस वैं सर्वात्मकं स्वयम् ॥ यत्र यत्र यथोदेति तथास्ते तत्र तत्र वै ॥ ९ ॥ तदेवमेष राजंस्त्वं लीलार्थमुप वर्णितः ॥ स्वस्ति तेऽस्तु गमिष्या वोदृष्टादृष्टांतसंविदः ॥ २१० ॥

मिथ्या तथा जाग्रतः पुंसोऽन्ये मी पुरुषा मिथ्यैव ॥ ७ ॥ परमार्थश्चतद्घनं निरंतरं चेति परमार्थघनम् । अचेत्यचिन्मात्रवपुरविषयचिन्मात्रस्वरू पं परमाकाशं परंब्रह्म सर्वगतम् । निरंकुशमिति वक्तुमाततमित्युक्तम् ॥ ८ ॥ सर्वं गच्छति जानातीति सर्वगं तत्सर्वमिति बाधायां सामानाधि करण्यम् । सर्वात्मकं सर्वेष्वात्मस्वरूपमनुस्यूततया यस्य तत्सर्वात्मकम् ॥ ९ ॥ हे राजन्नेष त्वं लीलार्थं लीलायाः प्रपंचमिथ्यात्वे दृष्टांतसिद्ध्यर्थं म् । अथवा लीलार्थं लीलाप्रीत्यर्थमेवमुपवर्णितः । दृष्टांतद्वयः प्रपंचमिथ्यात्वे दृष्टांतनिश्चयाद्दृष्टा लब्धा इत्यर्थः ॥ २१० ॥

॥११॥१२॥१३॥१४॥ पट्टिशउभयतोधारआयुधविशेषः। परिघोमूलेनिबद्धोलगुडः॥१५॥नगःपर्वतः॥१६॥ कल्पांबुदघटातुल्याःप्रलय मेघसमूहतुल्याः। प्रोड्डीयनंप्रकर्षेणोद्गमनमित्यर्थः॥१७॥ परुषःकर्कशः आसमंताद्रवःशब्दोयस्यसपरुषारवः उदभूदुद्भूतः। आशादिशः

विदूरथउवाच ॥ ममापिदर्शनंदेविमोघंभवतिनार्थिषु ॥ महाफलप्रदायास्तुकथंतवभविष्यति ॥ ११ ॥ अहंदेहमिमंत्यक्त्वातंदेहंपद्मनामकम् ॥ कदायास्यामिवरदेतन्मेकथयतत्त्वतः ॥१२॥ देव्युवाच ॥ अस्मिन्रणवरेराजन्मर्तव्यंभवताधुना ॥ प्राप्तव्यंप्राक्तनंराज्यमेतत्प्रत्यक्षमेवते ॥१३॥ वसिष्ठउवाच ॥ प्रस्तुतेतिकथायावन्मिथोमधुरभाषिणोः ॥ तावत्प्रविश्यसंभ्रांतमुवा चोर्ध्वस्थितोनरः ॥१४॥ देवपट्टिशचक्रासिगदापरिघवृष्टिमत् ॥ महत्त्वरिबलंप्राप्तमेकार्णवइ वोद्धतः ॥ १५ ॥ नगरेनगसंकाशेलग्नोऽग्निर्व्याप्तदिक्तटः ॥ दहंश्चटचटास्फोटैःपातयत्युत्तमा न्गृहान् ॥ १६ ॥ कल्पांबुदघटातुल्याव्योम्निधूममहाद्रयः ॥ बलात्प्रोड्डीयनंकर्तुंप्रवृत्तागरुडाइव ॥ १७ ॥ ससंभ्रमंवदत्येवंपुरुषेपरुषारवः ॥ उदभूत्पूरयन्नाशाबहिःकोलाहलोमहान् ॥ १८ ॥ बलादाकर्णकृष्टानांधनुषांशरवर्षिणाम् ॥ बृंहतामतिमत्तानांकुंजराणांतरस्विनाम् ॥ १९ ॥ पुरेचटचटास्फोटैर्ज्वलतांजातवेदसाम् ॥ पौराणांदग्धदाराणांमहाहलहलारवैः ॥ २० ॥

॥१८॥ बृंहतांगर्जतां तरस्विनांबलवताम्। द्रविणंतरःसहोबलवीर्याणिस्थामशुष्मंचेत्यमरः। यद्वा तरस्विनांजववताम्। रंहस्तरसीतुरयःस्य दइत्यमरः॥१९॥ चटचटाहलहलेतिशब्दानुकारौ। चटचटास्फोटैर्हलहलारवैश्चसहधनुषांकुंजराणांकोलाहलउदभूदितिपूर्वेणान्वयः॥२०॥

वातायनंगवाक्षम् । वातायनंगवाक्षोऽस्त्रीत्यमरः ॥ २१ ॥ एकश्चासावर्णवश्चैकार्णवः । सप्तचासावेकार्णवश्चसप्तैकार्णवस्तस्यरंहइववरंहोवेगोय स्यतत्तथा । उग्रायेकल्पमेघाःप्रलयमेघाःतद्वत्तरंगाःतत्तुल्याकारायस्मिन्परबलेतदुग्रकल्पमेघतरंगि तेन ॥ २२ ॥ कल्पांतवन्हिविगलन्मेरु मंदरभासुरं कल्पांतवह्निनादग्धत्वाद्विगलंतौविभ्रमंतौयौमेरुमंदरौतद्वद्भासुरंभासनशीलम् ॥ २३ ॥ मुष्टिग्राह्यायेमहामेघास्तेषांगर्जागर्जे नानितद्वद्यानिसंतर्जनानितैरूर्जितैरभिवृद्धैः । यद्वा मुष्टिग्राह्यामहामेघगर्जास्तद्वद्यानिसंतर्जनानितैरूर्जितैः । कलकलारावैःकोलाहलनिस्व



अथवातायनाद्देव्यौमंत्रीराजाविदूरथः ॥ ददृशुःप्रोल्लसन्नादंमहानिशिमहापुरम् ॥ २१ ॥ प्रल यानिलसंक्षुब्धसप्तैकार्णवरंहसा ॥ पूर्णपरबलेनोग्रकल्पमेघतरंगिणा ॥ २२ ॥ कल्पांतवह्निवि गलन्मेरुमंदरभासुरम् ॥ दह्यमानंमहाज्वलाजालैरंबरपूरकैः ॥ २३ ॥ मुष्टिग्राह्यमहामेघगर्जसं तर्जनोर्जितैः ॥ घोरंकलकलारावैर्मांसलैर्दस्युजल्पितैः ॥ २४ ॥ तरदुल्मुकखंडोग्रतारातरलि तांबरम् ॥ अंगारराशिनिपतन्नरनार्युग्ररोदनम् ॥ २५ ॥ एतस्मिन्नंतरेराजमहिषीमत्तयौव ना ॥ अनुयातावयस्याभिर्विवेशभयविह्वला ॥ २६ ॥

नैः । कोलाहलःकलकलइत्यमरः । कलकलेतिशब्दानुकारोवा । मांसलैःसांद्रैरित्यर्थः । कलकलारावैःदस्युजल्पितैश्चघोरमितिसंबंधः । अ थवादस्युजल्पितैर्हेतुभिर्मांसलैःकलकलारावैःघोरमित्यन्वयः ॥ २४ ॥ तरदुल्मुकेति ॥ तरंतिलंघयंतियान्युल्मुकखंडानितान्येवोग्रताराउग्र नक्षत्राणिताभिस्तरलितंलुलितंअंबरमाकाशंयस्मिन्पुरेतत्तथा । यथाहुःक्षीरस्वामिनः । प्रेंखोलितस्तरलितोललितोलोलितोऽपिचेति । अंगा रराशिषु निपतन्नरनारीणामुग्ररोदनंयस्मिंस्तत्तथा ॥ २५ ॥ वयस्याभिःसखीभिः ॥ २६ ॥

व्यजिज्ञपत् विज्ञापितवती । ज्ञा अवबोधन इति धातोर्लङ् ॥ २७ ॥ पिष्टाश्चूर्णिताः ॥ २८ ॥ नविद्यतेशंकायस्मिन्कर्मणितदशंकम् । आहतमपहृतम् । देव्याविति संबोधनम् ॥ २९ ॥ षट्पदीभ्रमरी ॥ २३० ॥ कंदराद्दर्याः ॥ ३१ ॥ ३२ ॥ इयमहंकस्मात्स्थिता इयंमत्समाकस्मात्स्थितेतियावत् । नन्वियंयोगप्रभावोत्पादिता मानुषशरीरस्यात्वयासमा नभवतीत्याशंक्याह ॥ यासेति ॥३३॥ आत्मांतरेत्वद्भावना

अथतस्यावयस्यैकाराजानंतंव्यजिज्ञपत् ॥ देवदेवीसमायातापलाय्यांतःपुरांतरात् ॥ २७ ॥
राजद्वाराहृतास्त्वेतेबलवद्भिरुदायुधैः ॥ अंतःपुराधिपाःसर्वेपिष्टाःशत्रुभिरुद्धतैः ॥ २८ ॥ दूरेणा
शंकमायातैःपरैर्नःपुरमाहृतम् ॥ इत्याकर्ण्यविलोक्यासौदेव्यौयुद्धाययास्यतः ॥ २९ ॥
रक्षतांममभार्येयंयुष्मत्पादाब्जषट्पदी ॥ इत्युक्त्वानिर्ययौराजाकोपाकुलितलोचनः ॥ २३० ॥
मत्तेभनिर्भिन्नवनकंदरादिवकेसरी ॥ लीलालीलांददर्शाथस्वाकारसदृशाकृतिम् ॥ ३१ ॥ प्रति
बिंबमिवायातामादर्शेचारुदर्शनाम् ॥ ३२ ॥ प्रबुद्धलीलेवाच ॥ किमिदंदेविमेब्रूहिकस्मादिय
महंस्थिता ॥ यासाहमभवंपूर्वंकथंसेयमहंस्थिता ॥ ३३ ॥ ज्ञप्तिरुवाच ॥ यादृग्भावोमृतोभर्ता
तवतस्मिंस्तदापुरे ॥ तादृग्भावस्तमेवार्थंतत्रैवायंहिदृष्टवान् ॥ ३४ ॥ अविसंवादिसर्वार्थरूपं
यत्तस्यबिंबितम् ॥ तदेवतादृशंचित्तदर्पणेप्रतिबिंबति ॥ ३५ ॥

भावितेनत्वद्भर्त्रात्वत्सदृशतयाकल्पितत्वाल्लीलात्वत्समास्थितेत्युत्तरमभिप्रेत्याह ॥ यादृगिति ॥ तमेवार्थंतत्सदृशमेवार्थमित्यर्थः ॥ ३४ ॥
नन्वियंलीलाकल्पिताचेत् शुक्तिरजतादाविवास्यांविसंवादःकथंनजायेतेत्याशंक्याह ॥ अविसंवादीति ॥ अविसंवादिसर्वार्थरूपंव्यवहा

रदशायांबाधापरपर्यायविसंवादरहितसर्वपदार्थस्वरूपंतस्यमनसिबिंबितं त्वद्भर्तुर्मनसिस्फुरितमभूत् । तदेवताद‍ृशंअविसंवादिसत् चित्तदर्पणे कालांतरेप्रतिबिंबति । अविसंवादितयायत्पूर्वमनुभूतंतत्संस्कारात्मनावर्तमानंकालांतरेचित्तदर्पणेतथैवस्फुरतीत्यर्थः ॥ ३५ ॥ ननुव्यवहारदशायांविसंवादाभावेकल्पितत्वमेवासिद्धमित्याशंक्य व्यभिचारित्वेनद‍ृश्यमात्रस्यमिथ्यात्वंसाधयति ॥ स्वप्नइत्यादिना ॥ ३६ ॥ जगद्भ्रांतीनांवैचित्र्यप्रदर्शनपूर्वकंअभिनवलीलायाःसद‍ृशभ्रांतिगृहीतत्वंपूर्वोक्तंचविशदयति ॥ अनुभूतयइत्यादिना ॥ काश्चिदनुभूतयोभ्रांतयः

स्वप्नोजाग्रत्यसद्रूपःस्वप्नेजाग्रदसद्वपुः ॥ मृतिर्जन्मन्यसद्रूपामृत्यांजन्माप्यसन्मयम् ॥ ३६ ॥ एवंनसन्नासदिदंभ्रांतिमात्रंविजृंभते ॥ अनुभूतयएतास्तुकाश्चित्पूर्वानुभूतितः ॥ ३७ ॥ अपूर्वानुभवाःकाश्चित्समाश्चैवासमास्तथा ॥ त्वच्छीलात्वत्समाचारात्वत्कुलात्वद्वपुःसती ॥३८॥ इतिलीलेयमाभातिप्रतिभाप्रतिबिंबजा ॥ विदूरथस्तुभर्तैषतनुंत्यक्त्वातवांगने ॥ ३९ ॥ तदेवांतःपुरंप्राप्यताद‍ृगात्माभविष्यति ॥ २४० ॥ वसिष्ठउवाच ॥ इत्याकर्ण्यवचोदेव्यालीलासातत्पुरास्पदा ॥ पुरःप्रह्वास्थितोवाचवचनंविहितांजलिः ॥ ४१ ॥ देवीभगवतीज्ञप्तिर्नित्यमेवार्चितामया ॥ सायाद‍ृश्येवदेवेशिताद‍ृश्येवत्वमंबिके ॥ ४२ ॥

पूर्वानुभूतितःसंस्कारद्वाराजायंते ॥ ३७ ॥ काश्चित्तुअपूर्वानुभवाभवंति । पूर्वानुभवाःकारणत्वेननविद्यंतेयासांताअपूर्वानुभवाः काश्चित्समाःसद‍ृशाः । त्वच्छीलात्वत्समानशीला त्वत्कुलात्वत्समानकुला त्वद्वपुस्त्वत्समानशरीरा ॥ ३८ ॥ प्रतिबिंबजाप्रतिबिंबत्वेनजातात्वद्भर्तुप्रतिभेयंलीलेत्याभातीतिसंबंधः ॥ ३९ ॥२४०॥ तत्पुरंविदूरथपुरंआस्पदंस्थानंयस्याःसातथोक्ता विहितांजलिःकृतांजलिः ॥ ४१ ॥ ४२ ॥

अत्यंतलोभार्थबहुवमानंसहतेयःसकृपणः कृपणेकारुण्यंकृपणकारुण्यंतस्मात् ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ कूटं गिरिशृंगं कूटवत्स्थितमागारंकूटागारं कूटागारेणसमआकारोयस्यसतथोक्तःतम् । यद्वा कूटागारमयोगृहं तत्समआकारोयस्यतत् ॥५०॥

तन्मेकृपणकारुण्याद्वरंदेहिवरानने ॥ रणेदेहंपरित्यज्ययत्रतिष्ठतिमेपतिः ॥ ४३ ॥ अनेनैवश रीरेणतत्रस्थामेतदंगना ॥ एतदस्त्वितिदेव्योक्तेपूर्वलीलाब्रवीदथ ॥ ४४ ॥ पूर्वेणैवशरीरेण किमर्थंनाहमीश्वरी ॥ लोकांतरमिदंनीतातांगिरिग्रामकंवद ॥ ४५॥ देव्युवाच ॥ नकिंचित्कस्य चिदहंकरोमिवरवर्णिनि ॥ सर्वंसंपादयत्याशुसंकल्पःप्राणिनांस्वतः ॥४६॥मांसमाराधयंत्यास्तु संकल्पोऽभूत्तवेदृशः ॥ मुक्तास्यामितितेनत्वंतैःप्रकारैःप्रबोधिता ॥ ४७ ॥ अनयात्विममेवा र्थंयाचितादत्तवत्यहम् ॥ एवंफलतिसंकल्पोनृणामस्मत्प्रसादतः ॥ ४८ ॥ वसिष्ठउवाच ॥ विदूरथस्तुसदनान्निर्गतःपरिवारितः ॥ परिवारेणमहतामहारत्नविभूषितः ॥ ४९ ॥ आलोक यन्वीरगणानारुरोहरथोत्तमम् ॥ कूटागारसमाकारंमुक्तामाणिक्यमंडितम् ॥२५०॥ अथोदप तदुद्दामनानाभ्ररवनिर्भरः ॥ शैलभित्तिप्रतिध्वानैर्दारुणोदुंदुभिध्वनिः ॥ ५१ ॥ किंकिणीजाल निध्वानैर्हेतिसंघट्टटंकृतैः ॥ धनुश्चटचटाशब्दैःशरसीत्कारगीतिभिः ॥ ५२ ॥

उदपततउत्थितः । उद्दामनानाभ्ररवनिर्भरः उद्दामान्युद्बंधनानियानिनानाभ्राणिनानामेघास्तेषांरववन्निर्भरोभरः सांद्रइत्यर्थः । शैलभित्तिषु पर्वतपार्श्वभित्तिषुप्रतिध्वानैःप्रतिध्वनिभिःदारुणोघोरः शैलभित्तिप्रतिध्वानदारुणः ॥ ५१ ॥ हेतिसंघट्टटंकृतैःशस्त्रसंघट्टनजनितटंकारैः । स्वैर

चिश्रशस्त्रंचवह्निज्वालाचहेतयइत्यमरः ॥ ५२ ॥ बंदीहठापहतास्त्री । यथाहुः क्षीरस्वामिनः । बंदीहठापहतास्त्रीति । शिलाघनोनिबिडाव यवपाषाणः शिलाघनैःकृतंपूरितंशिलाघनकृतं अशेषब्रह्मांडकुहरंयेनसतथा । कुहरंसुषिरम् । अतिमहताध्वनिनासर्वतःपूरितंब्रह्मांडविवरंशि लाघनपूरितमिवासीदित्यर्थः ॥ ५३ ॥ कुंजोलतादिपिहितोदरम् । दशाशादशदिशएवकुंजाजगद्दुदरस्य तत्पूरकोदशाशाकुंजपूरकः ॥५४॥ घनतांसांद्रताम् ॥ ५५ ॥ जज्वलुःज्वलनंचक्रुः ज्वलनाअग्नयः । कृपीटयोनिर्ज्वलनोजातवेदास्तनूनपादित्यमरः । जगर्जुःगर्जनंचक्रुः ॥५६॥

परस्परंभटाव्हानैर्बंदीविक्षुब्धरोदनैः ॥ शिलाघनकृताशेषब्रह्मांडकुहरध्वनिः ॥ ५३ ॥ हस्त ग्राह्योऽभवेद्धीमोदशाशाकुंजपूरकः ॥ अथोत्थितेनरजसापीनेनांबररोधिना ॥ ५४ ॥ मूर्खत्वं यौवनेनैवघनतामाययौतमः ॥ विवेशारिबलंराजाक्षीराब्धिमिवमंदरः ॥ ५५ ॥ जज्वलुःशस्त्र संघट्टज्वलनाउल्मुकाइव ॥ जगर्जुःशरधारौघान्वर्षंतोवीरवारिदाः ॥ ५६ ॥ निपेतुःकंकवत्क्रू रावीरांगेषुचहेतयः ॥ पेतुःपटपटारावंहेतिनिष्पिष्टयोंऽबरे ॥ ५७ ॥ उत्तस्थुर्यमयात्रायांकबंधन रपंक्तयः ॥ प्रशेमुःपांसवोरक्तैस्तमांस्यायुधवह्निभिः ॥ ५८ ॥ युद्धैकध्यानतःशब्दभयानिमृति निश्चयैः ॥ अभवत्केवलंयुद्धमपशब्दमसंभ्रमम् ॥ ५९ ॥ समसमरवसंवहच्छरौघंटकिटकितारव संपतद्धशुंडि ॥ कणकणरवसंमिलन्महास्त्रंतिमिनिधिवद्रणमासदुस्तरंतत् ॥ २६० ॥

कंकोलोहपृष्ठाख्यःपक्षी । लोहपृष्ठस्तुकंकःस्यादित्यमरः । पेतुःपतनंचक्रुः । पटपटारावमितिक्रियाविशेषणं निष्पिष्टयोनिष्पेषाः ॥५७॥ प्रशे मुःप्रशांताः । तमांसिशब्दभयानिचक्रमेणआयुधवह्निभिःरश्मिभिः ॥ ५८ ॥ युद्धैकध्यानान्मृतिनिश्चयैश्चप्रशेमुः । अपशब्दंनिःशब्दंयथाभव तितथा ॥ ५९ ॥ समसमेति शब्दानुकारः । समसमरवंयथाभवतितथासंवहत्संपतत् शरौघोयस्मिन्रणेतत्तथा । अथवा समाःसमज

वाःपरस्परंसमसमवच्छब्दाःसंवहंतश्चशरौघोयस्मिंस्तत्तथा। यद्वा समंसममत्यृज्जुयथाभवतितथारवेणसंवहंतःशरौघायस्मिंस्तत्तथा। अथवा समंयुगपदेवसमरवंयथातथासंवहंतःशरौघायस्मिंस्तत्तथा। टकिटकितेतिशब्दानुकारः कलकलेतिवा। भुशुंडीनामायुधविशेषः। दुस्तरत्वमात्रेदृष्टांतः। तिमिनिधिवत्समुद्रवत् ॥२६०॥ ६१॥ देवीति॥ नोऽस्माकम्। नोइत्यभावे। विद्रुतवारणेप्रविलापितगजे रणइतिसंबंधः॥६२॥

वसिष्ठउवाच॥ एतस्मिन्वर्तमानेतुघोरेसमरसंभ्रमे॥लीलाद्वयमुवाचेदंदेवींभगवतींप्रति॥६१॥ देविकस्मादकस्मान्नोभर्ताजयतिनोरणे ॥ वदत्वय्यपितुष्टायामस्मिन्विद्रुतवारणे॥६२॥ देव्युवाच ॥ चिरमाराधितातेनविदूरथनृपारिणा॥ अहंपुत्र्यौजयार्थेननविदूरथभूभृता॥६३॥ तेनासावेवजयतिजीयतेनविदूरथः॥ अनेनमुक्तएवस्यामहमित्यस्मिभाविता॥६४॥ प्रतिभारूपिणीतेनबालेमुक्तिर्भविष्यति ॥ एतदीयस्त्वयंशत्रुर्जयीराज्यंकरिष्यति ॥ ६५ ॥ वसिष्ठउवाच ॥ एवंदेव्यांवदत्यांतुबलयोर्युद्ध्यमानयोः॥ रविर्द्रष्टुमिवाश्चर्यमाजगामोदयाचलात् ६६ भुवनंकज्जलांभोधेरिवोद्धृत्तमराजत॥ पेतुःकनकनिष्पंदसुंदरारविरश्मयः॥६७॥ एतस्मिन्नंतरे सेनाःसर्वाःसंक्षयमाययुः॥ आसीद्रणांगणंशून्यमिवाल्पोभयसैनिकम् ॥६८॥ प्राप्यराजा पुरःशत्रुंसिंधुमुद्धरकंधरम्॥ धनुरास्फालयामासपरिवादितदिङ्मुखम्॥६९॥

॥६३॥६४॥ प्रतिभारूपिणीमनोमयी ॥ ६५॥ युद्ध्यमानयोःसतोः॥ ६६॥ कज्जलंमसी कनकनिष्पंदाःसुवर्णशलाकाः॥ ६७॥ सैनिकाःसेनायां समवेताः॥६८॥ सिंधुंसिंधुनामकं उद्धरकंधरंउन्नतग्रीवम्। धनुरास्फालयामासधनुर्ज्यांआततानेत्यर्थः। परिवादिता

निपरिनार्दितानिदिङ्मुखानियस्मिन्कर्मणितत्तथा ॥ ६९ ॥ आस्फोटोऽत्राभिहतिःअमरगिरिर्मेरुः करान्किरणान् ॥२७०॥ शिलीमुखाः सायकाः ॥ ७१ ॥ ७२ ॥ कार्मुकंधनुः वर्मकवचम् ॥ ७३ ॥ स्फारोविपुलोयःशिलापट्टःतद्वद्दृढःपीवरःपीनश्चमूर्धाऊर्ध्वभागोयस्यहृदस्त त्तथा ॥ ७४ ॥ ७५ ॥ भांडोपस्करेति ॥ भांडानामुपस्कराणांउपकरणानांभारौघैर्विद्रवत् शकटानांव्रातःसमूहोयस्यराष्ट्रस्यतत्तथा ।



कल्पांतपवनास्फोटइवामरगिरेस्तटम् ॥ विससर्जोर्जितोराजाप्रातरर्ककरानिव ॥ २७० ॥ तीक्ष्णाःपरमदुस्पर्शाःशिलीमुखपरंपराः ॥ सिंधोरपितथैवासीन्मुक्तिलाघवमेवच ॥ ७१ ॥ एवं सिंधुर्महाबाहुश्चिरंसमरमूर्धनि ॥ क्रीडित्वापीडयामासशरवर्षैर्विदूरथम् ॥ ७२ ॥ छिन्नध्वजं छिन्नरथंभिन्नाश्वंभिन्नसारथिम् ॥ छिन्नकार्मुकवर्माणंछिन्नसर्वांगमाकुलम् ॥ ७३ ॥ हृदिस्फार शिलापट्टदृढपीवरमूर्धनि ॥ भित्त्वावज्रसमैर्बाणैःपातयामासभूतले ॥ ७४ ॥ हतोराजाहतोरा जाप्रतिराजेनसंयुगे ॥ इतिशब्देसमुद्भूतेराष्ट्रमासीत्समाकुलम् ॥ ७५ ॥ भांडोपस्करभारौ घविद्रवच्छकटव्रजम् ॥ आक्रंदार्तकलत्रौघविद्रवन्नागरोत्करम् ॥ ७६ ॥ एतस्मिन्नंतरेलीला तामुवाचसरस्वतीम् ॥ श्वासावशेषमालोक्यमूढंभर्तारमग्रतः ॥ ७७ ॥ प्रवृत्तोदेहमुत्स्रष्टुंमद्भ र्तायमिहांबिके ॥ भर्तारमनुयास्यामिदयांकुरुमहेश्वरि ॥ ७८ ॥

आसमंतात्क्रंदोरोदनंआक्रंदस्तेनार्तोदुःखितःकलत्रौघोयस्यतत्तथा । विद्रवत् प्रधावन् नागराणांनगरभवानामुत्करःपुंजोयस्यतत्तथा । स्या त्रिकायःपुंजराशीतूत्करःकूटमस्त्रियामित्यमरः ॥ ७६ ॥ ७७ ॥ ७८ ॥

पुप्लुवेप्लवनंचक्रे । प्लुगतौइतिधातोर्लिट् पेलवस्तनुःआकारोयस्याःसापेलवाकारा । पेलवंविरलंतन्वित्यमरः ॥ ७९ ॥ २८० ॥ ब्रह्मांडखर्प
रंब्रह्मांडकपालं स्थानम् । स्यात्कर्परःकपालोऽस्त्रीत्यमरः ॥ ८१ ॥ महाचिदेवपरमात्माख्यगगनं तस्यांतरंमध्यंमहाचिद्गगनांतरम् । महात्मनो

इत्युक्त्वाऽऽज्ञध्यनुध्यानात्सासामर्थ्यवतीक्षणात् ॥ पुप्लुवेपेलवाकारापक्षिणीवनभस्तले ॥ ७९ ॥
मेघमार्गानथोल्लंघ्यवातस्कंधानथोपुनः ॥ सूर्यमार्गाद्विनिर्गत्यतारामार्गमतीत्यच ॥ २८० ॥
ब्रह्मादिस्थानमाक्रम्यप्राप्यब्रह्मांडखर्परे ॥ ब्रह्मांडखर्परंभित्त्वाजलाद्यावरणांस्ततः ॥ ८१ ॥ स
मुल्लंघ्यपुरःप्रापमहाचिद्गगनांतरम् ॥ अदृष्टपारपर्यंतमतिवेगेनधावता ॥ ८२ ॥ सर्वतोगरुडे
नापिकल्पकोटिशतैरपि ॥ तत्रब्रह्मांडलक्षाणिसंत्यसंख्यानिभूरिशः ॥ ८३ ॥ तान्यन्योन्यम
दृष्टानिफलानीवमहावने ॥ तत्रैकस्मिन्पुरःसंस्थेविततावरणान्विते ॥ ८४ ॥ वेधयित्वाविवे
शांतःप्रापयत्पद्मपत्तनम् ॥ तत्रतन्मंडपंप्राप्यदेवीशक्त्युपबृंहिता ॥ ८५ ॥ प्रविश्यपुष्पगुप्तस्य
शवस्यनिकटेस्थिता ॥ तंदृष्ट्वाचिंतयामासचेतसास्फुरितात्मना ॥ ८६ ॥ एषमेभविताभर्ता
नूनंवीरवराग्रणीः ॥ अहंदेव्याःप्रसादेनततःप्रथममागता ॥ ८७ ॥ इतिसंचिंत्यसाहस्तेगृही
त्वाचारुचामरम् ॥ वीजयामासराजेंद्रंलीलाललितयौवना ॥ ८८ ॥

ऽपिपृथिव्याद्यावरणवत्परिच्छेदमाशंक्याह ॥ अदृष्टेति ॥ ८२ ॥ गरुडेनाप्यदृष्टपारपर्यंतमितिसंबंधः ॥ ८३ ॥ ८४ ॥ ८५ ॥ स्फुरिता
त्मनाचलितस्वरूपेण विस्मयोत्फुल्लस्वरूपेणेतियावत् ॥ ८६ ॥ ८७ ॥ ८८ ॥

वसिष्ठउवाच ॥ एतस्मिन्नंतरेराज्ञःपतितस्यमहीतले ॥ जीवंददृशतुर्देव्यौदिव्यदृष्ट्यानभोगतम् ॥८९॥ अथजीवकलालीलाज्ञप्तिश्चेतित्रयंततः ॥ पुप्लुवेजीवलेखातुयोगिन्यौतेनपश्यति ॥ २९० ॥ तमेवानुसरंत्यौतेसर्गात्सर्गांतरंगते ॥ पद्मराजपुरंप्राप्यलीलांतःपुरमंडपम् ॥ ९१ ॥ क्षणाद्विविशतुःस्वैरंजीवलेखाप्यथाग्रगा ॥ ततोददृशतुर्देव्यौशवशय्यैकपार्श्वगाम् ॥ ९२ ॥ लीलांविदूरथस्याग्रेप्रस्थितांप्रथमागताम् ॥ एतस्मिन्नंतरेज्ञप्तिर्जीवंवैदूरथंपुनः ॥ ९३ ॥ संकल्पेनरुरोधाथमनसःस्पंदनंयथा ॥ ततोभगवतीमाहलीलाललितलोचना ॥ ९४ ॥ देविसप्राक्तनोदेहःकथंममनदृश्यते ॥ ९५ ॥ ज्ञप्तिरुवाच ॥ शृणुदेहस्यकिंवृत्तंतवलीलेमहाशये ॥ समाधौत्वयिलीनायांतदातवकलेवरम् ॥ ९६ ॥ निर्जीवंपतितंभूमौसंशुष्कमिवपल्लवम् ॥ काष्ठकुड्योपमोजातःशवस्तुहिनशीतलः ॥ ९७ ॥ ततोमंत्रिभिरागत्यमृतोऽयमितिनिश्चयैः ॥ चितौसंक्षिप्यसघृतंदग्धंचंदनदारुभिः ॥ ९८ ॥ इदानींत्वामिहालोक्यसशरीरामुपागताम् ॥ परलोकादागतेतिमहच्चित्रंभविष्यति ॥ ९९ ॥ आतिवाहिकदेहेनप्रतिभामात्ररूपिणा ॥ दृश्यसेसांप्रतंत्वंतुयोगर्द्धिबलबृंहिता ॥ ३०० ॥



ल्पेनरुरोधनिरोधंचकार । ललितेसुंदरेलोचनेयस्याःसातथोक्ता ॥ ९४ ॥ ९५ ॥ महानाशयोऽभिप्रायोयस्याःसातथोक्ता तत्संबोधनं हे महाशये ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ आतिवाहिकदेहेनलिंगशरीरेण प्रतिभामात्रंप्रतीतिमात्रंरूपंयस्यसतथा ॥ ३०० ॥

देहःस्थूलः वासनायाःस्थूलदेहवासनायाः रूढातिवाहिकदृशादृढलिंगशरीरप्रमायाः स्वप्नदेहवत्मनोव्यतिरिक्तआधिभौतिकदेहोनास्तीति दृढप्रमयेत्यर्थः । अतएवाहुः । जीवन्मुक्तस्यशरीरंप्रातिभासिकमिति ॥ १ ॥ संकल्पलीलयासंकल्पक्रीडयायावदात्मानंदर्शयावस्ताव द्व्यवहारःप्रवर्तताममितिसंबंधः । तावच्छब्दार्थेवायावच्छब्दः ॥ २ ॥ लीलैवेमेआवांतावत्पश्यत्वितिज्ञप्तिदेव्याचिंतितेसतीत्यन्वयः ॥३॥ ४ ॥

विस्मृतस्तवदेहोऽसौवासनायाःपरिक्षयात् ॥ रूढातिवाहिकदृशाप्रशाम्यत्याधिभौतिकः ॥ १ ॥
तद्देहियावल्लीलायैलीलेसंकल्पलीलया ॥ आत्मानंदर्शयावोऽस्यैव्यवहारःप्रवर्तताम् ॥ २ ॥
आवांतावदिमेलीलापश्यत्वित्येवचिंतिते ॥ ज्ञप्तिदेव्याततस्तत्रलीलाचलविलोचना ॥ ३ ॥ गृह
मालोकयामासतत्तेजःपुंजभासुरम् ॥ गृहमालोक्यपुरतोलीलांज्ञप्तिंविलोक्यच ॥ ४ ॥ उत्थायसं
भ्रमवतीतयोःपादेषुसापतत् ॥ उपाविशद्विष्टरेषुज्ञप्तिलीलेचतेततः ॥ ५ ॥ ज्ञप्तिरुवाच ॥ देहं
सहारिगामिन्यौलीलेललितलोचने ॥ उत्थापयावोन्नृपतिंशवतल्पादिमंपुनः ॥ ६ ॥ इत्युक्त्वा
मुमुचेजीवमामोदमिवपद्मिनी ॥ ससमीरलवाकारस्तन्नासानिकटंययौ ॥ ७ ॥ घ्राणाकाशंविवे
शाशुवंशरंध्रमिवानिलः ॥ अंतस्थजीववदनंतस्यतत्कांतिमाययौ ॥ ८ ॥ क्रमादंगानिसर्वा
णिसरसानिचकाशिरे ॥ स्फारयामाससोऽगानिरसवंतिमृदूनिच ॥ ९ ॥

॥ ५ ॥ हंसहारिगामिन्यौहंसवन्मनोहारिगामिन्यौ । लीलेललितलोचनेइतिचसंबोधनप्रथमाद्विवचनम् ॥ ६ ॥ दूरव्याप्यामनोहरतियः परिमलःसः । आमोदःसोऽतिनिर्हारीत्यमरः । समीरोवायुः ॥ ७ ॥ ८ ॥ चकाशिरेदीप्तिंचक्रिरे । स्फारयामासबहुलीचकार ॥ ९ ॥

॥ ३२ ॥

उन्मीलयामासदृशौविमलालोककारिणी ॥ उत्तस्थौप्रोल्लसत्कायोविंध्याद्रिरिवजंगमः ॥३१०॥ उवाचकःस्थितइतिघनगंभीरनिस्वनम् ॥ लीलाद्वयमथास्याग्रेप्रोवाचादिश्यतामिति ॥ ११ ॥ कात्वंकेयंकुतश्चेयामित्याहसविलोकयन् ॥ तस्मैलीलाहहेदेवश्रूयतांयद्वदाम्यहम् ॥१२॥ महिला तवलीलाहंप्राक्तनीसहवर्तिनी ॥ इयंतेमहिलालीलाद्वितीयालीलयामया ॥१३॥ उपार्जितात्वदर्थे नप्रतिबिंबमयीशुभा ॥ शिरोभागोपविष्टेयंयेयंहैममहासने ॥१४॥ एषासरस्वतीदेवीत्रैलोक्यज ननीशुभा ॥ इत्याकर्ण्यसमुत्थायराजाज्ञप्तिपदाब्जयोः ॥ १५ ॥ पपातप्रयतोभूत्वासरस्वतिनमो ऽस्तुते ॥ इत्युक्तवंतंहस्तेनस्पृष्ट्वोवाचसरस्वती ॥ १६ ॥ सर्वापदःसकलदुष्कृतदृष्टयश्चगच्छंतुवः शिवमनंतसुखानिसम्यक् ॥ आयांतुनित्यमुदिताजनताभवंतुराष्ट्रेस्थिराश्चविलसंतुसदामहांतः ॥१७॥ वसिष्ठउवाच ॥ सरस्वतीतथेत्युक्त्वातत्रैवांतर्धिमाययौ ॥ जयमंगलपुण्याहघोषघुंघुमघर्घ रम् ॥ १८ ॥ हृष्टपुष्टजनाकीर्णंततोऽभून्नृपमंदिरम् ॥ ततोऽभिषिषिचुर्विप्रामंत्रिणोभूभुजश्चतम् ॥ १९ ॥ लीलालीलाचराजाचजीवन्मुक्तामहाधियः ॥ रेमिरेपूर्ववृत्तांतकथनैःसुरतैरिव ॥३२०॥

रः ॥ १३ ॥ त्वदर्थेनत्वत्प्रयोजननिमित्तेन ॥ १४ ॥ १५ ॥ १६ ॥ जनताजनसमूहः ॥ १७ ॥ घुंघुमोघर्घरइतिचशब्दानुकारः । ज यघोषेणमंगलपुण्याहघोषेणचघुंघुमध्वनयश्चयस्मिन्सतथा ॥ १८ ॥ १९ ॥ ३२० ॥ ॥ ३२ ॥

ज्ञप्तिज्ञानसंबुद्धः ज्ञप्तिदेव्युपदिष्टज्ञानवाक्यैःसम्यग्बुद्धइत्यर्थः ॥ २१ ॥ २२ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्योत्तमपूज्यपादशिष्यश्री मदात्मसुखकृतौवासिष्ठचंद्रिकायांउत्पत्तिप्रकरणेलीलोपाख्यानंनामषष्ठःसर्गः ॥ ६ ॥ आकाशजाख्यानलीलाख्यानाभ्यांविस्तरेणप्रतिपा दितमर्थं सुखप्रतिपत्तयेसंक्षेपेणवक्तुंप्रस्तावयति ॥ एतदिति ॥ दृश्यदोषनिवृत्तये दृश्यमेवसत्यतयाप्रतीयमानंदोषस्तस्यनिवृत्तये । घनतांसांद्र तांसत्यतामितियावत् ॥ १ ॥ असतोऽनिर्वचनीयप्रपंचस्याभासःस्फुरणंयस्मात्तदसदाभासम् । यद्वा असन्नविद्यमानआभासोदृश्योय

सज्ज्ञप्तिज्ञानसंबुद्धोराजालीलाद्वयान्वितः ॥ चक्रेवर्षायुतान्यष्टौतत्रराज्यमनिंदितम् ॥ २१ ॥
जीवन्मुक्तास्तइत्येवंराज्यंनिहतकंटकम् ॥ कृत्वाविदेहमुक्तत्वमासेदुःशुद्धसंविदः ॥ २२ ॥ इ
तिश्रीवाल्मीकीयेमोक्षोपायेउत्पत्तिप्रकरणेमंडपोपाख्यानेलीलोपाख्यानंनामषष्ठःसर्गः ॥ ६ ॥
वसिष्ठउवाच ॥ एतत्तेकथितंरामदृश्यदोषनिवृत्तये ॥ लीलोपाख्यानमनघंघनतांजगतस्त्यज
॥ १ ॥ असदाभासमच्छात्मब्रह्मास्तीहप्रबृंहितम् ॥ बृहच्चिद्भैरववपुरानंदाभिधमव्ययम् ॥ २ ॥
तस्ययत्सममापूर्णंशुद्धसत्त्वमचिन्हितम् ॥ तद्विदामप्यनिर्देश्यंतच्छांतंपरमंपदम् ॥ ३ ॥

स्मिन्नतदसदाभासम् । अच्छात्मस्वच्छरूपम् । ब्रह्मशब्दस्यार्थद्वयमाह । प्रबृंहितंमायिकप्रपंचेनोपचितंप्रबृंहितंबृहन्निरंकुशमहत्त्वसंपन्नं तत्त्वदृ ष्टिविपरीतदृष्टिभ्यांबृहत्त्वप्रबृंहितत्वयोर्द्वयोरेकत्राविरोधः । चितज्ञप्तिस्वरूपं भैरववपुर्भयंकरस्वरूपम् । भीषास्माद्वातःपवते भीषोदेतिसूर्य इतिश्रुतेः । यद्भयाद्वातिवातोऽयंसूर्यस्तपतियद्भयात् । अग्निरिद्भःसगिरिभिर्भूर्नमज्जतियद्भयादितिभगवद्वचनाच्च ॥ २ ॥ नन्वेवंविधंब्रह्मा स्तिचेत्तर्हीदंतदितिविविच्यनिर्दिश्यतामित्यतआह ॥ तस्ययदिति ॥ सममंदृश्योत्पत्तिनाशयोरेकरूपम् । यद्वा सर्वेषुभूतेषुसमंअचिह्नितम

लांछितं विदांज्ञानिनामप्यनिर्देश्यंअवाच्यंक्षीरमाधुर्यवत् । शांतंनिर्विकारम् । तद्विष्णोःपरमंपदमित्यादिश्रुतिप्रमाणकंतदितिसूचयति ॥ परमंपदमिति ॥ ३ ॥ उक्तंब्रह्मतत्त्वंअध्यारोपापवादाभ्यांविशदयति । ब्रह्मणःस्फुरणमित्यादिभिःसप्तभिः । अथशब्दोर्थांतरोपन्यासे । अपिसमुच्चये । अवातांबुधेरिव अवातस्थदीपस्येवापिब्रह्मणःकिंचिद्यत्स्फुरणंचलनमस्तितंजीवंविद्धिजानीहि ॥ ४ ॥ तदेवतत्स्फुरणमेवघनसंवित्त्यासांद्रसंकल्पेननिबिडाहंकारभावनयेतियावत् । अहंतामहंकारतांवह्नेरग्नेःसूक्ष्मोंऽशोवन्ह्यणुः ॥५॥ संकल्पोन्मुखतांमनोभावनाभिमुखताम् । अप्यर्थेउतशब्दः । अहंकारउत संकल्पोन्मुखतांयातःसन्चित्तमित्यादिनामभिरुच्यमानंवस्तुभवतीत्यध्याहृत्ययोजनीयम् ॥ ६ ॥

ब्रह्मणःस्फुरणंकिंचिद्यदवातांबुधेरिव ॥ दीपस्याथाप्यवातस्यतंजीवंविद्धिराघव ॥ ४ ॥ तदेव घनसंवित्त्यायात्यहंतामनुक्रमात् ॥ वन्ह्यणुस्त्विवधनाधिक्यात्स्वांप्रकाशकतामिव ॥ ५ ॥ संकल्पोन्मुखतांयातस्त्वहंकारोभवत्युत ॥ चित्तंचेतोमनोमायाप्रकृतिश्चेतिनामभिः ॥ ६ ॥ परस्मात्कारणादेवंमनःप्रथममुत्थितम् ॥ मननात्मकमाभोगितेनेदंतन्यतेजगत् ॥ ७ ॥ अपारावारविस्तारसंवित्सलिलवल्गनैः ॥ चिदेकार्णवएवायंस्वयमात्माविजृंभते ॥ ८ ॥

एवमुक्तक्रमेणपरस्मात्कारणाद्ब्रह्मणःप्रथममुत्थितंमनस्तच्चमननात्मकंसंकल्पात्मकमाभोगिचभवति । आभोगःपरिपूर्णतास्यास्तीत्याभोगि स्वकार्यजगद्व्यापित्वात् ॥ ७ ॥ तस्याभोगित्वमुक्तंविशदयति ॥ अपारेति ॥ पारंपरंतीरं अवारंअर्वाक्तीरं । पारावारेपरार्वाचीतीरेइतिवचनात् । अपारावारोविस्तारोयेषांतान्यपारावारविस्ताराणि संविदएवसंकल्पापरपर्यायाः । सलिलानिसंवित्सलिलानि अपारावाराणिचतानिसंवित्सलिलानिचतैश्चिदेकार्णवएवायमात्मामनोभूत्वा अपारा[illegible]वल्गनैःस्वयंजगद्रूपेणविजृंभितइत्यन्वयः ॥ ८ ॥

दीर्घस्वप्नेतिस्पष्टार्थः । वाचारंभणंविकारोनामधेयमित्यादिश्रुतेः ॥ ९ ॥ चिदात्मतत्त्वयोर्जीवब्रह्मणोःकार्यकारणयोर्द्वैतंभेदोयथानास्ति तथाजीवमनसोःकार्यकारणयोर्नास्तिभेदः । एवंमनःप्रपंचयोरपिकारणाद्यात्मनोर्नभेदः ॥१०॥ उक्तेऽर्थेसूच्युपाख्यानमवतारयति ॥ अत्रै वेति ॥ क्वचिद्धिंसाविहाराणामपितामसानांकथंचिद्धिंसानभिसंबंधिपूर्वप्रयत्नातिशयेनापवर्गमार्गःसमुदेतीतिदर्शनार्थंचेदमाख्यानमिति ज्ञेयम् । आवलिताखिलंक्रोडीकृतसर्वम् ॥ ११ ॥ कज्जलपंकाद्रेःमषीपंकगिरेःउत्तरस्यांदिशिशालभंजिकेवपुत्तलिकेवप्रतीयमाना ॥ १२ ॥

दीर्घस्वप्नस्थितिंयातःसंसाराख्योमनोवशात् ॥ असम्यग्दर्शनात्स्थाणाविवपुंप्रत्ययोदृढः ॥ ९ ॥
द्वैतंयथानास्तिचिदात्मजीवयोस्तथैवभेदोऽस्तिनजीवचित्तयोः ॥ यथैवभेदोऽस्तिनजीवचित्तयोस्त
थैवभेदोऽस्तिनचित्तसर्गयोः ॥ १० ॥ वसिष्ठउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ राक्षस्यो
क्तंमहाप्रश्नजालमावलिताखिलम् ॥ ११ ॥ अस्तिकज्जलपंकाद्रेरिवोग्राशालभंजिका ॥ हिमाद्रेरुत्तरे
पार्श्वेकर्कटीनामराक्षसी ॥ १२ ॥ स्थिरविद्युल्लतानेत्राखर्जूरतरुजानुका ॥ वैडूर्यसूर्याग्रनखास्नाय्वस्थिग्रंथि
देहिनी ॥ १३ ॥ तस्याविपुलकायत्वाद्दुर्लभत्वान्निजांधसः ॥ अतृप्तोऽर्णवलेखायाइवाभूज्जाठरोऽनलः १४

स्थिरेयेविद्युल्लतेतद्वन्नेत्रेयस्याःसातथोक्ता । अभूतोपमैषा । खर्जूरतरुःतृणप्रधानवृक्षविशेषःसचदीर्घोदर्दुरश्चभवति तद्वज्जानुनीयस्याःसातथो क्ता । वैडूर्यरत्नकृतसूर्यवदग्रनखानियस्याःसावैडूर्यसूर्याग्रनखा । वैडूर्यसूर्योग्रनखेतिक्वचित् । स्नायवोवस्त्रसादेहवेष्टनानिस्नायूनामस्थ्नां चग्रंथिभिर्युक्तोदेहोयस्याःसास्नाय्वस्थिग्रंथिदेहिनी ॥ १३ ॥ निजांधसःस्वान्नस्यनरमांसादिलक्षणस्यअर्णवलेखायाजठरभवोवडवानलइव तस्यजाठरोऽनलऔदर्योऽग्निरतृप्तोऽभूत् ॥ १४ ॥

॥ १५ ॥ निगिरामिग्रसामि अनारतंसंततम् ॥ १६ ॥ मेघेनेति ॥ मृगतृष्णाहिमरुमरीचिकामेघेनसेचनेनोच्छाम्यति । तत्तर्हिसर्वजंतुजातजिघांसयासर्वप्राणिसमूहहननेच्छया ॥ १७ ॥ १८ ॥ चंद्रार्कयोःस्पंदेषुगतिषुलोचनेयस्याःसाचंद्रार्कस्पंदलोचना चंद्रार्कदत्तदृष्टितयातद्गत्यनुसारिलोचनेत्यर्थः ॥ १९ ॥ शैलतउपादानकारणात् कृतायाइवस्थितायाः ॥ २० ॥ २१ ॥ अलंशक्तः आइतिस्मरणे । आप्र



नकदाचनसातृप्तिमुपयातिमहोदरी ॥ वडवानलजिव्हेवचिंतयामासचैकदा ॥ १५ ॥ जंबुद्वीपगतान्सर्वान्निगिरामिजनानपि ॥ अनारतमनुच्छ्वासंजलराशिमिवार्णवः ॥ १६ ॥ मेघेनमृगतृष्णेवतन्मेक्षुदुपशाम्यति ॥ तपःकरोमिपरममखिन्नेनैवचेतसा ॥ इतिसंचिंत्यसासर्वजंतुजातजिघांसया ॥ १७ ॥ तपोऽर्थमथसस्मारपर्वतंभूतदुर्गमम् ॥ तत्रगत्वाथसास्नात्वातपःकर्तुंव्यवस्थिता ॥ १८ ॥ अतिष्ठदेकपादेनचंद्रार्कस्पंदलोचना ॥ क्रमेणदिवसाःपक्षास्तस्यामासास्ततोययुः ॥ १९ ॥ शीतातपेष्वलीनायाःकृतायाइवशैलतः ॥ अष्टवर्षसहस्रेणतांपितामहआययौ ॥ २० ॥ दारुणंहितपःसिद्ध्यैनीचानामपिजायते ॥ मनसैवप्रणम्यैनंसातथैवस्थितासती ॥ २१ ॥ कोवरःक्षुच्छमायालमितिचिंतापराभवत् ॥ आस्मृतंप्रार्थयिष्येऽहंवरमेकमिमंविभुं ॥ २२ ॥ अनायसीवायसीवस्यामहंजीवसूचिका ॥ यथाभिमतमेतेनग्रसेयंसकलंजनम् ॥ २३ ॥ क्रमेणक्षुद्विनाशायक्षुद्विनाशःपरंसुखम् ॥ प्राणिनांमिहसर्वेषांहृदयंप्रविशाम्यहम् ॥ इतिसंचिंतयंतींतामुवाचकमलालयः ॥ २४ ॥



गृह्यःस्मृतौवाक्यइत्यमरः ॥ २२ ॥ अनायसीवायसीव अलोहमय्यपिलोहमयीव जीवसूचिकाजीवानांसीवनीस्यां एतेनवरेणजगद्यथाभिमतंक्रमेणक्षुन्नाशायग्रसेयमितिसंबंधः ॥ २३ ॥ सहप्राणैःसहेत्यर्थः । वक्ष्यतिच प्रविश्यहृदयंप्राणैरिति ॥ २४ ॥

रक्षसांकुलमेवशैलस्तस्याभ्रमालिके हेरक्षःकुलशैलाभ्रमालिके ॥ २५ ॥ विधेहेविरिंचे ॥ २६ ॥ कर्कट्याप्रार्थितोलोकसिद्धजीवसूचित्वदा नात्सकलजनानामपूर्वदुःखसागरनिमज्जनंमाभूदितिजगतिस्वतएवविद्यमानविषूचिकाव्याधिभावंअस्यैदातुंइच्छन्प्राप्तकर्मानुसारीभगवा न्पुनराहपितामहः । सूचिकासोपसर्गेति वीत्यनेनोपसर्गेणसहवर्ततइतिसोपसर्गासूचिकाभविष्यसि । सोपसर्गसूचिकामेवदर्शयति । विषू

पुत्रिकर्कटिकेरक्षःकुलशैलाभ्रमालिके ॥ उत्तिष्ठतवतुष्टोऽस्मिगृहाणाभिमतंवरम् ॥२५॥ कर्कट्युवा च ॥ भगवन्भूतभव्येशस्यामहंजीवसूचिका ॥ अनायसीवायसीववविधेदास्यसिचेद्वरम् ॥ २६ ॥ वसिष्ठउवाच ॥ एवमस्त्वितितामुक्त्वापुनराहपितामहः ॥ सूचिकासोपसर्गात्वंभविष्यसिविषूचि का ॥२७॥ दुर्भोजनादुरारंभामूर्खादुःस्थितयश्चये ॥ दुर्देशवासिनोदुष्टास्तेषांहिंसांकरिष्यसि ॥२८॥ प्रविश्यहृदयंप्राणैःपद्मप्लीहादिबाधनात् ॥ वातलेखात्मिकाव्याधिर्भविष्यसिविषूचिका ॥ २९ ॥ सगुणंनिर्गुणंचैवजनमासादयिष्यसि ॥ सगुणानांचिकित्सार्थंमंत्रोऽयंतुमयोच्यते ॥३०॥ ॐह्रां ह्रींश्रींरांविष्णुशक्त्येनमोभगवतिविष्णुशक्तिएहि एनांहरहरदहदहहनहनपचपचमथमथउ त्सादयउत्सादयदूरेकुरुकुरुस्वाहा ॥ विषूचिकेत्वंहिमवंतंगच्छगच्छजीवसारचंद्रमंडलंगतोऽसि स्वाहा ॥ इतिमंत्रीमहामंत्रंन्यस्यवामकरोदरे ॥ मार्जयेच्चातुराकारंतेनहस्तेनसंयतः ॥ ३१ ॥

चिकेति ॥२७॥२८॥ पद्मेति ॥ पद्मोनामरोगः प्लीहागुल्मः पद्मप्लीहादिभिर्बाधनाद्विषूचिकाव्याधिर्भविष्यसि ॥ वातलेखेति ॥ २९ ॥ ३० ॥ विष्णुशक्ति हेविष्णुशक्ते । आतुरःसंबोध्यते । जीवेति । हेजीवचंद्रमंडलममृतमयंगतोऽसिस्वाहा स्वयमिहागच्छतुमयाहूयमानंजीवात्मकंह

विश्वंद्रमंडलंस्वयंगच्छत्वित्यर्थः। मंत्रीमहामंत्रं मंत्राणांमध्येमहामंत्रम्। वामकरोदरेवामपाण्यन्तःप्रदेशेतस्यतलइत्यर्थः। न्यस्यन्यासंकृत्वामांत्रिकोदक्षिणहस्तेनस्ववामपाणितलेमंत्राक्षराणिलिखित्वेत्यर्थः। आतुराकारंव्याधिताकारम्। संयतोनियतः॥३१॥ मंत्रएवमुद्गरस्तेनमर्दिताम् ॥३२॥ रसायनहृदिअमृताभ्यंतरे ॥ ३३ ॥ स्वाचांतःसम्यक्कृताचमनः ॥ ३४ ॥ ३५ ॥ माषशमीतुल्यामाषशिंबातुल्या। माषबीजको

हिमशैलाभिमुख्येनविधूतांतांविचिंतयेत् ॥ कर्कटींकर्कशांक्रुद्धांमंत्रमुद्गरमर्दिताम् ॥ ३२ ॥ आतुरंचिंतयेच्चंद्रेरसायनहृदिस्थितम् ॥ अजरामरणंमुक्तंसर्वाधिव्याधिविभ्रमैः ॥ ३३ ॥ साधकोहिशुचिर्भूत्वास्वाचांतःसुसमाहितः ॥ क्रमेणानेनसकलाःप्रोच्छिनत्तिविषूचिकाः ॥ ३४ ॥ इत्युक्त्वाभगवान्वेधास्तत्रैवांतरधीयत ॥ अथप्रादेशमात्राभाततोऽप्यंगुलरूपिणी ॥३५॥ ततोमाषशमीतुल्याततःसूचीबभूवसा ॥ कस्यचिद्विवशांगस्यक्षीणस्यविकलस्यच ॥ ३६ ॥ प्रविश्यांतर्वातसूचीभवत्यातिविषूचिका ॥ कस्यचित्तनुदेहस्यदुःस्थस्यविकलस्यच ॥ ३७ ॥ प्रविश्यजीवसूचित्वेभवत्यंतर्विषूचिका ॥ ३८ ॥ एवंबहूनिवर्षाणिप्राणिप्राणैकघातिनी ॥ देहद्वयेनबभ्रामव्योम्निभूमितलेतथा ॥ ३९ ॥

शसमेत्यर्थः। शमीशिंबात्रिषूत्तरइत्यमरः ॥ ३६ ॥ वातसूचीवाय्वात्मकसूचीसती। अतिविषूचिकातिशयितविषूचिकाव्याधिर्भवति। तनुदेहस्यकृशदेहस्य विकलस्यास्वस्थस्येत्यर्थः ॥ ३७ ॥ जीवसूचित्वइतिनिमित्तसप्तमी ॥ ३८ ॥ देहद्वयेनेतिराक्षसीरूपदेहस्यनष्टत्वात्सूचीरूपदेहद्वयेनेत्यर्थः। यथोक्तंबृहद्वाशिष्ठे। अन्याबभूवलघ्वीसातथाजीवविषूचिका। व्योमात्मिकानिराहाराव्योमवृत्तिशरीरका। एवमस्या

स्तनुर्जातास्सूचिद्वयमपीहसा। नीहारांशुककार्पासंकार्पासांशुकपेलवा। तनुद्वयेनतेनासौप्रविश्यहृदयंनृणाम्। बाधयंतीततःक्रूराप्रबभ्राम दिशोदशेति ॥ ३९ ॥ निर्वेदंवैराग्यम्। धिगितिनिंदायाम्। धिङ्निर्भर्त्सननिंदयोरित्यमरः ॥ ४० ॥ किमिवेतीवशब्दोवाक्यालंकारार्थः। यास्यतिअंतर्भविष्यति ॥ ४१ ॥ हंतेतिविषादे। हंतहर्षेऽनुकंपायांवाक्यारंभविषादयोरित्यमरः। तृष्णेवसूचीदुःखदत्वात्तृष्णासूची ॥४२॥

अथकालेनमहताकर्कटीवनराक्षसी ॥ निर्वेदमंतरगमद्धिक्कष्टंकिमिदंकृतम् ॥ ४० ॥ किमहंसूचिकाजातासूच्यांकिमिवयास्यति ॥ सूचीयंरक्तमांसानांकणमात्रेणपूर्यते ॥ ४१ ॥ ममांतरानिशंहंततृष्णासूचीसुदुर्भरा ॥ क्वमेतानिविशालानिगतान्यंगानिदुर्धियः ॥ ४२ ॥ कालमेघविशालानिसुविशीर्णानिपर्णवत् ॥ सूच्यामपिहताशायांमनागपिनमांतिहि ॥ ४३ ॥ स्वादुमांसरसग्रासोवसावारक्तमेवच ॥ इतिसंचिंत्यचित्तस्थंसंहृत्यजनमारणम् ॥ तदेवहिमवच्छृंगंजगाम तपसेपुनः ॥ ४४ ॥ सर्वताश्चित्तमाहृत्यनिर्वेदरसगर्भिणी ॥ सूचीदेहेनसोद्विग्नातेपेऽतिकठिनंतपः ॥ ४५ ॥ निःसंकल्पानिराहारानिस्तरंगमनोमयी ॥ अथवर्षसहस्रांतेसाप्रापपरमांदशाम् ॥४६॥ बभूवनिर्मलासूचीतपसाक्षीणकल्मषा ॥ जाताविदितवेद्यासास्वयमेवतयाधिया ॥४७॥

मनागीषत्। ईषन्मनागित्यमरः ॥ ४३ ॥ स्वादुमांसस्यरसोपेतोग्रासःस्वादुमांसरसग्रासः वसावपा। हृन्मेदस्तुवपावसेत्यमरः। जनमारणं जनमारणाभिप्रायम् ॥ ४४ ॥ निर्वेदरसोवैराग्यसारोगर्भेऽन्तर्यस्याःसानिर्वेदरसगर्भिणी। उद्विग्नासंतप्ता तेपेतपश्चक्रइत्यर्थः ॥ ४५ ॥ निस्तरंगमनोमयीनिर्विकारमनःप्रधाना ॥ ४६ ॥ निर्मलारागादिरहिता। तत्रहेतुः। क्षीणकल्मषेति। विदितंवेद्यंब्रह्मात्मैक्यंययासाविदि

तवेद्या तयाप्रसिद्धया ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ मूढाअब्रह्मविदः । मूर्खाहिताहितविवेकरहिताः ॥ ५१ ॥ तदनुतदनंतरं बाह्यक
लोलवर्जिता बाह्येष्वनात्मसुप्रवृत्तायाअंतःकरणसंबंधिन्यस्ताएवकल्लोलामहोर्मयःतैर्वर्जिता ॥ ५२ ॥ ५३ ॥ यावत्सत्वंयावत्प्राणम् । द्र



ततोवर्षसहस्राणिनिःसंकल्पतयातया ॥ तस्थौनिखिलसंसारहेयतांहृदिकुर्वती ॥ ४८ ॥ तांवेधास्ताह
शींज्ञात्वापदंपरममास्थिताम् ॥ उपेत्योवाचभगवान्पुत्रिकर्कटिराक्षसि ॥ ४९ ॥ तामेवतनुमासाद्य
सुखिनीभुवनेचर ॥ जीवन्मुक्तासिहेवत्सेहार्दंतेगलितंतमः ॥ ५० ॥ येमूढायेदुरारंभामूर्खादुःस्थितय
श्चये ॥ दुर्देशवासिनोयेचतेतेग्रासायसुस्थिताः ॥ ५१ ॥ इत्युक्त्वांतर्दधेवेधाःसाभूत्तदनुराक्षसी ॥ अं
तःसंविन्मयीजाताबाह्यकल्लोलवर्जिता ॥ ५२ ॥ चिरंतदनुसातस्थौनिर्विकल्पसमाधिना ॥ अथकाले
नमहताचित्तस्पंदनमेत्यसा ॥ बहिर्वृत्तिमयीजातातासस्मारपुनःक्षुधाम् ॥ ५३ ॥ यावत्सत्वंहिदेहस्यस्व
भावोनापवर्तते ॥ तत्रसाचिंतयामासग्रासोजात्युचितोमम ॥ ५४ ॥ वेधसाकल्पितोमूढोजनस्तान्विचि
नोम्यहम् ॥ इतिसंचिंत्यसातस्मादुत्थायगिरिशृंगतः ॥ ५५ ॥ विवेशशैलपादस्थंकिरातजनमंडलम् ॥
तत्रक्वापिमहाटव्यांनिवासमकरोत्तदा ॥ ५६ ॥ एतस्मिन्नंतरेतत्रकिरातजनमंडले ॥ हस्तहार्यतमःपिंडाव
भूवासितयामिनी ॥ ५७ ॥

व्यासुव्यवसायेऽपिसत्वमस्त्रीतुजंतुष्वित्यमरः ॥ ग्रस्यतेइतिग्रासआहारः ॥ ५४ ॥ वेधसामूढोग्रासःकल्पितइत्यन्वयः । विचिनोम्यन्वेष
यामि ॥ ५५ ॥ शैलस्यपादेप्रत्यंतपर्वतेतिष्ठतीतिशैलपादस्थम् । पादाःप्रत्यंतपर्वताइत्यमरः । अथवाशैलपादस्थंपर्वतमूलदेशस्थम् ॥ ५६ ॥
असितयामिनीकालरात्रिः ॥ ५७ ॥

॥ ५८ ॥ धृतंधैर्यंययासाधृतधैर्या ॥ ५९ ॥ अनयोरनात्मज्ञयोः । आत्मतयागृहीतदेहस्यावश्यंरक्षणीयत्वात् । तस्यचसर्वतःसोपद्रवत यारक्षणस्यदुष्करत्वाद्देहोभारोभारवत्दुःखकृदित्यर्थः ॥ ६० ॥ नाशायपुरुषार्थभ्रंशाय सुखानाशयइतियावत् ॥ ६१ ॥ हिंस्राणांहिंसनशी

तस्यांरजन्यांभीमायांमंत्रिणासहभूपतिः ॥ अटवींविक्रमोदारःप्राविशद्वीरचर्यया ॥५८॥ अटव्यांकर्कटीसातौचरंतौराजमंत्रिणौ ॥ अपश्यद्धृतधैर्याथवेतालालोकनोन्मुखौ ॥ ५९ ॥ अथसाचिंतयामासलब्धोभक्ष्योह्यहोमया ॥ मूढावेतावनात्मज्ञौभारोदेहःकिलानयोः ॥ ६० ॥ इहामुत्रचनाशायमूढोदुःखायजीवति ॥ तस्माद्विनाशनीयोऽसौपापसंपत्तिहेतुतः ॥ ६१ ॥ आदिसर्गेचनियमःकृतःपंकजजन्मना ॥ हिंस्राणांभोजनायास्तुमूढात्मानात्मवानिति ॥ ६२ ॥ तस्मादेतौमयैवाद्यभोक्तव्यौभोज्यतांगतौ ॥ अभव्यएवनिर्दोषंप्राप्तमर्थमुपेक्षते ॥ ६३ ॥ नकदाचिदिमौस्यातांगुणयुक्तौमहाशयौ ॥ तादृग्रूपविनाशोहिस्वभावान्मेनरोचते ॥ ६४ ॥ तदेतौसंपरीक्ष्येऽहंयदितादृग्गुणान्वितौ ॥ तद्भक्ष्यंनकरोम्येतौनहिंस्येगुणिनःक्वचित् ॥ ६५ ॥ अकृत्रिमंसुखंकीर्तिमायुश्चैवाभिवांछता ॥ सर्वाभिमतदानेनपूजनीयागुणान्विताः ॥ ६६ ॥ अपिनंक्ष्यामिदेहेननैवभोक्ष्येगुणान्वितम् ॥ सुखयंतिहिचेतांसिजीवितादपिसाधवः ॥ ६७ ॥

लानां । अनात्मवान् अजितमनाः ॥६२॥ भव्याःयोग्याः । यथाहुःक्षीरस्वामिनः । भव्योयोग्यइति । अभव्यस्तद्विलक्षणः ॥६३॥ नकदाचिदिति ॥ अत्रयदीत्यध्याहार्यम् । इमौयदिकदाचिदपिगुणयुक्तौमहाशयौचनस्यातांतर्हिमयाभोक्तव्यावितिशेषः ॥ ६४ ॥ ६५ ॥ ६६ ॥६७॥

॥ ६८ ॥ ६९ ॥ ७० ॥ गुणिनोऽमानित्वादिगुणवतोब्रह्मविदः तिरस्कारोगुणितिरस्कारः सएवमृतिर्मरणंजीवनफलनाशकत्वात् । गुणिनःसम्यगापद्येतसंश्रयंगुणिसंश्रयः सएवजीवितंसकलपुरुषार्थमूलत्वात् । गुणिनःसंश्रयःसमाश्रयोयस्यतस्माज्जीवितात्स्वर्गादिफलंभवति ॥ ७१ ॥ कामात्रापरिमाणमस्येतिकिंमात्रंज्ञानंययोस्तौतथोक्तौ ॥ ७२ ॥ रक्षसांकुलमेवकाननमरण्यंतस्यमंजरी ॥ ७३ ॥ हुंकारेणपरु



अपिजीवितदानेनगुणिनंपरिपालयेत् ॥ गुणवत्संगमौषध्यामृत्युरप्येतिमित्रताम् ॥ ६८ ॥
यत्राहमपिरक्षामिराक्षसीगुणशालिनम् ॥ तत्रान्यःकोनकुर्यात्तंहृदिहारमिवामलम् ॥ ६९ ॥
उदारगुणयुक्तायेविहरंतीहदेहिनः ॥ धरातलेंदवःसंगाद्दृशंशीतलयंतिते ॥ ७० ॥ मृतिर्गुणिति
रस्कारोजीवितंगुणिसंश्रयः ॥ फलंस्वर्गापवर्गादिजीविताद्गुणिसंश्रयात् ॥७१॥ तस्मादिमौप
रीक्ष्येऽहंकयाचित्प्रश्नलीलया ॥ किंमात्रज्ञानकावेताविवितितामरसेक्षणौ ॥ ७२ ॥ वसिष्ठउवाच ॥
अथसाराक्षसीरक्षःकुलकाननमंजरी ॥ तमस्येवाभ्रलेखेवगंभीरंविननादह ॥ ७३ ॥ नादांते
समुवाचेदंहुंकारपरुषंवचः ॥ गर्जितानंतरंजातकरकाशनिशब्दवत् ॥ ७४ ॥ भोभोघोराटवी
व्योमपदवीशशिभास्करौ ॥ महामायातमःपीठशिलाकोटरकीटकौ ॥ ७५ ॥

षंकठोरंहुंकारपरुषम् ॥ गर्जितेति ॥ करकावर्षोपलाःकरकाएवाशनिः गर्जनानंतरंजातोयःकरकाशनेःशब्दस्तद्वत्प्रतीयमानंवचः ॥७४॥ घोराटव्येवव्योमपदवीनभोमार्गःतस्याःशशिभास्करौ। महामायैव तमःपीठशिलांधकारस्थपीठात्मकशिलातस्याःकोटरंछिद्रंतत्कीटकौ हेमहामायातमःपीठशिलाकोटरकीटकौ ॥ ७५ ॥

मद्रासपदंमद्रासस्थानम् ॥ ७६ ॥ अलिनीध्वनेःभ्रमरीध्वनेः तत्समायाइत्यर्थः ॥ ७७ ॥ ७८ ॥ तादृग्घासस्यप्रचंडहासस्यप्रभापूरेणदूरात्प्रकटिताआकृतिर्यस्याःसातथोक्ता । हासेक्रियमाणेहिदन्तप्रभाःप्रसरंतियतःअतोऽभिधीयतेहासप्रभेति ॥ ७९ ॥ कल्पांताशनिकाशेन

कौभवंतौमहाबुद्धीदुर्बुद्धीवासमागतौ ॥ मद्ग्रासपदमापन्नौक्षणान्मरणकोचितौ ॥७६॥ राजोवाच ॥ भोभोभूतककिंस्यास्त्वंक्कतिष्ठसिचदेहकम् ॥ दर्शयास्यास्तवगिरःकोबिभेत्यलिनीध्वनेः ॥ ७७ ॥ राज्ञेत्युक्तेरम्यमुक्तमितिसंचिंत्यसातयोः ॥ प्रकाशायाप्यधैर्यायननादसुजहासच ॥ ७८ ॥ ततोददृशतुस्तांतौशब्दपूरितादिङ्मुखीम् ॥ तादृग्घासप्रभापूरदूरप्रकटिताकृतिम् ॥७९॥कल्पांताशनिकाशेनघुष्टामद्रितटीमिव ॥ तामवेक्ष्यमहावीरौतथैवाक्षुभितौस्थितौ॥८०॥ मंत्र्युवाच ॥ महाराक्षसिसंरंभःकिमयंतवनिष्फलः ॥ लाघवंह्यथवाकार्येलाघवेऽप्यतिसंभ्रमः ॥ ८१ ॥ त्यजसंरंभमारंभोनायंतवविराजते ॥ विषयेहिप्रवर्ततेधीमंतःस्वार्थसाधकाः ॥ ८२ ॥ त्वादृशीनांसहस्राणिमशकानामिवाबले ॥ अस्माकंधीरतावात्याव्यूढानितृणपर्णवत् ॥ ८३ ॥ संरंभज्वरमुत्सृज्यसमयास्वच्छयाधिया ॥ युक्त्याचव्यवहारिण्यास्वार्थःप्राज्ञेनसाध्यते ॥८४॥

प्रलयाशनिनिभेन घुष्टांशब्दिताम् ॥ ८० ॥ ८१ ॥ त्यजसंहर संरंभंआडंबरंकोपोवा । विषयेसाधयितुंयोग्येऽर्थे । हिशब्दोहेतौ ॥ ८२ ॥ धीरतावात्याव्यूढानि धीरतैववात्याचक्रवातःतयाविशेषेणोढानिधूतानि ॥ ८३ ॥ व्यवहरतीतिव्यवहारिणीतया व्यवहारानुकूलयेति

यावत् ॥ ८४ ॥ ८५ ॥ सत्वंबुद्धिः ॥ ८६ ॥ ८७ ॥ चलनैर्विवर्तनैः ॥ ८८ ॥ आशयानांअभिप्रायाणांमिथएकीभावमेवस्वाभिमतंदर्शयति ॥ आभ्यामिति ॥ स्वयमेवाविनाशिनौ अविनाशिब्रह्मरूपत्वात् ॥ ८९ ॥ तत्तस्मात्किंचित्संदेहमित्यत्रकिंचिदित्यव्ययम् । किंचिदीषन्मनागित्यव्ययवर्गपठितत्वात्संदिहतइतिसंदेहस्तम् ॥ ९० ॥ अकालकल्पाभ्रंअकालप्रलयमेघःतस्यरवइवरवोयस्मिंस्तंतथोक्तम्

कथयाभिमतांकिंतेकिमर्थयसिचार्थिनी ॥ अर्थीस्वप्नेऽपिनास्माकमप्राप्तार्थःपुरोगतः ॥८५॥ इत्युक्त्वासातदातेनचिंतयामासराक्षसी ॥ अहोनुविमलाचारंसत्वंपुरुषसिंहयोः ॥८६॥ नसामान्याविमौमन्येविचित्रेयंचमत्कृतिः ॥ वचोवक्रेक्षणान्येववदंत्यंतर्विनिश्चयम् ॥८७॥ वचोवक्रेक्षणद्वारैर्धर्मिणोमाशयामिथः ॥ एकीभवंतिसरितांपयांसिचलनैरिव ॥८८॥ आभ्यांप्रायःपरिज्ञातोममभावोऽनयोर्मया ॥ नविनाश्यौमयैतौचस्वयमेवाविनाशिनौ ॥८९॥ तदेतौपरिपृच्छामिकिंचित्संदेहमुत्थितम् ॥ प्राज्ञंप्राप्यनपृच्छंतिसंदेहंतेनराधमाः ॥ ९० ॥ इतिसंचिंत्यपृच्छायैतत्त्वानांवचनंततः ॥ अकालकल्पाभ्ररवंहासंसंयम्यसाब्रवीत् ॥९१॥ कौभवंतौनरौधीरौकथ्यतामितिमेऽनघौ ॥९२॥ मंत्र्युवाच ॥ अयंराजाकिरातानामस्याहंमंत्रितांगतः ॥ उद्यतौरात्रिचारेणत्वादृग्जनविनिग्रहे ॥ ९३॥ राज्ञांरात्रिंदिवंधर्मोदुष्टभूतविनिग्रहः ॥९४॥ राक्षस्युवाच ॥ राजंस्त्वमसिसन्मंत्रीदुर्मंत्रीननृपोभवेत् ॥ सन्नृपश्चभवेन्मंत्रीराजासन्मंत्रिणाभवेत् ॥९५॥

॥ ९१ ॥ ९२ ॥ त्वादृग्जनविनिग्रहेउद्यतावितिसंबंधः ॥९३॥ रात्रिंदिवमित्यव्ययम् । अहोरात्रंदुष्टभूतविनिग्रहोराज्ञांधर्मइत्यन्वयः ॥९४॥ दुष्टोमंत्रीयस्यसदुष्टमंत्रीनृपोदुर्मंत्रीनभवेत् साधुनृपोयस्यससन्नृपःमंत्रीचसन्नृपोभवेदित्यन्वयः । सन्मंत्रिणाभवेत्संयुक्तइतिशेषः ॥ ९५

राज्ञःसन्मंत्रियुक्तत्वंविशेषतएवद्रष्टव्यंइत्यभिप्रेत्याह ॥ राजैवेति ॥ योजनीयोवृद्धैः ॥ ९६ ॥ राजविद्ययाराजनीतिपरिज्ञानेन अथवा वि
द्यानांराजाराजविद्याब्रह्मविद्यातया । राजविद्याराजगुह्यमितिस्मरणात् । अयमेवार्थोऽस्येतिबृहद्वासिष्ठपद्यात्स्पष्टंप्रतीयते । समस्तगुण
जालानामध्यात्मज्ञानमुत्तमम् । तद्विद्राजाभवेद्राजातद्विन्मंत्रीचमंत्रविदिति ॥ ९७ ॥ ९८ ॥ तत्तर्हिबालकाविति संबोधनम् ॥ ९९ ॥

राजैवादौविवेकेनयोजनीयःसुमंत्रिणा ॥ तेनार्यतामुपायातियथाराजातथाप्रजा ॥९६॥ प्रभुत्वं
समदृष्टित्वंराज्ञःस्याद्राजविद्यया ॥ तामेवयोनजानातिनासौमंत्रीनवानृपः ॥ ९७ ॥ भवंतौत
द्विदौसाधूयदितच्छ्रेयआप्स्यथः ॥ नोचेदनर्थदोषःस्यात्प्रकृतेरद्ययहंयुवाम् ॥९८॥ एकोपायेनम
त्पार्श्वाद्बालकावुत्तरिष्यथः ॥ मत्प्रश्नपंजरंसारंचेद्विदारयथोधिया ॥९९॥ वसिष्ठउवाच ॥ इत्यु
क्त्वाराक्षसीप्रश्नान्सावक्तुमुपचक्रमे ॥ कथ्यतामितिराज्ञोक्तेतानिमान्शृणुराघव ॥१००॥ राक्ष
स्युवाच ॥ एकस्यानेकसंख्यस्यकस्याणोरंबुधेरिव ॥ अंतर्ब्रह्मांडलक्षाणिलीयंतेबुद्बुदाइव ॥ १ ॥
किमाकाशमनाकाशंनकिंचित्किंचिदेवकिम् ॥ गच्छन्नगच्छतिचकःकोऽतिष्ठन्नेवतिष्ठति ॥ २ ॥
कश्चेतनोऽपिपाषाणःकश्चव्योमनिचित्रकृत् ॥ अणौजगंतितिष्ठंतिकस्मिन्बीजइवद्रुमः ॥ ३ ॥

॥ १०० ॥ एकस्येति ॥ अंबुधेरंतर्बुद्बुदाअंबुस्फोटाइव ब्रह्मांडलक्षाणिकस्याणोरंतर्लीयंतेलयंगच्छंति । अणुंविशिनष्टि ॥ एकस्यानेकसंख्यस्ये
ति किम् ॥१॥ किंवस्त्वाकाशंभवत्याकाशंनभवतिच किंवस्तुकिंचिन्नभवतिकिंचिद्भवतिच कोऽतिष्ठन्नेवअसन्नेवतिष्ठतीत्यर्थः ॥ २ ॥ अ
स्यप्रश्नवाक्यस्यायमेवार्थइत्युत्तरमवगम्यते । पाषाणःपाषाणसदृशोऽचेतनइत्यर्थः । एकस्मिन्वृक्षेतादात्म्येनावस्थानेदृष्टांतो बीजइवद्रुमइ

ति । कारणेतावत्कार्यमुत्पत्तेःप्राक्सूक्ष्मरूपेणवर्ततइत्यभ्युपगंतव्यम् । तत्रतदभावेतस्मादेवतदुत्पत्तिरितिनियमादर्शनप्रसंगाद्दृश्यतेचतिले भ्यएवतैलमुत्पद्यतेनसिकताभ्यः । क्षीरादेवसर्पिर्मृदएवघटइत्युत्पत्तिनियमः । तथाचैकस्मिन्नेवबीजेस्वकुक्षिनिक्षिप्तानेकवृक्षोऽस्तीतिबीज एवद्रुमइत्युपपन्नमुक्तम् ॥ ३ ॥ किंचिदपिकस्मात्पृथङ्नभवतीतिभेदिनमादाय पृष्ठाभेदमादायपृच्छति ॥ द्वैतमिति ॥ ४ ॥ विरुद्धार्थत याप्रश्नानामसाधुत्वंव्युदस्यति ॥ मत्प्रश्नानिति ॥ तत्तर्हिजठरमुदरं जठराग्नेरिंधनत्वंझटितिगमिष्यथः । क्षणेनेतिशेषः ॥ ५ ॥ ६ ॥ सर्वेषांप्र श्नानांसामान्येनोत्तरमाह ॥ भवत्येति ॥ भंगोविच्छित्तिर्भागइत्यर्थः ॥ ७ ॥ एकमेवाद्वितीयमितिश्रुतेः । वास्तवमेकत्वम् । इंद्रोमाया

कस्मान्नकिंचिच्चपृथक्कंपादीवमहांभसः ॥ द्वैतमप्यपृथक्कस्माद्वर्ततेचमहांभसः ॥ ४ ॥ यद्येतान्सपदिधि याविचारयंतौमत्प्रश्नान्नखलुविगाहितुंसमर्थौ ॥ तद्भक्ष्यौजठरहुताशनेंधनत्वंनिर्विघ्नंझटितिगमिष्यथः क्षणेन ॥ ५ ॥ वसिष्ठउवाच ॥ महानिशिमहारण्येमहाराक्षसकन्यया ॥ इतिप्रोक्तेमहाप्रश्नेमहामंत्री गिरंददौ॥६॥ मंत्र्युवाच॥भवत्यापरमात्मैषकथितःकमलेक्षणे ॥ अनयैववचोभंग्याब्रह्मविद्बोधयोग्यया ॥७॥ अनाख्यत्वादगम्यत्वान्मनःषष्ठेंद्रियस्थितेः ॥ चिन्मात्रमेवमात्माणुराकाशादपिसूक्ष्मकः ॥ ८॥

भिःपुरुरूपईयते इतिश्रुतेर्मायिकमनेकत्वंचपरमात्मनःसुवचमित्यभिप्रेत्याद्यप्रश्नभागस्योत्तरमाह ॥ अनाख्यत्वादितिश्लोकद्वयेन ॥ अ नाख्यत्वाद्वाचकाख्यानरहितत्वान्मनःषष्ठमिंद्रियंयेषांतेषांश्रोत्रादीनांस्थितेर्मर्यादायाअसांकर्येण पदार्थप्रकाशनसामर्थ्यस्येतियावत् । एवमु क्तोपपत्तितआत्माअणुवत् । अणुर्निरवयवत्वाच्च आकाशवदित्याह ॥ आकाशादिति ॥ शक्तिपर्ययात् स्थितिशक्तेरतिक्रमात् । पर्ययोऽति क्रमस्तस्मिन्नतिपातउपात्ययः इत्यमरः । एतेनाष्टमप्रश्नोऽपिदत्तोत्तरोवेदितव्यः ॥ ८ ॥

॥ ९ ॥ द्वितीयंप्रश्नंप्रत्याह ॥ आकाशमिति ॥ बाह्यशून्यत्वात्स्वबर्हिर्भूतवस्तुशून्यत्वाच्चित्त्वतश्छिद्ररूपत्वादनाकाशंभूताकाशंनभवति । तृ
तीयंप्रश्नंप्रत्याह ॥ अकिंचिदिति ॥ यद्यस्माद्ब्रह्मवस्त्वनिर्देश्यमनभिधेयंतस्मादकिंचित्किंचिन्नभवति ॥ सत्तेति ॥ किंचनपरमार्थसत्ता
मात्रात्मकमितिकिंचिद्भवतितदित्यर्थः ॥ ११० ॥ षष्ठंप्रश्नंप्रत्याह ॥ चेतनोऽसाविति ॥ व्युत्क्रमेणोत्तरंतुराक्षसीबुद्धिपरीक्षार्थम् । असौपर
मात्मायतश्चैतन्यप्रकाशात्माऽतश्चेतनोभवति । वेद्याभावाद्वस्तुतोज्ञेयाभावात्कल्पितवेद्यसंनिधावपिनिर्विकारत्वाच्चशिलोपमोभवति । स
प्तमंप्रश्नंप्रत्याह ॥ आत्मनीति ॥ उन्मेषोऽभिव्यक्तिः ॥११॥ नवमप्रश्नस्योत्तरमाह॥ तद्भावमात्रमिति ॥ इदंसर्वंजगत्तद्भावमात्रंब्रह्मचैतन्य

चिदणोःपरमस्यांतःकोटिब्रह्मांडबुद्बुदाः ॥ उद्भयस्थितिमभ्यस्यलीयंतेशक्तिपर्ययात् ॥ ९ ॥ आ
काशंबाह्यशून्यत्वादनाकाशंचचित्त्वतः ॥ अकिंचिदित्यनिर्देश्यंवस्तुसत्तेतिकिंचन ॥११०॥
चेतनोऽसौप्रकाशात्मावेद्याभावाच्छिलोपमः ॥ आत्मनिव्योमनिस्वच्छेजगदुन्मेषचित्रकृत्
॥११॥ तद्भावमात्रमिदंविश्वमितिनस्यात्ततःपृथक् ॥ जगद्भेदोऽपितद्भानमितिभेदोऽपितन्मयः
॥१२॥सर्वगःसर्वसंबद्धोगत्यभावान्नगच्छति॥ नास्त्यसावाश्रयाभावात्सद्रूपत्वादथास्तिच॥१३॥

मात्रंतद्ब्रह्मचैतन्यव्यतिरेकेणासंभावितसत्त्वमितियावत् । अथवा तद्भावमात्रंतस्याधिष्ठानस्यान्यथाप्रतीतिमात्रंइतिहेतोस्ततस्तस्मात्पृथक्
नस्यात् । दशमप्रश्नस्योत्तरमाह॥ जगदिति॥ तन्मयस्तत्स्वरूपो नततःपृथगस्तीत्यर्थः ॥१२॥ चतुर्थस्योत्तरमाह ॥ सर्वगइति॥ गम्यसंबंधो
हिगमनफलं परमात्माचसर्वेणगम्येनसंबद्धःअतःसर्वगोभवति । गत्यभावाद्विभुत्वेनासंभावितगतित्वाद्वस्तुतोगंतव्याभावाच्चनगच्छतिच ।
पंचमस्योत्तरमाह ॥ नास्त्यसाविति ॥ जगतियोऽस्तिसहिप्रकाश्योभवतिसंश्रयोभवति । असौपरमात्मान्याप्रकाश्यत्वात् निराश्रयत्वान्ना

स्तीत्युच्यते । अथअथापिसद्रूपत्वात्परमार्थसद्रूपत्वादस्तिच ॥ १३ ॥ श्रुत्वेतिसार्धश्लोकःस्पष्टार्थः ॥ १४ ॥ १५ ॥ प्रश्नरीत्यनुसारे णमंत्रिणैवोत्तरस्यदत्तत्वात्तामुपेक्ष्यरीत्यंतरमाश्रित्याह ॥ जाग्रतइति ॥ यस्यब्रह्मणःपरं परमपुरुषार्थसाधनत्वात् । प्रत्ययंज्ञानम् । जाग्रतः विवेकिनःपुरुषस्यप्रत्ययाभावाद्वास्तवद्वैतप्रत्ययाभावाज्जायमानमाहुः । द्वैतंवस्तुसदितिप्रत्ययस्यअद्वैतज्ञानप्रतिबंधकत्वात् । जाग्रतोऽपि विवेकिनस्तद्भावादद्वैतज्ञानस्यजायमानत्वंयुक्तम् । जाग्रतःप्रत्ययाभावइतिक्वचित् तत्रायमर्थः। जाग्रतोविवेकिनोयःप्रत्ययाभावोवास्तवद्वै तप्रत्ययाभावोऽस्तितंयस्यप्रत्ययमाहुःतत्कारणत्वात् । अथवा जाग्रतःसाक्षादीक्षमाणस्यापियस्यद्वैतविषयप्रत्ययाभावोभवति । नहिद्वैतप्र

श्रुत्वैतन्मंत्रिणोवाक्यंराक्षसीवाक्यमाददे ॥ अथोनुपरमार्थोक्तिःपावनीतवमंत्रिणः ॥ १४ ॥ राजाराजीवपत्राक्षइदानीमेषभाषताम् ॥ १५ ॥ राजोवाच ॥ जाग्रतःप्रत्ययाभावाद्यस्याहुःप्र त्ययंपरम् ॥ सर्वसंकल्पसन्यासश्चेतसायत्परिग्रहः ॥ १६ ॥ यत्संकोचविकाशाभ्यांजगत्प्र लयसृष्टयः ॥ निष्ठावेदांतवाक्यानामथवाचामगोचरः ॥ १७ ॥

त्ययरूपेणसाक्षीपरिणमते कूटस्थत्वात् । यस्याहुःप्रत्ययंपरमितिपूर्ववत् । यद्वा यस्यप्रत्ययंस्वरूपचैतन्यंपरंसंसारातीतमाहुः । अत्रयच्छ ब्दस्तच्छब्दाध्याहारेणकथ्यतइतिवक्ष्यमाणेनसंबंधः । एवमुत्तरत्रापियच्छब्दसंबंधोज्ञेयः । चेतसान्तःकरणेनसर्वसंकल्पसंन्यासःसर्वद्वैतप्र त्ययसंगत्यागोनिर्विकल्पसमाधिरित्येतत्यत्परिग्रहोयस्यपरमात्मनःस्वीकारोभवतितद्धेतुत्वात् ॥ १६ ॥ यत्संकोचविकाशाभ्यां यस्यसं कल्पविकल्पलयोदयाभ्यामित्यर्थः । वेदांतवाक्यानांनिष्ठालक्षणावृत्त्यापर्यवसानभूमिर्भवति । अथअथापि शब्दप्रवृत्तिहेतूनांजात्यादीनां अभावाद्वाचामगोचरश्चभवति । अथवावाक्यजन्यवृत्तिव्याप्यत्वात्तद्गोचरत्वंतज्जन्यफलाव्यापकत्वात्तदगोचरत्वम् ॥ १७ ॥

॥ कोटिद्वयेति ॥ द्वैताद्वैतकोट्यंतरालस्थं ब्रह्मद्वैताद्वैतकोटिभ्यांपरस्परापेक्षसिद्धत्वेनकल्पिताभ्यांविलक्षणं अधिष्ठानतयातयोर्मध्यस्थंभवति अथवा सदसत्कोट्यंतरालस्थम् । नसत्तन्नासदुच्यते । इतिभगवद्वचनात् । कार्यकारणकोट्यंतरालस्थंवाद्रष्टृदृश्यकोटयन्तरालस्थंवा बिंबप्रतिबिंबकोट्यंतरालस्थंवा यद्वा बंधमुक्तिकोट्यंतरालस्थंवा नियम्यनियामककोट्यंतरालस्थंवा सर्वेषामप्येतेषांकल्पितत्वाद्ब्रह्मणस्तेभ्योविलक्षणतयातदंतरालस्थत्वमुपपन्नम् । अथकोटिद्वयीमयं अथापिमाययोक्तकोटिद्वयीस्वरूपंभवति जगद्यस्याधिष्ठानस्यविवर्तभूत

कोटिद्वयांतरालस्थमथकोटिद्वयीमयम् ॥ यस्यचित्तमयीलीलाजगदेतच्चराचरम् ॥ १८ ॥ यस्यविश्वात्मकत्वेऽपिखंडयतेनैकपिंडता ॥ सन्मात्रंतत्त्वयाभद्रेकथ्यतेब्रह्मशाश्वतम् ॥ १९ ॥ वसिष्ठउवाच ॥ इतिराजमुखाच्छ्रुत्वाकर्कटीवनमर्कटी ॥ अवबुद्धपदातस्थौजहौमत्सरचापलम् ॥ १२० ॥ अंतःशीलतामेत्यसाविश्रांतिमतापताम् ॥ प्राप्ताप्रावृण्मयूरीवसज्योत्स्नेवकुमुद्वती ॥ २१ ॥ राक्षस्युवाच ॥ अहोबतपवित्रेयंभवतोर्भातिशेमुषी ॥ अनस्तमितसारेणप्रबोधार्केणभासिता ॥ २२ ॥

चित्तमयीलीलाभवति ॥ १८ ॥ यस्यविश्वात्मकत्वेऽपिसर्वात्मकत्वेऽप्येकपिंडताएकस्वरूपतानखंडयते । मायिकेनानेकरससर्वतादात्म्येनवास्तवत्वमेकरसत्वंनविहन्यतइत्यर्थः । कथ्यते त्वयेत्यर्थः ॥१९॥ ब्रह्मात्मतावगतिः प्रत्यक्षफलेतिदर्शयितुं इतिराजमुखादित्यादि श्लोकद्वयंस्पष्टार्थम् ॥१२०॥ २१ ॥ उत्पन्नविज्ञानस्यकर्मलोपाभावेऽप्यादेहपातंसन्मार्गएवरुचिर्भवतीतिदर्शयितुं अहोबतेत्यादिनाऽऽख्यानसमाप्तिपर्यंतोग्रंथसंदर्भः सोऽपिस्पष्टार्थः । तत्रकानिचित्पदानिव्याक्रियंते बतेतिसंतोषे शेमुषीबुद्धिः । बुद्धिर्मनीषाधिषणाधीःप्रज्ञाशेमुषीमतिरि

त्यमरः । अनस्तमितसारेणानष्टसामर्थ्येन ॥ २२ ॥ २३ ॥ जांगलंमरुभूमिवनम् ॥ २४ ॥ २५ ॥ रक्षःकुलमेवकाननंवनंतस्यमंजरी हेर क्षःकुलकाननमंजरि भवत्याकस्यचिदपिप्राणाभूयोनहिंसनीयाइतियत्तत्त्वांप्रार्थयइतिपूर्वेणसंबंधः ॥ २६ ॥ नविद्यतेवितथमनृतंयस्मिन्क

विवेकिनोजगत्पूज्याःसेव्यामन्येभवादृशाः ॥ महतामेवसंसर्गात्पुनर्दुःखंनबाधते ॥ २३ ॥ को हिदीपशिखाहस्तस्तमसापरिभूयते ॥ मयैतौजांगलंप्राप्तौभवंतौभूमिभास्करौ ॥ २४ ॥ पूज नीयावतःशीघ्रमीहितंकथ्यतांशुभौ ॥ २५ ॥ राजोवाच ॥ प्रार्थयेत्वामहंरक्षःकुलकाननमंजरि ॥ भूयोभवत्यायत्प्राणाहिंसनीयानकस्यचित् ॥ २६ ॥ प्रीतार्थाराक्षसीप्राहकर्कटीवनमर्कटी ॥ बाढमेवंकरोम्यद्यप्रभृत्यवितथंप्रभो ॥ २७ ॥ सर्वमेवनकिंचिद्धिहिंसनीयंमयाधुना ॥ २८ ॥ राजो वाच ॥ यद्येवंफुल्लपद्माक्षिपरदेहैकभोजने ॥ किंस्याच्छरीरभृत्यैतेस्थितायामत्समीहिते ॥ २९ ॥ राक्षस्युवाच ॥ कालेनबहुनाराजन्प्रबुद्धायाःसमाधितः ॥ जाताभोजनवांछामेनतांतुगणयाम्य हम् ॥ १३० ॥ इदानींशिखरंगत्वाप्राक्तनध्याननिश्चला ॥ यावदिच्छंसुखेनासेसजीवाशालभंजि का ॥ ३१ ॥ आमृतिंधारणांबध्वाधारयामिशरीरकम् ॥ यथेष्टमतिकालेनत्यजामीतिमतिर्मम ॥ ३२ ॥ आशरीरपरित्यागमिदानींनमयानृप ॥ हिंसनीयाःपरप्राणाःपश्यंत्यासर्वगंशिवम् ॥ ३३ ॥

र्मणितदवितथम् । वितथंत्वनृतंवचइत्यमरः ॥ २७ ॥ २८ ॥ फुल्लंविकाशि भृत्यैभरणाय मत्समीहितेमदिष्टे ॥ २९ ॥ १३० ॥ आसेउपवे शनंकुर्वे । शालभंजिकापुत्तलिकातत्सदृशीत्यर्थः ॥ ३१ ॥ आमृतिमित्यार्षम् । आमृतिंमृतिपर्यंतम् । आमृतेरितिवापाठः ॥ ३२ ॥ ३३ ॥

॥ ३४ ॥ सौहार्दंसुहृद्भावं वितथीकर्तुंअनृतीकर्तुंव्यर्थीकर्तुमित्यर्थः ॥ ३५ ॥३६ ॥ संतर्पयसिसंप्रीणयसि ॥३७॥३८॥ हेमस्रग्भिःहेममा

इतिसंजातसौहार्दातौविसृज्यनिशाचरी ॥ यदागंतुंप्रवृत्तासौतदाराजाऽब्रवीद्वचः ॥ ३४ ॥ नास्मत्प्रणयसौहार्दंवितथीकर्तुमर्हसि ॥ सौहार्दंसुजनानांहिदर्शनादेववर्धते ॥ ३५ ॥ लघुसौभाग्यसंयुक्तंकृत्वाकारंमनोहरम् ॥ आगच्छास्मद्गृहंभद्रेतत्रतिष्ठयथासुखम् ॥ ३६ ॥ राक्षस्युवाच ॥ मुग्धस्त्रीरूपधारिण्यैदातुंशक्तोऽसिभोजनम् ॥ संतर्पयसिमांकेनराक्षसीजातिधारिणीम् ॥ ३७ ॥ रक्षोन्नमेवमेतुष्ट्यैनसामान्यजनाशनम् ॥ पूर्वसिद्धस्वभावोऽयमादेहंनोनिवर्तते ॥ ३८ ॥ राजोवाच ॥ हेमस्रग्दामवलितादिनानिकतिचिन्मम ॥ गृहेस्त्रीरूपिणीतिष्ठयावदिच्छाम्यनिन्दिते ॥ ३९ ॥ ततोदुष्कृतिनश्चौरान्वध्यान्शतसहस्रशः ॥ मंडलेभ्यःसमाहृत्यददेतुभ्यंसुभोजनम् ॥ १४० ॥ कांतारूपंपरित्यज्यगृहीत्वातानशेषतः ॥ नयस्वहिमवच्छृंगंतत्रभुंक्ष्वयथासुखम् ॥ ४१ ॥ महाशनानामेकांतेभोजनंहिसुखायते ॥ तृप्तिंनिद्रांमनाक्कृत्वाभवभूयःसमाधिभाक् ॥ ४२ ॥ समाधिविरताभूयोऽप्यागत्यपुनरन्यदा ॥ नयस्वान्यान्वध्यतरान्हिंसानैषांहिधर्मतः ॥ ४३ ॥ स्वधर्मेणचहिंसैवमहाकरुणयासमा ॥ त्वंसमेष्यसिवावश्यंमांसमाधिविरागिणी ॥ असतामपिसंरूढंसौहार्दंननिवर्तते ॥ ४४ ॥

लाभिःदामभिर्हेमस्रत्रैश्चवलितावेष्टिताहेमस्रग्दामवलिता ॥ ३९ ॥ १४० ॥ ४१ ॥ मनागीषत् ॥ ४२ ॥ धर्मतःक्रियमाणेतिशेषः । यद्वाधर्मतोधर्मशास्त्रतः ॥ ४३ ॥ ४४ ॥

॥ ४५॥४६ ॥ रजनींरात्रिं रजनींक्षपयामासुरितिसंबंधः। मिथोऽन्योन्यम् ॥ ४७॥ पुरंध्रीकुटुंबिनी ॥ ४८॥ ४९॥ १५०॥ ५१ ॥ ५२॥
॥१५३॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौवासिष्ठचंद्रिकायांमोक्षोपायेसूच्युपाख्यानंनामस





राक्षस्युवाच ॥ युक्तमुक्तंत्वयाराजन्करोम्येवमहंसखे ॥ सौहार्देनप्रवृत्तस्यकोवाक्यंनाभिनंदति ॥ ४५॥ वसिष्ठउवाच ॥ इत्युक्त्वाराक्षसीतत्रसंपन्नासाविलासिनी ॥ राजन्नागच्छगच्छामइत्युक्त्वानृपमंत्रिणौ॥ ४६ ॥ आश्रमंस्वंप्रवृत्तौतौरात्रावनुससारसा ॥ अथतेपार्थिवगृहंप्राप्यतांरजनींमिथः ॥ ४७ ॥ कथयैवगृहेरम्येक्षपयामासुराद्दताः ॥ प्रभातेंऽतःपुरेतस्थौपुरंध्रीजनलीलया ॥ ४८॥ राक्षसीमंत्रिराजानौस्वव्यापारौबभूवतुः ॥ ततोदिवसषट्केनसंचितानिमहीभृता ॥४९॥ नृपांतरपुरेभ्योऽपिस्वमंडलगणात्तदा ॥ त्रीणिवध्यसहस्राणितानितस्यैतदाददौ ॥ १५० ॥ साबभूवनिशाकालेसैवोग्राकृष्णराक्षसी ॥ तानिवध्यसहस्राणिजग्राहभुजमंडले ॥ ५१ ॥ ययौराजानमापृच्छ्यतदैवहिमवच्छिरः ॥ ततःप्रभृतिसाद्यापिकिरातजनमंडले ॥ ५२ ॥ वध्यानागत्यगृह्णातिसमाधेर्व्युत्थितासती ॥ १५३ ॥ इतिश्रीमोक्षोपायेउत्पत्तिप्रकरणेसूच्युपाख्यानंनामसप्तमःसर्गः ॥ ७ ॥ वसिष्ठउवाच ॥ एतत्तेसर्वमाख्यातंसूचीवृत्तांतकीर्तनात् ॥ आत्मैवास्तिपरंसत्यंनान्याःसंसारदृष्टयः ॥ १ ॥



प्तमःसर्गः ॥ ७ ॥ प्रवृत्तानुवादपूर्वकंजगतोमनोविलसितत्वप्रपंचनायाख्यानांतरमवतारयति ॥ एतत्तेसर्वमाख्यातमित्यादिना ॥ किंब्रह्म

णोऽन्यआत्मैवास्तिनेत्याह ॥ परंसत्यमिति ॥ सत्यंब्रह्म । संसारदृष्टयःसंसारभ्रांतयः ॥ १ ॥ कुतःसंसारदृष्टयोनसंतीत्यतआह ॥ सर्वंही ति ॥ हिशब्दोहेतौ । इदंमनएवसृष्टिषुकर्तव्यासुइत्थमेवंप्रकारेणसर्वंसर्वंजगदात्मकंसत्स्फुरतिहि । अत्रजगतोमनोविवर्तत्वेऐंदवाख्यानं इंदुनामकब्राह्मणापत्यानांऐंदवानामाख्यानम् ॥२॥ यतऐंदवाख्यानाच्छ्रुताज्जगच्चितिशक्तिसमुल्लासंनिश्चिनोषि चितेःपरमात्मनःशक्तिर्मा यातस्यामनोभावमापन्नायाःसमुल्लासंविजृंभणं विवर्तइत्यर्थः । अथवा चितौज्ञानेशक्तिर्यस्यतच्चितिशक्तीतिमनउच्यते ॥३॥ आख्यानता

सर्वंहिमनएवेदमित्थंस्फुरतिसृष्टिषु ॥ अत्रेदमैंदवाख्यानंशृणुश्रवणभूषणम् ॥ २ ॥ रामते कथयिष्यामितदाख्यानमनिंदितम् ॥ चितिशक्तिसमुल्लासंनिश्चिनोषिजगद्यतः ॥ ३ ॥ चित्त बालोजगद्यक्षंमिथ्यापश्यत्यबोधितः ॥ बोधितोऽसौपरंरूपंस्वंपश्यतिनिरामयम् ॥ ४ ॥ चि त्तमेवहिसंसारोरागादिक्लेशदूषितम् ॥ तदेवतैर्विनिर्मुक्तंभवांतइतिकथ्यते ॥ ५ ॥ कदाचिदखि लंसर्गंसंहृत्यदिवसक्षये ॥ एकाग्रोभगवान्वेधाःसुप्तस्तामनयन्निशाम् ॥ ६ ॥ निशांतेसंप्रबुद्धा त्माकृत्वासंध्यांयथाविधि ॥ प्रजाःस्रष्टुंदृशौस्फारेव्योम्निनियोजितवानजः ॥ ७ ॥

त्पर्यंश्लोकद्वयेनाह ॥ चित्तबालइत्यादिना ॥ चित्तमेवबालःचित्तबालः । जगदेवयक्षोजगद्यक्षस्तम् । यथाबालोऽबोधितःसन्आत्मच्छा यांमिथ्यायक्षंपश्यतितथाचिदाभासविशिष्टंचित्तंअबोधितंसन्मिथ्याजगत्पश्यति बोधितंतुनिरुपद्रवमधिष्ठानंसमीक्षतइत्यर्थः ॥ ४ ॥ भवां तःसंसारांतइतितत्साधनत्वात्कथ्यते ॥ ५ ॥ कदाचिदखिलंसर्गमित्यादिराख्यानसमाप्तिपर्यंतोग्रंथसंदर्भःस्पष्टार्थः । तत्रकानिचित्पदानि विविच्यंते । नैमित्तिकप्रलयेमहर्लोकादेरवस्थानादखिलशब्दःकतिपयविषयः ॥ ६ ॥ स्फारेमहती ॥ ७ ॥

महानारंभोऽव्यापारोयेषुतेतथोक्ताः । सृज्यंतइतिसर्गाःप्रपंचास्तान्स्थितौनिरर्गलान्निर्बाधान्स्थितिनिरर्गलान् । अबाधंतुनिरर्गलमित्यमरः



अथासौदृष्टवांस्तत्रमनसाविततेंऽबरे ॥ पृथक्स्थितान्महारंभान्सर्गान्स्थितिनिरर्गलान् ॥ ८ ॥
तानालोक्यविशुद्धेनपरेणस्वेनतेजसा ॥ भृशंविस्मयमापन्नःकिमेतत्कथमित्युत ॥ ९ ॥ अथा
लोक्यचिरंकालंमनसैवतदांबरे ॥ सूर्यंतस्माज्जगज्जालादेकमानीयपृष्टवान् ॥ १० ॥ कस्त्वंक
थमिदंजातंजगज्जालंमहाद्युते ॥ यदिजानासिभगवंस्तदेतत्कथयानघ ॥ ११ ॥ इत्युक्तोवेधसा
भानुर्भक्तिप्रह्वेनचेतसा ॥ नमस्कृत्वाभ्युवाचेदमनिंद्यपदयागिरा ॥ १२ ॥ अस्यदृश्यप्रपंच
स्यनित्यंकारणतामसि ॥ गतस्तस्मान्नजानीषेकिंमामीश्वरपृच्छसि ॥ १३ ॥ अथमद्वाक्यसं
दर्भैर्लीलाचेत्तवसर्वग ॥ अचिंतितांमदुत्पत्तिंतच्छृणुत्वंवदाम्यहम् ॥ १४ ॥ तलेकैलासशैल
स्यजंबुद्वीपैककोणके ॥ सुवर्णतटनाम्नाथत्वत्पुत्रैर्जनितप्रभैः ॥ १५ ॥ मंडलंकल्पितंश्रीमदन
ल्पसुखसुंदरम् ॥ तत्राभूदतिधर्मात्माब्राह्मणोब्रह्मवित्तमः ॥ १६ ॥ इंदुनामातिशांतात्माक
श्यपस्यकुलोद्भवः ॥ तस्यप्राणसमाभार्याकाचित्तस्यांमहात्मनः ॥ १७ ॥ नबभूवात्मजस्तस्य
मरुभूमौतरुर्यथा ॥ तौततोदंपतीखिन्नौपुत्रार्थंतपसेगिरेः ॥ १८ ॥



॥ ८ ॥ अथार्थेउतशब्दः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ मदुत्पत्तिमित्युपलक्षणंजगज्जालोत्पत्तेरपि ॥ १४ ॥ त्वत्पुत्रैर्मरीच्या
दिभिः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

॥ १९ ॥ तरुवत्स्थितिर्ययोस्तौतरुस्थिती जलाहारत्वंतरौप्रसिद्धमेव ॥ २० ॥ २१ ॥ भव्यायोग्याः । येनदशपुत्रभवनेनशोकोमांभूयोन बाधतेतदस्त्वित्यध्याहारः । यद्वा येनेति एकत्वमविवक्षितं यैःपुत्रैः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ खेदिनोदुःखिन उद्विग्नाउद्वेगयुक्ताः वि

कैलासस्यसमारूढौशुचिव्रतपरायणौ ॥ भूतैरनावृतेशून्येतस्मिन्कैलासकुंजके ॥ १९ ॥ तेपतुस्तौत पोघोरंजलाहारौतरुस्थिती ॥ ततस्तुष्टोऽभवद्देवस्तयोःशशिकलाधरः ॥ २० ॥ आजगामाथतंदेशंय त्रतौविप्रदंपती ॥ वरंविप्रगृहाणाशुतुष्टोऽस्मितमुवाचह ॥ २१ ॥ विप्रउवाच ॥ भगवन्देवदेवेशदशपु त्रामहाधियः ॥ भव्याभवंतुमेभूयःशोकोयेननबाधते ॥ २२ ॥ अथैवमस्त्वितिप्रोच्यजगामांतर्धिमीश्व रः ॥ ततस्तौदंपतीतुष्टौवरंलब्ध्वागृहंगतौ ॥ २३ ॥ ततःकालेनसुषुवेदशपुत्राननिंदितान् ॥ ब्राह्मणीदश तेबालाःक्रमेणप्रौढिमाययुः ॥ २४ ॥ अथकालेनमहतातेषांतौपितरौतदा ॥ संजग्मतुस्तनुंत्यक्त्वास्वांग तिंगतिकोविदौ ॥ मातापितृभ्यांरहितास्ततस्तेब्राह्मणादश ॥ २५ ॥ ययुःकैलासशिखरंगृहंसंत्यज्यखेदि नः ॥ तत्रसंचिंतयामासुरुद्विग्नास्तेविबांधवाः ॥ २६ ॥ किंस्यादिहपरंश्रेयःकिमिहस्याददुःखदम् ॥ कियदे तज्जनैश्वर्यंसामंतोहिमहेश्वरः ॥ २७ ॥ सामंतसंपत्किंनामराजानोहिमहेश्वराः ॥ कानामसंपद्भूपानांसम्राडि हमहेश्वरः ॥ २८ ॥ किंनामसंपत्साम्राज्यमिंद्रस्तेषांमहेश्वरः ॥ किंनामतन्महेंद्रत्वंयन्मुहूर्तंप्रजापतेः ॥ २९ ॥

बांधवाविगतबांधवाः ॥ २६ ॥ २७ ॥ राजानोमंडलेश्वराः । यआज्ञयाराज्ञःशास्तिससम्राडित्युच्यते । शास्तियश्चाज्ञयाराज्ञःससम्राडित्यम रः ॥ २८ ॥ साम्राज्यंकिंनामसंपदितिसंबंधः । यन्महेंद्रत्वंप्रजापतेर्मुहूर्तंवर्तते । प्रजापतेर्हिदिनेचतुर्दशइंद्राभवन्ति । तत्रैकैकोमुहूर्तमा

त्रंत्रैलोक्यंशास्ति ॥ २९ ॥ ३० ॥ भ्रातरइतिसंबोधनम् । मेमह्यम् ॥ ३१ ॥ तातेतिपितृसमत्वाज्ज्येष्ठःसंबोध्यते । सर्वदुःखापमार्जनंसर्वदुःखशमकं शाधिअनुशासनंकुरु ॥ ३२ ॥ भास्वान्दीप्तिमान् तेजसाप्रभावेण । तेजःप्रभावेदीप्तौचबलेशुक्रेऽप्यतस्त्रिष्वित्यमरः ॥ ३३ ॥ बाढ

विनश्यतिचयत्कल्पेकिंतत्स्यादिहशोभनम् ॥ ३० ॥ ज्येष्ठउवाच ॥ ऐश्वर्याणांहिसर्वेषामाकल्पांताविनाशियत् ॥ रोचतेभ्रातरस्तन्मेब्रह्मत्वमिहनेतरत् ॥ ३१ ॥ इतरेऊचुः ॥ युक्तमुक्तंत्वयातातसर्वदुःखापमार्जनम् ॥ शाधितत्त्वंगतिर्नोऽद्यविरिंचित्वमवाप्नुमः ॥ ३२ ॥ ज्येष्ठउवाच ॥ पद्मासनगतोभास्वान्ब्रह्माहमितितेजसा ॥ सृजामिसंहरामीतिध्यानमस्तुचिरायवः ॥ ३३ ॥ अग्रजेनेतिकथिताबाढंकृत्वातउत्तमाः ॥ ध्यानाधीनधियस्तत्रलिपिकर्मार्पितोपमाः ॥ ३४ ॥ अंतःस्थेनैवमनसाचिंतयामासुरादृताः ॥ ब्रह्माहंजगतःस्रष्टाकर्ताभोक्तामहेश्वरः ॥ ३५ ॥ लोकपालपुरैःसार्धंभुवनानिचतुर्दश ॥ निर्मितानिमयैतानितेषामंतरहंस्थितः ॥ ३६ ॥ अथतेब्राह्मणाएवंबद्धब्रह्मात्मभावनाः ॥ देहान्विसस्मरुःपूर्वान्पूर्वभावनयार्पितान् ॥ ३७ ॥ अथतेदेहकाःसर्वेपवनैरातपेनच ॥ कालेनशोषमभ्येत्यगलिताःशीर्णपर्णवत् ॥ ३८ ॥ सतेषांदशधासर्गप्रतिभासोऽयमुत्थितः ॥ भावनापरिपाकेनदशतेब्रह्मतांगताः ॥ ३९ ॥



मित्यव्ययंअभ्युपगमे । लिपिकर्मचित्रकर्म ॥ ३४ ॥ ३५ ॥ ३६ ॥ विसस्मरुर्विस्मर्यमाणांश्चक्रुः । अर्पितान्विषयीकृतानितियावत् । अथवा अर्पितान्समर्पितान्दत्तानित्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥

स्वकृत्यमाह । अहर्निशाकरः भास्करोहिमेरुपर्वतेनाव्यवहितोऽहःकरोति तद्व्यवहितस्तुनिशांकरोति । उक्तंचबृहद्वासिष्ठे । अर्कःकुर्वन्नहोरा त्रेदर्शयत्याकृतिंयथा । चितिः सदसतीकुर्वन्दर्शयत्याकृतिंतथा इति ॥ ४० ॥ ४१ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपाद शिष्यश्रीमदात्मसुखकृतौवासिष्ठचंद्रिकायांउत्पत्तिप्रकरणेऐंदवोपाख्यानंनामाष्टमःसर्गः ॥ ८ ॥ अतीतेनाख्यानेनतात्पर्यतःप्रतिपादितम र्थंदर्शयति ॥ मनोहीत्यादिश्लोकद्वयेन ॥ मनःकृतंमनसाकृतंसम्यक्कृतंमन्ये मनःकृतमेवसार्थकंजानइत्यर्थः॥ १ ॥ २ ॥ ननुशरीरकृतकर्मणांफ

तएतेदशसंस्कारामनोव्योमनिसंस्थिताः ॥ एषामन्यतमस्याहंभास्करोऽहर्निशाकरः ॥ ४० ॥ इत्युक्त्वावेधसंभानुर्जगामनिजमंदिरम् ॥ विरिंचिरपिदेवेशःस्वव्यापारपरोऽभवत् ॥४१॥ इति श्रीयोगवासिष्ठेमोक्षोपायउत्पत्तिप्रकरणेऐंदवोपाख्यानंनामाष्टमःसर्गः ॥ ८॥ वसिष्ठउवाच ॥ मनोहिजगतांकर्तृमनोहिपुरुषःपरः ॥ मनःकृतंकृतंलोकेनशरीरकृतंकृतम् ॥ १ ॥ सामान्याब्रा ह्मणाभूत्वामनोभावनयाकिल ॥ ऐंदवाब्रह्मतांयातामनसःपश्यशक्तिताम् ॥ २ ॥ मनसाभा व्यमानोहिदेहितांयातिदेहकः ॥ देहभावनयामुक्तोदेहधर्मैर्नबाध्यते ॥ ३ ॥ नांतर्मुखतयायोगी देहेवेत्तिप्रियाप्रिये ॥ इंद्रस्याहल्ययासार्धमुदंतोऽत्रनिदर्शनम् ॥ ४ ॥

लवत्त्वस्यप्रत्यक्षादिसिद्धत्वाच्छरीरकृतंसार्थकंनभवतीत्युक्तमनुपपन्नमित्याशंक्याह ॥ मनसेति ॥ हियस्माद्देहकोमनसाभाव्यमानःसन्दे हितांयाति देहोचितकार्यकारीभवतीति । अन्वयमुक्त्वाव्यतिरेकमाह ॥ देहभावनयेति ॥ देहभावनयामुक्तःपुरुषोदेहधर्मैःशीतोष्णमानाव मानादिभिर्नबाध्यतइत्यर्थः ॥ ३ ॥ कुत्रैतदुपलभ्यतइत्यतआह ॥ नांतर्मुखतयेति ॥ अयमर्थः । मनोभावनायांसत्यांशरीरेफलपर्यवसा

यिभोजनादिकार्यदर्शनादसत्यांतस्यांनिर्विकल्पकसमाध्यवस्थायांतददर्शनात्स्वप्नावस्थायांमनोमात्रात्मकशरीरकृतस्यतृप्त्यादिफलपर्यव
सायिनोभोजनादेर्दर्शनाच्चप्राप्ताप्राप्तविवेकेनशरीरकृततयोपलभ्यमानंफलवत्कार्यंस्वप्नशरीरकृतकार्यवत् मनःकृतमेवेति । मनएवप्रियाप्रि
यकृन्नदेहइत्येतमर्थंतन्निग्रहेप्रयत्नातिशयविधानायाख्यानांतरेणस्फुटीकर्तुमाह॥इंद्रस्येति॥इतऊर्ध्वमाख्यानसमाप्तिपर्यंतोग्रंथसंदर्भःस्पष्टार्थः।



श्रीरामउवाच ॥ काहल्याभगवन्निंद्रस्तवकोवात्रसंमतः ॥ ययोरुदंतश्रवणेपावनीदृष्टिरेतिमा
म् ॥ ५ ॥ वसिष्ठउवाच ॥ श्रूयतेहिपुरारामममागधेषुमहीपतिः ॥ इंद्रद्युम्नइतिख्यातइंद्रद्युम्नइवापरः
॥ ६ ॥ तस्येंदुबिंबप्रतिमाभार्याकमललोचना ॥ अहल्यानामतत्रासीच्छशांकस्येवरोहिणी ॥ ७ ॥
तस्मिन्नेवपुरेषिङ्गःषिङ्गप्रकरशेखरः ॥ इंद्रनामापरःकश्चिन्नागरीणांप्रियोऽवसत् ॥ ८ ॥ साहल्या
हल्ययासार्धमिंद्रस्ययदभूत्पुरा ॥ तदाकर्ण्येतिहासेभ्यस्तस्मिन्निंद्रेऽन्वरज्यत ॥ ९ ॥ तयो
र्घनतरस्नेहानिरावरणचेष्टयोः ॥ सदुर्विनयवृत्तांतोराजांतिकमुपाययौ ॥ १० ॥ एवमन्योन्य
मासक्तंभावमालोक्यभूपतिः ॥ चकारबहुभिर्भेदैःसतयोरनुशासनम् ॥ ११ ॥ तावुभावपिसंत्य
क्तौदुर्मतीसलिलाशये ॥ तुष्टौजहसतुस्तत्रनखेदमुपजग्मतुः ॥ १२ ॥

तत्रकानिचित्पदानिविविच्यंते । उदंतोवृत्तांतः॥४॥५॥इंद्रद्युम्नइतीति ॥ सर्वेपूर्वमभूद्राजापांड्योद्रविडसत्तमः॥ इंद्रद्युम्नइतिख्यातोविष्णुव्रत
परायणइतिपुराणप्रसिद्धएकोऽस्ति इंद्रद्युम्नः । अयंतुअपरइंद्रद्युम्नइवस्थितः ॥६॥७॥ षिङ्गप्रकरशेखरःविटसमूहोत्तंसः॥ ८ ॥ अन्वरज्यतअ
नुरागमकुरुत ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

भेदैः प्रकारैः ग्रथितौबद्धौ ॥ १३ ॥ असभुवीतिधातोर्लण्मध्यमपुरुषद्विवचनंस्थइति । दुर्मतीइति संबोधनम् ॥ १४ ॥ आशयोऽत्रचित्तम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ शरीरकलनानिशरीरकल्पनानि । सर्ववनखंडलतारसेषु सर्वेचतेवनखंडलतानांवन

ग्रथितौगजपादेषुनतौश्रममुपागतौ ॥ कशाभिस्ताड्यमानांगौनापतुःकामपिव्यथाम् ॥ १३ ॥ ज्वालानिर्दह्यमानौतौस्थितौहिमाशिलास्विव ॥ अपृच्छत्तौततोराजाखिन्नौवांकिंनदुर्मती ॥ १४ ॥ अथतौधरणीपालमूचतुर्मुदिताशयौ ॥ संस्मृत्यावामिहान्योन्यंमुखकांतिमनिंदिताम् ॥ १५ ॥ आत्मानंनविजानीवोजातावन्योन्यतन्मयौ ॥ मुह्यावोनमहीपालस्वांगैरपिविकर्तितैः ॥ १६ ॥ इष्टेऽर्थेचिरमाविष्टंक्वापिधीरंमनःकृतम् ॥ भावंभावाःशरीरोत्थान्नृपशक्तानबाधितुम् ॥ १७ ॥ आवांतन्नविजानीवोजातावन्योन्यतन्मयौ ॥ भावितंतीव्रवेगेनमनसायन्महीपते ॥ १८ ॥ तदेवपश्यत्यखिलंनशरीरविचेष्टितम् ॥ नकाश्चनक्रियाराजन्मुनिशापादिकाअपि ॥ १९ ॥ तीव्रवेगेनसंपन्नंशक्ताश्चालयितुंमनः ॥ एककार्येनिविष्टंहिमनोधीरस्यभूपते ॥ २० ॥ नचाल्यतेमेरुरिवप्रतिघातशतैरपि ॥ २१ ॥ राजन्शरीरकलनानिवृथोत्थितानिचेतोहिकारणममीषुशरीरकेषु ॥ वारीवसर्ववनखंडलतारसेषुमुख्यंशरीरमिहविद्धिमनोमहात्मन् ॥ २२ ॥ देहेऽक्षतेविविधदेहगणंकरोतिस्वप्नावनाविवनवंनवमाशुचेतः ॥ चित्तेऽक्षतेतुनकरोतिहिकिंचिदेवदेहस्ततःसमनुपालयचित्तरत्नम् ॥ २३ ॥

भागलतानांरसाश्चतेषुवारीवामीषुस्थूलशरीरकेषुचेतउपादानकारणंहि ॥ २२ ॥ ननुशरीरकेषुचेतःकारणमितिकुतः वैपरीत्यंकिंनस्यादि

त्यतआह ॥ देहेऽक्षतइति ॥ स्वभावनौस्वभ्रभूमौ ॥ २३ ॥ २४ ॥ परमार्थरसस्पृशःपरमार्थसारविषयाः ॥ २५ ॥ निर्वासयामिनिष्का सयामि निरवासयत्निष्कासितवान् ॥ २६ ॥ इतिश्रीवासिष्ठचंद्रिकायांउत्पत्तिप्रकरणइंद्रोपाख्यानंनामनवमःसर्गः ॥ ९ ॥ अतीते नाख्यानेनविस्तरेणप्रतिपादितमर्थंसंक्षिप्याह ॥ एतत्तेकथितमित्यादिना ॥ १ ॥ २ ॥ सम्यग्विदितेहिसंसाररोगनिदानेमनसितच्चिकि

वसिष्ठउवाच ॥ ताभ्यांतथैवमुक्तोऽसौराजाराजीवलोचनः ॥ मुनिंभरतनामानंपार्श्वस्थंसमुवाचह ॥ २४ ॥ भगवन्सर्वधर्मज्ञपरमार्थरसस्पृशः ॥ रमयंत्येवचेतांसिगिरःकामांधयोरपि ॥ २५ ॥ शासितौचयथाशास्त्रमेतौनिर्वासयाम्यहम् ॥ इत्युक्त्वाराजशार्दूलस्तावुभौनिरवासयत् ॥ २६ ॥ इतिश्रीमोक्षोपायेउत्पत्तिप्रकरणइंद्रोपाख्यानंनामनवमःसर्गः ॥ ९ ॥ वसिष्ठउवाच ॥ एतत्तेकथितंराममयाख्यानकलीलया ॥ सर्वएवजगत्यस्मिन्द्विशरीराःशरीरिणः ॥ १ ॥ एकंमनःशरीरंतुक्षिप्रकारिचलंसदा ॥ अकिंचित्करमन्यच्चशरीरंमांसनिर्मितम् ॥ २ ॥ श्रीरामउवाच ॥ विस्तरेणममब्रह्मन्जडस्यास्यनिराकृतेः ॥ रूपमारूढसंकल्पंमनसोवक्तुमर्हसि ॥ ३ ॥ वसिष्ठउवाच ॥ अनंतस्यात्मतत्त्वस्यसर्वशक्तेर्महात्मनः ॥ संकल्पशक्तिखचितंयद्रूपंतन्मनोविदुः ॥ ४ ॥

त्सासुकरेतिमन्वानोरामःपृच्छति ॥ विस्तरेणेति ॥ निराकृतेर्वस्तुतोनिःस्वरूपस्य तत्रहेतुः ॥ जडस्येति ॥ जडत्वंसाधयति ॥ अस्येति ॥ दृश्यस्येत्यर्थः । आरूढःसंकल्पोयेनतदारूढसंकल्पं संकल्पप्रधानमित्यर्थः । यद्वा आरूढःसंकल्पोयस्यतत्तथा ॥ ३ ॥ अनिर्वाच्यंमनःस्व रूपंदर्शयंस्तन्मनआसुक्षेरामृतेःतच्चिंतनादिलक्षणंमोक्षोपायप्रवणंकुर्यादित्याह ॥ अनंतस्येत्यादिश्लोकत्रयेण ॥ सर्वशक्तेःसर्वकारणभूतामा

याशक्तिर्यस्य। यद्वा सर्वाःशक्तयःसर्वपदार्थनिष्ठतयाप्रतीयमानायस्मिंस्तत्तथोक्तम्। तस्यसंकल्पशक्तिसंश्लिष्टंयत्कल्पितंरूपंतन्मनोविदुः॥४॥ भावःपदार्थः। यद्वाभावशब्देनाभिप्रायवाचिनाभिप्रायकारणंलक्ष्यते। चलःस्वभावतोलोलोनृणांयोभावःसःकलनोन्मुखतांसंकल्पाभिमुखतांयातःसन्सदसतोर्मध्येचलति आत्मानात्मनोर्मध्येदोलायते अनेकत्वधुरं दधानः मनोदर्पणमधिरूढोह्यात्मानात्मनोर्द्रष्टृदृश्यभावंभजते। मनोलयेसुषुप्तावात्मानात्मनोर्द्रष्टृदृश्यभावादर्शनात्॥५॥यतःकुतश्चिदविचारितरमणीयात्कारणात् उत्पन्नमतएव यत्किंचिदेवाविचारितरमणीयमेव विचार्यमाणंतु छायाकल्पितवेतालवद्विशीर्यते। हिशब्दोविद्वत्प्रसिद्धिद्योतनार्थः। मुक्तियुक्तिषुमोक्षोपपत्तिषु तच्चिंतनादिलक्ष

भावःसदसतोर्मध्येनृणांचलतियश्चलः॥ कलनोन्मुखतांयातस्तद्रूपंमनसोविदुः ॥ ५ ॥ यतः
कुतश्चिदुत्पन्नंचित्तंयत्किंचिदेवहि॥ नित्यमात्मविमोक्षाययोजयेन्मुक्तियुक्तिषु॥ ६॥ अत्रेदं
चित्तमाख्यानंकथयामितवानघ॥ यदाख्यातंभगवतापुरापंकजजन्मना ॥ ७॥ अस्तिरामा
टवीस्फाराशून्याशांतातिभीषणा॥ योजनानिशतंयस्यांलक्ष्यतेकोणमात्रकम्॥८॥ अस्यामे
कोहिपुरुषःसहस्रकरलोचनः॥ पर्याकुलमतिर्भीमःसंस्थितोविकृताकृतिः॥ ९॥

णमोक्षोपायेषुतद्योजयेत्। एवमविचारितरमणीयंविचाराद्विशरारु मनएवसंसारकारणंतन्निवृत्तयेतदेवमोक्षयुक्तिषुयोजनीयमित्युक्तम्॥६॥ इदानींएतमेवार्थंचित्ताख्यानमवतार्यप्रपंचयति ॥ अत्रेदमिति॥ ७॥ अस्तिरामाटवीस्फारेति॥ गूढार्थपद्यानिभगवान्वसिष्ठःस्वयमेव व्याकरिष्यति तथापिबुद्धिसौकर्यार्थंव्याकुर्मः। अटंत्यस्यांजीवाइत्यटवीसंसारपदवी स्फाराविस्तीर्णा शून्यासर्वपदार्थवर्जिता मायिकत्वात्तत्रपदार्थानाम्। अशांतेतिपदच्छेदः। अथवा तामसत्वंदर्शयितुंशून्येत्युक्तं सात्विकत्वंदर्शयितुंशांतेति राजसत्वंज्ञापयितुमतिभीषणेति॥८॥ पुरिशरीरेशेते पुरुबहुसीदत्यवसीदतीतिवापुरुषोमनः सहस्रकरलोचनः अनंतहस्तनयनः। अत्रानंताविषयाकारवृत्तयःकरलोचनतयावि

वक्षिताः । यथोक्तंबृहद्वासिष्ठे । सहस्रनेत्रहस्तत्वंयत्पुंसःपरिवर्णितम् । तदनंताकृतित्वंहिचेतसःपरिदर्शितमिति ॥ ९ ॥ वाहंयतिनाना योनीःप्रापयंतिइतिबाहवःकुकल्पनानि तेषांसहस्रेण । परितोघ्नंतीतिपरिघास्तानाध्यात्मिकादिदुःखहेतूनादायात्मनःस्वस्यपृष्ठेप्रहरति भ्रांतिपरिगृहीतैराध्यात्मिकादिदुःखहेतुभिरात्मानंक्लेशयतीत्यर्थः । पलायते कुकल्पनाप्रापितदुःखहेतुभ्योबिभेतीत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ अं

ससहस्रेणबाहूनामादायपरिघान्बहून् ॥ प्रहरन्नात्मनःपृष्ठेस्वात्मनैवपलायते ॥ १० ॥ दृढप्रहारैःप्रहरन्स्वयमेवात्मनात्मनि ॥ प्रविद्रवतिभीमात्मासयोजनशतान्यपि ॥ ११ ॥ क्रंदन्पलायमानोऽसौगत्वादूरमितस्ततः ॥ श्रमवान्विवशाकारोविशीर्णचरणांगकः ॥ १२ ॥ पतितोऽवशएवाशुमहत्यंधोऽधकूपके ॥ कृष्णरात्रितमोभीमेनभोगंभीरकोटरे ॥ १३ ॥ ततःकालेनबहुनासोंऽधकूपात्समुत्थितः ॥ पुनःप्रहारैःप्रहरन्विद्रवत्यात्मनात्मनि ॥ १४ ॥ पुनर्दूरतरंगत्वाकरंजवनगुल्मकम् ॥ प्रविष्टःकंटकव्याप्तंशलभःपावकंयथा ॥ १५ ॥ तस्मात्करंजगहनाद्विनिष्क्रम्यक्षणादिव ॥ पुनःप्रहारैःप्रहरन्विद्रवत्यात्मनात्मनि ॥ १६ ॥ पुनर्दूरतरंगत्वाशशांककरशीतलम् ॥ १७ ॥

धोविवेकरहितः । अंधकूपेगहननरके कुत्सितानिदुःखान्युप्यन्तेऽस्मिन्नितिकूपशब्दव्युत्पत्तेर्नभोवद्गंभीरमपरिच्छेद्यंकोटरंछिद्रंअभ्यन्तरावकाशोयस्मिन्सतथोक्तः ॥ १३ ॥ १४ ॥ तस्मिन्करंजवनगुल्मकमितिमनुष्यजन्म विवक्षितम् । नक्तमालापरपर्यायकरंजवनगतगुल्मशब्दितक्षुद्रोद्भिज्जत्वस्यासुखकरत्वात्कंटकव्याप्तं दुःखपरिवृतमित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥

कदलीकाननंस्वर्गस्तद्वदापातरमणीयत्वात् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ वसिष्ठशब्देनतेजउच्यते । अत्यंतंचतेजःस्वरूपोवसिष्ठइतिवसिष्ठशब्दव्युत्पत्तेर्वसिष्ठवाचिनामयेतिशब्देनपरमोविवेकोविवक्षितः ॥ २२ ॥ विवेकेनबलाच्चित्तंझटित्याक्रांतमितीममर्थमाह अवष्टभ्य

कदलीकाननंकांतंसंप्रविष्टोहसन्निव ॥ कदलीखंडकात्तस्माद्विनिष्क्रम्यक्षणात्पुनः ॥ १८ ॥ स्वयंप्रहारैःप्रहरन्विद्रवत्यात्मनात्मनि ॥ पुनर्दूरतरंगत्वातमेवांधोऽधकूपकम् ॥ १९ ॥ ससंप्रविष्टस्त्वरयाविशीर्णावयवाकृतिः ॥ अंधकूपात्समुत्थायप्रविष्टःकदलीवनम् ॥ २० ॥ कदलीकाननाच्छुभ्रंकरंजवनगुल्मकम् ॥ करंजकाननात्कूपंकूपाद्रंभावनांतरम् ॥ २१ ॥ प्रविष्टःप्रहरंश्चैवस्वयमेवात्मनिस्थितः ॥ एवंरूपनिजाचारंसमालोक्याचिरंमया ॥ २२ ॥ अवष्टभ्यबलादेवमुहूर्तंप्रतिबोधितः ॥ पृष्टश्चकस्त्वंकिमिदंकेनार्थेनकरोषिच ॥ २३ ॥ किंचवाभिमतंतेस्यात्किंमुधापरिधावसि ॥ इतिपृष्टेनकथितंतेनमेरघुनंदन ॥ २४ ॥ नाहंकश्चिन्नचैवेदंमुनेकिंचित्करोम्यहम् ॥ त्वयाहमवभग्नोऽस्मित्वंमेशत्रुरहोबत ॥ २५ ॥ त्वयादृष्टोऽस्मिनष्टोऽस्मिदुःखायचसुखायच ॥ इत्युक्त्वाविक्लवान्यंगान्यालोक्यस्वान्यतुष्टिमान् ॥ २६ ॥

बलादेवमुहूर्तंप्रतिबोधितः इति ॥ २३ ॥ मुधावृथा ॥ २४ ॥ विवेकंप्रतिचित्तेनकथितमेवदर्शयति ॥ नाहमित्यादिना ॥ हेमुनेविवेकअविचारितरमणीयंहिचित्तंतत्कार्यादिकंविवेकमृदितमसदेवभवतीत्यर्थः ॥ २५ ॥ त्वयाविवेकेनदृष्टोवशीकृतोऽहंदुःखायसुखायचनष्टोऽस्मि । सुखदुःखोत्पादनासमर्थोऽस्मीत्यर्थः ॥ २६ ॥

अर्धप्राप्तविवेकत्वाद्भोगांस्त्यक्तुमशक्नुवत् चित्तंसंतापांश्चकारेत्येतमर्थमाह ॥ रुरोदेति ॥ आसमंताद्रवःशब्दोयस्यसआरवी पूर्णविवेकेन स्वान्यंगान्यहंकारममकारलक्षणानिबाधितान्यालोक्य प्राप्तपरमानंदतयाचित्तंसंतोषंचकारेत्याह ॥ स्वान्यंगानिसमालोक्येति ॥ २७ ॥ पूर्णविवेकोदयेसतिसवृत्तिकंचित्तविलयक्रमंश्लोकद्वयेनाह ॥ अथाट्टहासपर्यंतइत्यादिना ॥ ममपुरतोविवेकस्यसमक्षमित्यर्थः ॥ २८ ॥ तस्य चित्तस्यशिरोऽहंकारलक्षणं तच्चपरमदारुणंअतिभयंकरंततोऽनंतरंबाहवःकुकल्पनालक्षणाःपतिताः पश्चादर्थाशालक्षणंवक्षआदिकंपतितम् ।

रुरोदातिरवंदीनोमेघोवर्षन्निवारवी ॥ क्षणमात्रेणतत्रासावुपसंहृत्यरोदनम् ॥ स्वान्यंगानिस
मालोक्यजहासप्रसभंचिरम् ॥ २७ ॥ अथाट्टहासपर्यंतेसंभ्रमात्पुरतोमम ॥ क्रमेणतानितत्या
जस्वान्यंगानिसमंततः ॥ २८ ॥ प्रथमंपतितंतस्याशिरःपरमदारुणम् ॥ ततस्तेबाहवःपश्चाद्वक्ष
स्तदनुचोदरम् ॥ २९ ॥ अथक्षणेनसपुमान्स्वान्यंगानियथायथम् ॥ संत्यज्यनियतेःशक्त्याका
पिगंतुमुपस्थितः ॥ ३० ॥ दृष्टवानहमेकांतेपुनरन्यंतथानरम् ॥ प्रहरंतंभ्रमंतंचपर्याकुलतरांतरम्
॥ ३१ ॥ समयासंमुखीकृत्यपरिपृष्टस्तथैवहि ॥ तेनैवासौक्रमेणैवरुदित्वासंप्रहस्यच ॥ ३२ ॥

तथाचोक्तंबृहद्वासिष्ठे । यदंगानिविशीर्णानिगतान्यंतर्धिमग्रतः ॥ तत्किंतेनविनार्थाशाशाम्यतीतिप्रदर्शितम् इति । अत्रार्थाशाहंकार कुकल्पनयोरुपलक्षणानि ॥ २९ ॥ यथायथंयथापूर्वंसमंततइत्यभिधानादिदानींयथायथमित्यभिधानाच्चायमर्थोऽवगम्यते । स्वान्यंगानियथा स्वंपूर्वादिदिग्भ्योबलिंविधाय गंतुंसमुद्यतइति एवंकथासौंदर्यार्थमुक्तमितिज्ञेयम् । नियतेर्दैवस्यशक्त्या विज्ञानाकारेणाभिव्यक्तयेत्यर्थः । गंतुंसमुद्यतोनगतइत्यभिधानाज्जीवन्मुक्तत्वंसूचितम् ॥ ३० ॥ पर्याकुलतरांतरं अत्यंतंपर्याकुलंअंतरमभ्यंतरंयस्यसतथोक्तस्तम् ॥ ३१ ॥ ३२ ॥

अलमत्यर्थम् । अलक्ष्यतामदृश्यतांययावित्युक्तंविदेहमुक्तत्वंआवेदितम् ॥ ३३ ॥ ३४ ॥ अथासौसुचिरेणेति ॥ महापातकयुक्तंहिमनोऽधकूप शब्दितेनरकेपतितंसत्तस्मात्कूपादतिदीर्घेणापिकालेननिर्गतमित्यर्थः ॥ ३५ ॥ शुद्धिलेशरहितंअनात्मज्ञमन्यन्मनःस्वविवेकंतिरश्चकारेत्याह ॥ दुर्मतिरिति ॥ दुर्मतिरसौमामित्युक्त्वास्वव्यापारपरोऽभवदित्यन्वयः ॥ इतिशब्दपरामृष्टमाह ॥ मूढेत्यादिना ॥ हेमूढदुर्बुद्धेजार्कि

अंगैर्विशीर्णतामेत्यययावलमलक्ष्यताम् ॥ दृष्टवानहमेकांतेतथैवान्यःक्वचिन्नरः ॥ ३३ ॥ पलायमानःपतितोह्यत्यंतांधोऽधकूपके ॥ तत्राहंसुचिरंकालमवसंस्तत्प्रतीक्षकः ॥ ३४ ॥ अथासौसुचिरेणापिकूपान्नाभ्युत्थितःशठः ॥ दृष्टवान्पुनरन्यंचप्रपतंतमितस्ततः ॥ ३५ ॥ अवष्टभ्यतथैवाशुतस्यप्रोक्तंचिरंमया ॥ दुर्मतिर्मामसौमूढनैवजानासिर्किंचन ॥ अपैहिदुर्मतेऽत्युक्त्वा स्वव्यापारपरोऽभवत् ॥ ३६ ॥ एवंतस्मिन्महारण्येबहवस्तादृशानराः ॥ परिभ्रमंतस्तिष्ठंति विद्यतेऽद्यापिसाटवी ॥ ३७ ॥ साभीषणाविविधकंटकसंकटांगीघोराटवीघनतमोगहनापिलोकैः ॥ आगत्यनिर्वृतिमनाप्तनिजावबोधैरासेव्यतेकुसुमगुल्मकवाटिकेव ॥ ३८ ॥ श्रीरामउवाच ॥ क्वासौमहाटवीब्रह्मन्कुत्रवादृश्यतेऽनघ ॥ केचतेपुरुषास्तत्रकिंवाकर्तुंकृतोद्यमाः ॥ ३९ ॥

चिन्नजानास्येव अपैहिअपसरमत्सकाशात् ॥ ३६ ॥ ३७ ॥ साभीषणेति ॥ विविधःकंटकानांदुःखलक्षणानांसंकटंसंबाधोयेष्वंगेषुतान्यंगानियस्याःसातथोक्ता घनतमसानिबिडाज्ञानेनगहनादुःप्रवेशाघनतमोगहनापिअनाप्तनिजावबोधैरलब्धात्मज्ञानैर्लोकैःप्राणिभिर्निर्वृतिमवाप्य सुखंलब्ध्वा आसमंतात्सेव्यतेगुल्मकानिक्षुद्रोद्भिद्विशेषाः ॥ ३८ ॥ क्वासौमहाटवीत्यादिनासर्गसमाप्तेर्ग्रंथसंदर्भःस्पष्टार्थः । क्वचित्किंचि

द्विविच्यते ॥ ३९ ॥ नैवचतेनराद्दूरइत्यनुवर्तते ॥ ४० ॥ शून्यविकाराढ्यांअसत्कार्याढ्याम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ क

वसिष्ठउवाच ॥ रघुनाथमहाबाहोश्शृणुवक्ष्यामितेऽखिलम् ॥ नसामहाटवीरामदूरेनैवचतेनराः ॥४०॥ सेयंसंसारपदवीगंभीरापारकोटरा ॥ तांत्वंशून्यविकाराढ्यांविद्धिराममहाटवीम् ॥४१॥ तत्रतेतुमहाकाराःपुरुषाःप्रभ्रमंतिहि ॥ मनांसितानिविद्धित्वंदुःखेनिपतितान्यलम् ॥ ४२ ॥ द्रष्टायोऽयमहंतेषांसविवेकोमहामते ॥ मयातान्यवबोध्यंतेविवेकेनमनांसिहि ॥ ४३ ॥ परंबोधंसमासाद्यमत्प्रसादान्महामते ॥ मनांसिकानिचित्तानिगतान्युपशमंपरम् ॥ ४४ ॥ कानिचिन्नाभिनंदंतिमांविवेकंविमोहिताः ॥ मत्तिरस्कारवशतःकूपेष्वेवपतंत्यधः ॥ ४५ ॥ येतेंऽधकूपागहनानरकास्तेरघूद्वह ॥ कदलीकाननंस्वर्गःकरंजोमर्त्यमंडलम् ॥ ४६ ॥ प्रविष्टान्यंधकूपांतर्निर्गतानिभयानितु ॥ महापातकयुक्तानिनरकेतानिसर्वदा ॥ ४७ ॥ यत्तत्करंजगहनंतत्कलत्ररसाविलम् ॥ दुःखंकंटकसंबाधंमानुष्यंविविधैषणम् ॥४८॥ यैरहंपुंभिरबुधैर्दुर्हिजेतितिरस्कृतः ॥ तैर्मनोभिरनात्मज्ञैःस्वविवेकस्तिरस्कृतः ॥ ४९ ॥ त्वयादृष्टोऽस्मिनष्टोऽस्मिशत्रुर्मेत्वमितिद्रुतम् ॥ यदुक्तंतद्धिचित्तेनममतापरिदेवितम् ॥ ५० ॥

रंजोमर्त्यमंडलमिति ॥ ४६ ॥ ४७ ॥ उक्तंविवृणोति ॥ यत्तत्करंजगहनमिति ॥ कलत्ररसाविलंस्त्रीरागकलुषम् ॥ ४८ ॥ ४९ ॥ विचित्तेनविषयचित्तेन ॥ ५० ॥

॥ ५१ ॥ ५२ ॥ तदवबोधतइतिपदद्वयं अवबोधतोऽवबोधनादित्यर्थः । पुंसामानंदियद्धसितंतदवबोधतःपरिप्राप्तविवेकेनचेतसासंतोषः कृतइतियत्तदेवेत्यन्वयः ॥ ५३ ॥ रूपंविक्रियां संकल्पविकल्पलक्षणाम् ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ अतीतप्रकरणघटकतात्पर्यार्थमाह ॥ संकं

रुदितंयन्महाक्रंदंनराणांतत्रराघव ॥ तद्भोगजालंत्यजतामनसारोदनंकृतम् ॥ ५१ ॥ अर्धप्राप्तविवेकस्यनप्राप्तस्यामलंपदम् ॥ मनसस्त्यजतोभोगान्परितापोहिजायते ॥ ५२ ॥ हसितंतुयदानंदिपुंसांतदवबोधतः ॥ परिप्राप्तविवेकेनसंतोषश्चेतसाकृतः ॥ ५३ ॥ परिप्राप्तविवेकस्यत्यक्तसंसारसंस्थितेः ॥ चेतसस्त्यजतोरूपमानंदोहिविवर्धते ॥ ५४ ॥ यदासौसमवष्टभ्यमयादृष्टःप्रयत्नतः ॥ तद्विवेकोबलाच्चित्तमादत्तइतिदर्शितम् ॥ ५५ ॥ यदात्मनिप्रहारौघैःपुमान्प्रहरतिस्वयम् ॥ तत्रतत्कल्पनाघातैःप्रहरत्यात्मनामनः ॥ ५६ ॥ पलायतेयत्पुरुषःस्वात्मानंप्रहरन्स्वयम् ॥ स्ववासनाप्रहारेभ्यस्तत्रतत्रमनःस्वयम् ॥ ५७ ॥ संकल्पवासनाजालैःस्वैरेवयातिबंधनम् ॥ मनोलीलामयैर्बंधैःकोशकारकृमिर्यथा ॥ ५८ ॥ एतत्तेकथितंरामचित्तोपाख्यानमुत्तमम् ॥ चित्तेनैवेदमालोक्यचित्तत्यागेस्थिरोभव ॥ ५९ ॥ इतिश्रीयोगवासिष्ठसारेमोक्षोपायेचित्तोपाख्यानंनामदशमःसर्गः ॥ १० ॥

ल्पवासनाजालैरिति ॥ संकल्पाएववासनामूलत्वाद्वासनास्तासांजालैः स्वैःस्वीयैः । कोशकारकृमिर्हिकपित्थवृक्षादिसंलग्नःसन्नात्मनोऽवस्थनायकोशंकृत्वानिर्गमनद्वारस्यापिपिधानंकुर्वाणोलीलामयैर्बंधैर्यथाबध्यतेतथेत्यर्थः ॥ ५८ ॥ ५९ ॥ इतिश्रीवासिष्ठचंद्रिकायांउत्पत्ति

प्रकरणेचित्तोपाख्याननंनामदशमःसर्गः ॥ १० ॥ अतीतसर्गांतेमनोबंधनमायातिकोशकारकृमिर्यथेतिदृष्टांतोपादानान्मनसस्त्यक्तव्याभि धानाच्चासतस्त्यागायोगात्तस्यसत्यत्वंप्राप्तं तत्सत्यत्वेच तद्विकारस्यजगतःसत्यत्वमितिसर्वस्यद्वैतस्यसत्यत्वमाशंक्य तस्यबालकाख्यान च्छलेनतुच्छत्वंप्रतिपादयितुंप्रस्तावयति ॥ प्रबुद्धानामित्यादिना ॥ प्रबुद्धानांब्रह्मविदांइदंजगदाकारेणविजृंभमाणंमनोब्रह्मैव नततोऽन्यद नन्यद्वा किंतर्हितुच्छमेवेत्यर्थः। मनोब्रह्मेतिबाधायांसामानाधिकरण्यम्। हिशब्दःशून्यादिप्रसिद्धिद्योतनार्थः। कुतोमनआदेर्ब्रह्मतावन्मात्रत्व मित्याशंक्य तत्कारणत्वात्तस्यतन्मात्रत्वंयुक्तमित्याह ॥ सर्वशक्तीति ॥ सर्वस्मिन्मनआदौकार्येशक्तिर्मायाख्यायस्यतत्तथोक्तम्। सर्वाः

वसिष्ठउवाच ॥ प्रबुद्धानांमनोरामब्रह्मैवेदंहिनेतरत् ॥ सर्वशक्तिपरंब्रह्मनित्यमापूर्णमव्ययम् ॥ १ ॥ नतदस्तिनतस्मिन्यद्विद्यतेविततात्मनि ॥ ययोल्लसतिशक्त्यासौप्रकाशंसोऽधिगच्छति ॥ २ ॥ चिच्छ क्तिर्ब्रह्मणोरामशरीरेषूपलभ्यते ॥ स्पंदशक्तिश्चवातेषुदार्ढ्यशक्तिस्तथोपले ॥ ३ ॥ द्रवशक्तिरथोंऽभःसु दाहशक्तिस्तथानले ॥ शून्यशक्तिस्तथाकाशेनाशशक्तिर्विनाशिनि ॥ ४ ॥ यथांडांतर्जलेबर्हिःसर्वोऽस्ती दंतथात्मनि ॥ फलपत्रलतापुष्पशाखाविटपमूलवान् ॥ वृक्षबीजेयथावृक्षस्तथेदंब्रह्मणिस्थितम् ॥ ५ ॥

शक्तयःसर्वकार्यविषयायस्मिन्नितिवा। अव्ययंअपक्षयरहितम् ॥ १ ॥ ननुविचित्रपदार्थानांमध्येकस्यचिदब्रह्मकार्यस्यापिसंभवात्कथंसर्वस्य ब्रह्मतावन्मात्रत्वमित्यतआह ॥ नतदस्तीति ॥ विततात्मनितस्मिन्अधिष्ठानेयत्कार्यंनविद्यतेतन्न सर्वशक्तिपरंब्रह्मेत्यत्र याःसर्वाःशक्तयो ब्रह्मनिष्ठतयाभिहितास्तास्तत्कार्येष्वस्पष्टमुपलभ्यन्तइत्याह ॥ ययोल्लसतिशक्त्येत्यादिना ॥ असौपरमात्मास्वाश्रयाणांअनेकशक्तीनांम ध्येययाशक्त्योल्लसतिविवर्तते ॥ २ ॥ साशक्तिःकुत्रोपलभ्यतइत्यतआह ॥ चिच्छक्तिरित्यादिना ॥ उपलेपाषाणे ॥ ३ ॥ शून्यशक्तिर मूर्तनिष्पादनशक्तिः ॥ ४ ॥ सर्वंद्वैतजातंप्रलयकालेऽनभिव्यक्तनामरूपतयाब्रह्मण्येववर्तते उत्पत्तिकालेप्राप्तेअंडांतर्जलाद्बर्हिरिवतस्मादेव

मायाविनः क्रमेणविजृंभते तत्रापि दृष्टेरेवसृष्टित्वान्मनआदिक्रमेणैवविजृंभते तच्चमनआदिकंद्वैतंअविचारदशायांबालकोपलालनायोक्तो ऽसमंजसकथार्थइवसत्यवत्प्रतीयमानमपितत्त्वनिरूपणेतुच्छमेवइत्येतदर्थजातमाह ॥ फलपत्रेत्यादिना ॥ लताकोमलशाखा अत्रविटपशब्दे नापुनरुक्ततायैवृक्षस्कंधोगृह्यते ॥ ५ ॥ क्वचिदिति ॥ तस्माद्ब्रह्मणउद्यंति कार्यरूपेणप्रकाशंतइत्यर्थः । क्ष्मातलाद्भूतलात् ॥ ६ ॥ सआत्मास र्वगोरामेति ॥ नित्योदितमहावपुःसर्वदास्वयंभातिपूर्णआत्मायद्यदामनाक्ईषत्मननींमननवतींशक्तिंधत्ते विवर्तमानमननाच्छक्त्यवच्छि न्नोभवतीतियावत् । तत्तदामनइत्युच्यते ॥ ७ ॥ आदौमनइति समष्टिरूपंविवक्षितम् । तदनुतदनंतरंबंधविमोक्षदृष्टीबंधमुक्तिज्ञानेउत्पद्येते त

क्वचित्क्वचित्कदाचिच्चतस्मादुद्यंतिशक्तयः ॥ देशकालविचित्रत्वात्क्ष्मातलादिवशालयः ॥ ६ ॥
सआत्मासर्वगोरामनित्योदितमहावपुः ॥ यन्मनाङ्मननींशक्तिंधत्तेतन्मनउच्यते ॥ ७ ॥ आ
दौमनस्तदनुबंधविमोक्षदृष्टीपश्चात्प्रपंचरचनाभुवनाभिधाना ॥ इत्यादिकास्थितिरियंहिगता
प्रतिष्ठामाख्यायिकासुभगबालजनोदितेव ॥ ८ ॥ श्रीरामउवाच ॥ किमुच्यतेमुनिश्रेष्ठबालका
ख्यायिकाक्रमः ॥ क्रमेणकथयैतन्मेमनोवर्णनकारणम् ॥ ९ ॥

योरनुत्पत्तौभोगापवर्गार्थंसृष्ट्यसंभवप्रसंगात् । स्मर्यते भोगापवर्गार्थंसृष्टिः । बुद्धींद्रियमनःप्राणान्जनानामसृजद्विभुः । मात्रार्थंचभवार्थंचआ त्मनेऽकल्पनायच इति । आदिशब्देनचित्तादिर्गृह्यते सुभगेतिसंबोधनम् । एकंपदंवा । सुभगबालजनायसुश्रीकबालजनायोदिताख्यायिका वदित्यादिकाद्वैतस्थितिःप्रतिष्ठामचलतयावस्थितिंगता । अविचारकारणादृढसत्यबुद्धिविषयतांप्राप्तेत्यर्थः ॥ ८ ॥ किमुच्यतइत्यादय आसर्गसमाप्तेःश्लोकाःस्पष्टार्थाः । क्वचित्किंचिद्विविच्यते । मनोवर्णनकरणमिति ॥ सविलासंमनःतुच्छमपिविचारोज्झितचेतसांसत्यव त्प्रतीयतइत्येवंविधस्यमनोवर्णनस्यमनःस्वरूपबोधनस्यकारणम् ॥ ९ ॥

धात्रींउपमातरम् । कथयवद ॥ १० ॥ ११ ॥ असमंजससमत्वसिद्ध्यर्थंपत्तनंविशिनष्टि । अत्यंतासतितुच्छइत्यर्थः ॥ १२ ॥ १३ ॥ आशयोऽभिप्रायः ॥ १४ ॥ १५ ॥ आसेदुराजग्मुः । कल्लोलाऊर्मयस्तैर्मालितं संजातमालं मालाकारैःकल्लोलैर्युक्तमित्यर्थः । मनागीषदपि ॥ १६ ॥



वसिष्ठउवाच ॥ कोऽपिमुग्धमतिर्बालोधात्रींपृच्छतिराघव ॥ कांचिद्विनोदिनींवार्तांधात्रिसंकथयाशुमे ॥ १० ॥ साबालस्यविनोदायधात्रीतस्यमहामते ॥ अख्यायिकांकथयतिप्रसन्नमधुराक्षरम् ॥ ११ ॥ क्वचित्संतिमहात्मानोराजपुत्रास्त्रयःशुभाः ॥ धार्मिकाःशौर्यमुदिताअत्यंतासतिपत्तने ॥ १२ ॥ द्वौनजातौतथैकस्तुगर्भएवहिनस्थितः ॥ अथाप्युत्तमलाभार्थमेकदातेशुभास्त्रयः ॥ १३ ॥ स्वकीयाच्छून्यनगरान्निर्गताविमलाशयाः ॥ गच्छंतोगगनेवृक्षान्ददृशुःफलशालिनः ॥ १४ ॥ तेषुविश्रम्यविश्रम्यभुक्त्वास्वादुचतत्फलम् ॥ ययुःसुखंविलासेनतेत्रयोराजसूनवः ॥ १५ ॥ सरित्त्रितयमासेदुस्ततःकल्लोलमालितम् ॥ तत्रैकापरिशुष्कैवमनागप्यंबुनद्वयोः ॥ १६ ॥ परिशुष्काभृशंयासौतस्यांतेसस्नुराहृताः ॥ चिरंकृत्वाजलक्रीडांपीत्वाक्षीरोपमंपयः ॥ १७ ॥ अथासेदुर्दिनस्यांतेभाविष्यन्नगरंत्रयः ॥ दूरश्रुतसमुल्लापंखेलन्नागरमंडलम् ॥ १८ ॥ ददृशुस्तत्ररम्याणित्रीणयथोभवनानिते ॥ एकंनिर्भित्तिनिस्तंभमनुत्पन्नंगृहद्वयम् ॥ १९ ॥

सस्नुःस्नातवंतः पयोजलम् ॥ १७ ॥ समुल्लापोमिथउच्चैर्भाषणं दूरातश्रुतःसमुल्लापोयस्यतत्तथादूरश्रुतसमुल्लापं खेलन्नागरमंडलंक्रीडन्नगरभवप्राणिजातं तादृशंमंडलजातंयस्मिन्नगरेतत्तथोक्तम् ॥ १८ ॥ १९ ॥

॥ २० ॥ खर्परतांकपालताम् ॥ २१ ॥ अष्टाढकोद्रोणइत्युच्यते। तथाचोक्तम्। पलंप्रकुंचकंमुष्टिःकुडवस्तच्चतुष्टयम्। चत्वारःकुडवाःप्रस्थश्च तुःप्रस्थमथाढकम्॥ अष्टाढकोभवेद्द्रोणोद्विद्रोणःशूर्पउच्यते। इति क्वचिद्देशेचतुराढकोद्रोणइतिव्यवहारः। राजपुत्रैर्यद्द्रोणत्रयंपक्वं तद्द्रोणत्रयेणैवन्यूनम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ बालकाख्यायिकाचेत्थमिति ॥ इत्थंबालकाख्यायिकाचेतिसंबंधः ॥ २६ ॥ संकल्पेति ॥

अभित्तिमंदिरंचारुप्रविष्टास्तेनृपात्मजाः ॥ प्रापुःस्थालीत्रयंतत्रतप्तकांचनकल्पितम् ॥ २० ॥ तत्रखर्परतांयातेद्वेएकाचूर्णतांगता ॥ जगृहुश्चूर्णतांजातांस्थालींतेशुद्धबुद्धयः ॥ २१ ॥ तस्यांद्रोणत्रयंपक्वंन्यूनंद्रोणत्रयेणतु ॥ अंधस्ततोद्विजैर्भुक्तंनिर्मुखैर्बहुभोजिभिः ॥ २२ ॥ विप्रभुक्तावशेषंतुभुक्तमंधोनृपात्मजैः ॥ भविष्यन्नगरेतस्मिन्राजपुत्रास्त्रयोहिते ॥ २३ ॥ ॥ सुखमेवस्थिताः पुत्रमृगयाव्यवहारिणः ॥ धात्र्येतिकथितारामबालकाख्यायिकाशुभा ॥ २४ ॥ निश्चयंसययौबालोनिर्विचारणयाधिया ॥ एषाहिकथितारामबालकाख्यायिकातव ॥ २५ ॥ इयंसंसाररचनाविचारोज्झितचेतसाम् ॥ बालकाख्यायिकाचेत्थमवस्थितिमुपागता ॥ २६ ॥ संकल्पजालकलनैवजगत्समग्रंसंकल्पजालकलनातुमनोविलासः ॥ संकल्पमात्रमलमुत्सृजनिर्विकल्पमाश्रित्यनिश्चयमवाप्नुहिरामशांतिम् ॥ २७ ॥

समग्रंजगत्संकल्पजालकलनैव संकल्पपुंजभ्रांतिरेवेत्यर्थः। संकल्पजालकलनेतिकिमुच्यतेतत्राह ॥ संकल्पजालकलनात्त्विति ॥ फलितमाह ॥ संकल्पमात्रमिति ॥ निर्विकल्पवस्त्वाकारम्। यद्वा निर्विकल्पंनिःसंशयंनिश्चयं ब्रह्मात्मविषयं शांतिंसंसारोपरतिम् ॥ २७ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौवासिष्ठचंद्रिकायांउत्पत्तिप्रकरणे बालकाख्यानंनामएकादशःसर्गः ॥ ११ ॥ पूर्वस्मिन्सर्गान्तेऽभिहितनिर्विकल्पनिश्चयाश्रयणायकिंकर्तव्यमित्याशंक्य सत्यादिलक्षणब्रह्मविचारःकर्तव्यइतिसोपपत्तिकमाह ॥ स्वसंकल्पवशादित्यादिना सार्धेन ॥ विचारएवधर्मोधर्मवत्सदानुष्ठेयोयस्यास्तयामोहसंरंभहीनयामोहाडंबरहीनयाधियापंडितोमोहंनैति ॥ १ ॥ ननुबद्धोऽहंपाशबद्धशकुन्तइवकिंकुर्यामित्यतआह ॥ अबद्धइत्यादिना ॥ मुधावृथा ॥ २ ॥ ३ ॥ वस्तुतोबंधासंभवे



इतिश्रीयोगवासिष्ठसारेमोक्षोपायउत्पत्तिप्रकरणेबालकाख्यायिकोपाख्यानंनामएकादशःसर्गः ॥ ११ ॥
वसिष्ठउवाच ॥ स्वसंकल्पवशान्मूढोमोहमेतिनपंडितः ॥ धियाविचारधर्मिण्यामोहसंरंभहीनया ॥ विचारयधियासत्यमसत्यंहिपरित्यज ॥ १ ॥ अबद्धोबद्धइत्युक्त्वाकिंमुधापरिशोचसि ॥ अनंतस्यात्मतत्त्वस्यकिंकथंकेनबध्यते ॥ २ ॥ अनंतेचिद्घनानंदेनिर्विकल्पैकरूपिणि ॥ स्थितेद्वितीयस्याभावात्कोबद्धःकश्चमुच्यते ॥ ३ ॥ तस्मादुल्लासमात्रंतुमनसोबंधतांगतम् ॥ मनःप्रशमनेराममोक्षएवावशिष्यते ॥ ४ ॥ गोष्पदंयोजनव्यूहःस्वासुलीलासुचेतसः ॥ कल्पंक्षणीकरोत्यंतःक्षणंनयतिकल्पताम् ॥ ५ ॥ अत्रतेशृणुवक्ष्यामिवृत्तांतमिममुत्तमम् ॥ जागतीहींद्रजालश्रीश्चित्तस्यांतःस्थितायथा ॥ ६ ॥

फलितमाह ॥ तस्मादिति ॥ मनसउल्लासमात्रंविजृंभणमात्रम् ॥ ४ ॥ ननुवस्तुतोबंधरहितत्वेबंधहेतुत्वंमनसःकथंसंभवतीत्याशंक्यतदर्थंतस्यदुर्घटकारितामाह ॥ गोष्पदमिति ॥ स्वासुसंबंधिनीषुलीलासुप्रवर्तमानस्यचेतसोयोजनव्यूहोगोष्पदंभवति । योजनसमूहोऽपि गोष्पदवत्स्फुरतीत्यर्थः । गोष्पदमपियोजनव्यूहोभवतीतिद्रष्टव्यम् । दृश्यतेहिस्वप्नादौदेशकालदैर्घ्यादिविभ्रमः ॥ ५ ॥ अघटमानमपिघटयति ।

मायामयंमनइत्युक्तमर्थमाख्यानमवतार्यविशदयति ॥ अत्रतेश्रृणिवत्यादिना ॥ जागतीजगत्संबंधिनीचित्तस्यांतर्यथायेनप्रकारेणसंस्थितातथाज्ञास्यसीतिशेषः ॥ ६ ॥ स्फीतःसमृद्धोजनपदोदेशः ॥ ७ ॥ ८ ॥ उत्तंसःशेखरः। यथाहुः क्षीरस्वामिनः। शेतेशिरसिशेखरः। उत्तंसोऽपीतियस्यलवणस्ययशांस्येवकुसुमोत्तंसास्तैःपांडुराणिशुभ्राणिस्कंधमंडलानियेषांते यद्यशःकुसुमोत्तंसपांडुरस्कंधमंडलाः। प्रसिद्धंहिलोकेकुसुमोत्तंसैः परागपतनात्स्कंधमंडलानिपांडुराणिभवंतीति। प्रोद्धूलिताविमलीकृताः। दिगंतव्याप्तकीर्तिरितितात्पर्यार्थः ॥ ९ ॥

अस्त्यस्मिन्वसुधापीठेनानावनसमाकुलः॥ उत्तरःपांडवोनामस्फीतोजनपदोमहान् ॥७॥ तत्रास्तिलवणोनामराजापरमधार्मिकः ॥ हरिश्चंद्रकुलोद्भूतोभूमाविवदिवाकरः ॥ ८ ॥ यद्यशःकुसुमोत्तंसपांडुरस्कंधमंडलाः ॥ सर्वेशैलाविराजंतेहाराःप्रोद्धूलिताइव ॥ ९ ॥ जिह्मतांयोनजानातिनदृष्टायेनगृध्नुता ॥ उदारतायेनधृतावाचकेनयथाभिधा ॥ १० ॥ सकदाचित्सभास्थानेसिंहासनगतोऽभवत् ॥ सुखोपविष्टेतत्रास्मिन्राजनीतिविदांवरे ॥ ११ ॥ सभांविवेशसाटोपंकश्चिन्नामेंद्रजालिकः ॥ सननाममहीपालंशिखरोदारकंधरम् ॥ १२ ॥ उवाचोत्कंधरंभूपंसपद्मामिवषट्पदः ॥ विलोकयविभोतावदेकामिहखरोलिकाम् ॥ पीठस्थएवसाश्चर्यंचंद्रोदयमिवावनौ ॥ १३ ॥

जिह्मतांकापटयं गृध्नुरभिकांक्षाशीलस्तस्यभावोगृध्नुता। गृधु अभिकांक्षायामितिधातोस्त्रसिगृधीत्यादिनाक्नुः। उदारतादातृतावामहत्त्वंवावाचकेनवक्ता अभिधाअभिधानंअभिधाख्योव्यापारोवा ॥ १० ॥ ११ ॥ साटोपंससंभ्रमं शिखरंशृंगंतद्वदुदाराउत्तमाकंधराग्रीवायस्यसतथोक्तःतम् ॥ १२ ॥ उत्कंधरंउद्धतग्रीवं एकांप्रधानाम्। खरोलिकामित्यत्रेंद्रजालविद्याभ्यासोविवक्षितः ॥ १३ ॥

पिच्छिकात्रमयूरपत्रभारः । नानाविरचनाबीजंनानानिर्माणकारणम् ॥ १४ ॥ ततःपिच्छिकादर्शनादनंतरंअस्मिन्नेवक्षणेसैंधवसामंतःसिंधु देशीयनृपसामंतःसभांविवेश ॥ १५ ॥ तंसामंतमश्वश्चानुजगामेतिराज्ञोभ्रांतिर्बभूवेत्यर्थः । एवमुत्तरत्रापिज्ञेयम् ॥ १६ ॥ उच्चैश्रवाइंद्रस्या

इत्युक्त्वापिच्छिकातेनभ्रामिताभ्रमदायिनी ॥ नानाविरचनाबीजंमायेवपरमात्मनः ॥ १४ ॥ तां ददर्शमहीपालस्तेजोरेणुविराजिताम् ॥ सभांसैंधवसामंतोविवेशास्मिन्क्षणेततः ॥ १५ ॥ तंचैवा नुजगामाश्वःसौम्यःपरमवेगवान् ॥ सामंतोऽश्वमुपादायपार्थिवंसमुवाचह ॥ १६ ॥ इदमुच्चैश्र वप्रख्यंहयरत्नंमहीपते ॥ प्रभुणाममभूचक्रप्रभोःसंप्रहितंतव ॥ १७ ॥ राजतेहिपदार्थश्रीर्महता मर्पणाच्छुभा ॥ इत्युक्तवतितस्मिन्सप्रत्युवाचेंद्रजालिकः ॥ १८ ॥ सदश्वमेनमारुह्यभुवनंविह रप्रभो ॥ अश्वमालोकयामासतेनोक्तइतिभूपतिः ॥ १९ ॥ अथानिमेषयादृष्ट्याराजाचित्रोपमा कृतिः ॥ बभूवालोकयन्नश्वंलिपिकर्मार्पितोयथा ॥ २० ॥ तस्थौमुहूर्तयुग्मंतुध्यानासक्तइवा त्मनि ॥ ततस्तेविस्मयापन्नाययुश्चिंतांसभासदः ॥ २१ ॥ संदेहसागरेमग्नाःस्थितास्तत्रचमंत्रि णः ॥ प्रशशामसभास्थानेजनकोलाहलोमहान् ॥ २२ ॥ विततविस्मितजिह्मितयातयाजनत याभयमोहविषण्णया ॥ स्तिमितचक्षुषिभूमिपतौस्थितेमुकुलिताब्जवनस्यधृताद्युतिः ॥ २३ ॥



श्वस्तत्प्रख्यंतत्संकाशं प्रहितंसंप्रेषितम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ युग्मंयुगलम् । सभासदःसभायांवर्तमानाः ॥ २१ ॥ २२ ॥ विततंविस्मितंम हान्विस्मयोयस्यांजिह्मतायांऐंद्रजालिककुटिलतायांसाविततविस्मितजिह्मितातयाहेतुभूतया भूमिपतौस्तिमितचक्षुषिस्थितेसतिभयमोहा

भ्यांविषण्णयादुःखितयाजनतयाजनसमूहेनमुकुलिताब्जवनस्यद्युतिःशोभाधृता ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ जाल्मेनासमी
क्ष्यकारिणा । जाल्मोऽसमीक्ष्यकारीस्यादित्यमरः ॥ २८ ॥ अतिरंहसाअतिवेगेन ॥ २९ ॥ भोगाभ्यासेनवैषयिकसुखानुभववृत्त्याजडं

वसिष्ठउवाच॥ मुहूर्तद्वितयेनाथप्रबुबोधमहीपतिः॥बभूवाथप्रबुद्धोऽसावासनोपरिकंपितः॥२४॥
पुरोगैर्धार्यमाणोऽथपर्याकुलमतिर्नृपः॥ अथैनंपरिपप्रच्छुःसदस्यामंत्रिणस्तदा॥२५॥सम्यक्प्रा
प्तप्रबोधंतुसादरंविनयान्विताः॥ मनस्तेनिर्मलंकस्मात्संभ्रमेषुनिमज्जति ॥ २६ ॥ मनोमोहमुपा
दत्तेनमहत्त्वविजृंभितम् ॥ अथराजाहसाश्चर्यमुन्मीलितविलोचनः ॥ २७॥ इदमाश्चर्यमाख्यानं
शृणुताद्यसभासदः॥ पिच्छिकामहमालोक्यजाल्मेनभ्रामितामिमाम् ॥ २८॥ अश्वमारूढवाने
नमात्मनाभ्रांतचेतसा॥ गंतुंप्रवृत्तोमृगयामेकोऽहमतिरंहसा ॥ २९ ॥ अनेनातिविलोलेनदूरेनी
तोऽस्मिवाजिना ॥ भोगाभ्यासजडेनाज्ञोमुग्धःस्वमनसायथा ॥३०॥ ततःप्रलयनिर्दग्धजगदा
स्पदभीषणम् ॥ निःपक्षिस्फारनीहारंनिर्वृक्षमजलंमहत् ॥ संप्राप्तोऽहमपर्यंतमरण्यंश्रांतवाहनः
॥ ३१ ॥ तदरण्यमथासाद्यमतिर्मेखेदमागता ॥ आसूर्यांतंदिनंतत्रप्रक्रांतंसीदतामया ॥ ३२॥
तदरण्यमथातीतमतिकृच्छ्रेणखेदिना ॥ विवेकिनेवसंसारंप्राप्तवानथजांगलम् ॥ ३३ ॥

ततोऽन्यपुरुषार्थानभिज्ञंभोगाभ्यासजडं तेनाज्ञोऽनात्मज्ञः । मुग्धःपशुवल्लौकिकप्रज्ञयापिहीनः ॥ ३० ॥ स्फारोभूरिनीहारस्तुषारोयस्मिन्
अरण्येतत्तथोक्तम् ॥ ३१ ॥ आसूर्यांतंसूर्यास्तमयपर्यंतमित्यर्थः । प्रक्रांतंप्रकर्षेणातितम् ॥ ३२ ॥ जांगलंवनविशेषः ॥ ३३ ॥

॥३४॥ जंबीरो दंतशठाख्यो वृक्षः लताशाखा । लताशाखा च शाखिनामित्यभियुक्तवचनात् ॥३५॥३६॥३७॥ सारात्रिः सापदामित्येकंपदं वा । धुरिभारे ॥ ३८ ॥ शीतार्तमद्दंतपंक्तिटांकारशीत्कृतैः शीतार्तस्य मम दंतपंक्तौ ये टांकाराः यानि च शीत्कृतानि सीत्काराः तैः सह तिमिरसंघातैश्च सा



जंबूकदंबप्रायेषु कलालापाः पतत्रिणः ॥ यत्र स्फुरंति खंडेषु पांथानामिव बांधवाः ॥ ३४ ॥ तत्र जंबीरखंडस्य तलं संप्राप्तवानहम् ॥ आलंबिता मया तत्र स्कंधसंसर्गिणी लता ॥ ३५ ॥ मयि प्रलंबमाने ऽस्यां प्रयातः स तुरंगमः ॥ गंगावलंबिनि नरे यथा दुष्कृतसंचयः ॥ ३६ ॥ चिरदीर्घाध्वगः खिन्नस्तत्र विश्रांतवाहनम् ॥ तत्र कल्पसमा रात्रिर्मोहमग्नस्य मे गता ॥ ३७ ॥ न स्नातवान्नार्चितवान्न तदा भुक्तवानहम् ॥ केवलं तु गता रात्रिः सा पदां धुरि तिष्ठतः ॥ ३८ ॥ सह शीतार्तमद्दंतपंक्तिटांकारशीत्कृतैः ॥ सार्धं तिमिरसंघातैः सा व्यतीयाय शर्वरी ॥ ३९ ॥ प्रवृत्तस्तामहं स्फारां संप्रवृत्तस्ततः स्थलीम् ॥ न किंचिद्दृश्यते तत्र भूतं जरठजंगले ॥४०॥ अभिजातो गुणलवो यथा मूर्खशरीरके ॥ केवलं विगताशंकं खंडभ्रमणचंचलाः ॥ ४१ ॥ चीचीकुचीति वचना विहरंति विहंगमाः ॥ अथाष्टभागमापन्ने व्योम्नो दिवसनायके ॥ ४२ ॥ दृष्टा मया प्रभ्रमता दारिकौदनधारिणी ॥ तरतारकनेत्रांतां श्यामामधवलांबराम् ॥ ४३ ॥



धं शर्वरी रात्रिर्व्यतीयाय व्यतिक्रांता भूत् ॥ ३९ ॥ भूतं प्राणिजातं जरठजंगले जीर्णवनविशेषे ॥ ४० ॥ खंडभ्रमणं असकलभ्रमणम् ॥ ४१ ॥ चीचीकुचीति शब्दानुकारः । त्रिंशद्भागस्य व्योम्नो ऽष्टभागं देशं दिवसनायके [illegible] प्राप्ते सतीत्यर्थः ॥ ४२ ॥ दारिका बालिका तारका

कनीनिकानेत्रमध्यस्थकृष्णमणुलक्षणं तरतारकेपरिभ्रमत्कनीनिकेनेत्रेयस्याःसातथोक्ता । स्फारितांभूरिताम् ॥ ४३ ॥ ४४ ॥ उपेयुषी उपगता ॥ ४५ ॥ ४६ ॥ खंडाद्वृक्षादीनांसमूहादन्यत्खंडेनिपततीतिसप्तमी ॥ ४७ ॥ हारकेयूरीतिनाम ॥ ४८ ॥ कुंजकेषुनिकुंजकेषुफल्ला

अहमभ्यागतस्तत्रशर्वरीमिवचंद्रमाः ॥ मह्यमोदनमाश्वेतद्दालेबलवदापदि ॥ ४४ ॥ देहिदी
नार्तिहारिण्यःस्फारितांयांतिसंपदः ॥ क्षुदंतर्महतीयंमेबालेवृद्धिमुपेयुषी ॥ ४५ ॥ याच्ञयापि
तयामह्यमित्थंदत्तंनकिंचन ॥ यत्नप्रार्थितयालक्ष्म्यायथादुष्कृतिनेधनम् ॥ ४६ ॥ केवलंचिरका
लेनमय्यत्यंतानुगामिनी ॥ खंडात्खंडेनिपततिछायाभूतेपुरःस्थिते ॥ ४७ ॥ तयोक्तंहारके
यूरींचंडालींविद्धिमामिति ॥ राजन्याचनमात्रेणमत्तोनाप्नोषिभोजनम् ॥ ४८ ॥ इत्युक्तवत्या
गच्छंत्याचलंत्याचपदेपदे ॥ कुंजकेषुनिषज्जंत्यालीलावनितयोदितम् ॥ ४९ ॥ ददामिभोज
नमिदंभर्ताभवसिचेन्मम ॥ वाहयत्यत्रमेदांतावुद्दालेपुक्कसःपिता ॥ ५० ॥ तस्येदमन्नंभवतिभ
र्तृत्वेदीयतेस्थिते ॥ प्राणैरपिहिसंपूज्यावल्लभाःपुरुषायतः ॥ ५१ ॥ अथोक्तासामयाभर्ताभवा
मितवसुव्रते ॥ केनापदिविचार्यंतेवर्णजातिकुलक्रमाः ॥ ५२ ॥ ततस्तयोदनादर्धमह्यमेकंसम
र्पितम् ॥ जंबूफलरसःपीतःसम्भुक्तःपक्कणौदनः ॥ ५३ ॥

दिजिवृक्षयानिषज्जंत्यानितरांसंगंकुर्वंत्या । गुंजकेष्वितिक्वचित् । तत्रस्वकंठगतेषुबाह्येषुवा गुंजाफलेष्वित्यर्थः ॥ ४९ ॥ दांतौदमयुक्तौशि
क्षितौबलीवर्दौ । उद्दालेहलेनाकृष्टेक्षेत्रे भवतीतिसप्तमी ॥ ५० ॥ ५१ ॥ ५२ ॥ पक्कणशब्देनशबरालयवाचिनापुक्कसगृहंलक्ष्यते ॥ ५३ ॥

॥५४॥ पीवराकारंपीनाकृतिम् । अवीचिर्नरकविशेषः ॥ ५५ ॥ मातंगश्चंडालः । चंडालप्लवमातंगदिवाकीर्तिजनंगमाः इत्यमरः ॥ ५६ ॥ बाढमित्यव्ययमंगीकारे ॥ ५७ ॥ नीहाराभ्रकडारासु नीहाराभ्राणितुषारवर्षाणिसंध्याभ्राणितैःकडारासुकपिलासु । कडारःकपिलःपिंगइत्यमरः । दिक्षुप्रोद्धूलितास्विवसतीषुचलिताइतिसंबंधः । वेतालाबध्यंतेऽस्मिन्नितिवेतालबंधनंवेतालस्थानंवनंतस्मात् ॥ ५८ ॥ जंगलंव



विश्रांतंचमयातत्रमोहापहृतचेतसा ॥ माहस्तेनाथसादायप्राणंबहिरिवस्थितम् ॥ ५४ ॥ दुराकृतिंदुराचारमाससादभयप्रदम् ॥ पितरंपीवराकारमवीचिमिवयातनाम् ॥ ५५ ॥ तयाहमनुषंगिण्यामातंगायानिवेदितः ॥ अयंममभवेद्भर्ताताततहेतवरोचताम् ॥ ५६ ॥ सतस्याबाढमित्युक्त्वादिनांतेसमुपस्थिते॥मुमोचदांतावाबद्धौकृतांतःकिंकराविव॥५७॥नीहाराभ्रकडारासुदिक्षुप्रोद्धूलितास्विव॥ वेतालबंधनात्तस्माद्दिनांतेचलितावयम् ॥५८॥ क्षणेनपक्कणंप्राप्ताःसंध्यायांदीर्घजंगलात् ॥ विकर्तितवराहाश्वकपिकुक्कुटवायसम् ॥ शोषार्थप्रसृताद्र्रांत्रतंत्रीजालपतत्खगम् ॥५९॥ बालहस्तस्थितक्रव्यापिंडक्वणितमाक्षिकम् ॥ संभ्रमोपहितानल्पकदलीदलखंडकम्॥६०॥

नविशेषः । पक्कणस्यलक्षणयापुक्कसालयस्यत्रीणिविशेषणानिविकर्तितेत्यादीनि । विकर्तिताविविधंछेदितावराहादयोयस्मिन्सतथोक्तस्तंआंत्राण्यत्रशिराः शोषणार्थंप्रसृतानिप्रकीर्णानियानिआर्द्रांत्राणितान्येवतंत्र्यःशोषार्थप्रसृताद्र्रांत्रतंत्र्यस्तासांजालेपततंःखगाःपक्षिणोयस्मिन्सतथोक्तस्तम् ॥ ५९ ॥ क्रव्यमामिषम् । पललंक्रव्यमामिषमित्यमरः । बालहस्तस्थितेषुक्रव्यपिंडेषुक्वणिताध्वनितामक्षिकायस्मिन्सतथोक्तस्तम् ॥ ६० ॥

उपहितंउपक्षिप्तम् । केकराक्षीतिनाम ॥ ६१ ॥ ६२ ॥ कृष्णवर्णेनतेनेतिपूर्वेणान्वयः ॥ ६३ ॥ सरभसंससंभ्रमंसवेगंवा । अभितःउभयतः विनेदुःविशिष्टंनादंचक्रुः । मदिराचआसवाश्चमदिरासवाः प्रसृताःआस्याद्विगलितामहांतोमदिरासवायेषांतेतथोक्ताः । आसवाःसुरामदिराः अन्नस्वादुरसासुरा । यथाहुःक्षीरस्वामिनः । स्वादुरसामदिरेति । श्वपाकाःश्वपचाः ॥ ६४ ॥ ६५ ॥ पुष्पितासंपन्नारजस्वलाजाता ॥ ६६ ॥

अहमास्थितवांस्तत्रनवेश्वशुरमंदिरे ॥ श्वश्वामेकेकराक्ष्यातुतेनास्त्रज्ञयचक्षुषा ॥ ६१ ॥ जामातायामितिप्रोक्तंतयातदाभिनंदितम् ॥ बहुनात्रकिमुक्तेनकस्मिंश्चिद्दिवसेततः ॥ ६२ ॥ दत्ताचतेनसामह्यंकुमारीभयदायिनी ॥ सुकृष्णाकृष्णवर्णेनदुष्कृतेनेवयातना ॥ ६३ ॥ सरभसमभितोविनेदुरत्रप्रसृतमहामदिरासवाःश्वपाकाः ॥ हतपटुपटहाविलासवंतःस्वयमिवदुष्कृतराशयोमहांतः ॥ ६४ ॥ राजोवाच ॥ ततःप्रभृतितत्राहंसंपन्नःपुष्टपुक्कसः ॥ सप्तरात्रोत्सवस्यांतेक्रमान्मासाष्टकंगतम् ॥ ६५ ॥ पुष्पितासापिसंपन्नास्थितागर्भवतीततः ॥ प्रासूतदुःखदांकन्यांविपद्दुःखक्रियामिव ॥ ६६ ॥ साकन्यावव्टधेशीघ्रंमूर्खेचिंतेवपीवरी ॥ पुनःप्रसूतासावर्षैस्त्रिभिःपुत्रमशोभनम् ॥ ६७ ॥ अनर्थमिवदुर्बुद्धिराशापाशविधायकम् ॥ पुक्कसीसाप्रसूताथपुनरप्यर्भकंततः ॥ ६८ ॥ तयासहसमास्तत्रममवत्क्योऽतिवाहिताः ॥ शीतवातातपक्लेशविवशेनदशांतरे ॥ ६९ ॥

पीवरीपीना ॥ ६७ ॥ दुष्टाचासौबुद्धिश्चेतिदुर्बुद्धिः आशाएवपाशाबंधनहेतुत्वात्तेषांविधायकमुत्पादकंआशापाशविधायकम् ॥ ६८ ॥ समाःसंवत्सरान् । दशान्तरेकालावस्थाभेदे दशान्तरेशीतवातातपक्लेशविवशेनेतिसंबंधः ॥ ६९ ॥

॥ ७० ॥ तृणोत्थेति ॥ तृणोत्पन्नाग्निज्वालाहिश्वेताभवति ॥ ७१ ॥ अकांडमनवसरोदुर्भिक्षकालस्तत्प्रयुक्तंमरणंअकांडमरणंतस्मान्नि मित्तात् उड्डीनमुद्धतंचंडमतिकोपनम्। चंडस्त्वत्यंतकोपनइत्यमरः। अकांडमरणोड्डीनंचतच्चंडचंडालमंडलंचेतिविग्रहः॥ ७२॥ विंध्यकक्षंविं ध्यपर्वतस्योदकबहुलप्रदेशम्। उदप्रायमनूपंस्यात्पुंसिकच्छस्तथाविधइत्यमरः॥ ७३॥ अकांडमनवसरोदुर्भिक्षकालः। कीदृशंतदकांडमित्य



कलत्रचिंताहतयाधियासंदह्यमानया॥ दृष्टाःकष्टसमारंभादिशःप्रज्वलिताइव॥ ७०॥ अथगच्छतिका लेतुजराजर्जरितायुषि॥ तृणोत्थदहनज्वालासमश्मश्रुधरेमयि॥ ७१॥ तत्रदुर्भिक्षमासीच्चपरिशुष्कतृणं महत्॥ अकांडमरणोड्डीनचंडचंडालमंडलम्॥ ७२॥ निरन्नतृणपत्रांबुविंध्यकक्षंतदाययौ॥ नवर्षतिघन व्रातेदृष्टनष्टेक्वचिज्जने॥ ७३॥ प्रौढांगारगणेभ्योग्निगतौवहतिमारुते॥ अकांडमभवद्भीममुद्दामदवपाव कम्॥ ७४॥ शोषिताशेषगहनंभस्मशेषतृणोलुपम्॥ तस्मिंस्तदावर्तमानेकष्टेविधिविपर्यये॥ ७५॥ ज नाःकेचिद्विनिष्क्रम्यगतास्तेससुहृज्जनाः॥ शीर्णाःकेचनतत्रैवप्रविष्टाअनलंपरे॥ केचिच्छ्वभ्रेषुपतिताः केऽपिजातामुमूर्षवः॥ ७६॥ अहंकलत्रमादायकृच्छ्रात्तस्माद्विनिर्गतः॥ सार्धंत्रिभिरपत्यैस्तुतयाचसहि तःशनैः॥ ७७॥ प्राप्यतद्देशपर्यंतंतत्रतालतरोस्तले॥ अवरोप्यसुतान्स्कंधात्ताननर्थानिवोल्बणान् ७८

तआह॥ भीममित्यादि॥ उद्दामोविबंधनोदवपावकोवनाग्निर्यस्मिंस्तदुद्दामदवपावकम्॥ ७४॥ उलुपंलता। लताप्रतानिनीवीरुद्गुल्मि न्युलपमित्यपीत्यमरः। भस्मशेषाणितृणोलुपानियस्मिंस्तत्तथोक्तम्। विधिविपर्ययेभाग्यवैपरीत्ये॥ ७५॥ श्वभ्रेषुविवरेषु॥ ७६॥ कृच्छ्रादायासात्॥ ७७॥ उल्बणान्प्रव्यक्तान्। स्फुटंप्रव्यक्तमुल्बणमित्यमरः॥ ७८॥

॥ ७९ ॥ दारकौबालकौ । दारकौबालभेदकावित्यमरः ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३॥ अतिमित्रायकालोचितबंधवे ॥ ८४ ॥ ८५ ॥ ८६ ॥

विश्रांतोऽस्मिततस्तत्ररौरवादिवनिर्गतः ॥ अथचंडालकन्यायांविश्रांतायांतरोस्तले ॥ ७९ ॥ सुप्ता यांशीतलच्छायेद्वौसमालिंग्यदारकौ ॥ पृच्छकोनामतनयोममैषपुरतःस्थितः ॥ ८० ॥ अत्यंतवल्ल भोऽस्माकंकनीयान्मुग्धवागिति ॥ समामुवाचदीनात्माबाष्पपूरितलोचनः ॥ ८१ ॥ तातदेह्याशुमेमां संपातुंचरुधिरंक्षणात् ॥ पुनःपुनर्वदन्नेवंसबालस्तनयोमम ॥ ८२ ॥ प्राणांतिकींदशांप्राप्तःसाक्रंदोहिपु नःपुनः ॥ तस्यतामार्तिमालोक्यमयादुःखातिभारिणा ॥ ८३ ॥ सोढुंतामापदंतीव्रामशक्तेनहतात्मना ॥ मरणायातिमित्रायकृतोंऽतर्निश्चयोमया ॥ ८४ ॥ तत्रकाष्ठानिसंचित्यचितामाचितवानहम् ॥ चिता चटचटास्फोटैःस्थितामदभिकांक्षिणी ॥ ८५ ॥ तस्यांतुयावदात्मानंचितायांनिक्षिपाम्यहम् ॥ चलि तोऽस्मिजवात्तावदस्मात्सिंहासनान्नृपः ॥ ततस्तूर्यनिनादेनजयशब्देनबोधितः ॥ ८६ ॥ इतिशांबरि केणायंमोहउत्पादितोमम ॥ अज्ञानेनेवजीवस्यदशाशतसमन्वितः ॥ ८७॥ इत्युक्तवतिराजेंद्रेलव णेभूरितेजसि ॥ अंतर्धानंजगामासौतत्रशांबरिकःक्षणात् ॥ ८८ ॥ अत्रेदमूचुस्तेसभ्याविस्मयो त्फुल्ललोचनाः ॥ नायंशांबरिकोदेवयस्यनास्तिधनैषणा ॥ ८९ ॥ दैवीकाचनमायेयंसंसारस्थितिबो धिनी ॥ मनोविवर्तःसंसारइतियस्यांप्रतीयते ॥ सर्वशक्तेरनंतस्यविलासोहिमनोजगत् ॥ ९० ॥

शांबरिकेणऐंद्रजालिकेन ॥ ८७ ॥ ८८ ॥ ८९ ॥ मनोविवर्तत्वाज्जगतोमनोजगदितिसामानाधिकरण्यमुपपन्नम् ॥ ९० ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादश्रीमदात्मसुखकृतौवासिष्ठचंद्रिकायांउत्पत्तिप्रकरणेशांबरिकाख्याननंनामद्वादशःसर्गः ॥ १२ ॥ एवंनानाख्यानैःपरमात्माश्रयमायाविवर्तभूतमनोविलासात्मकंद्वैतानर्थजातंमिथ्या तदधिष्ठानंब्रह्मात्मतत्त्वमेवसत्यमितिप्रतिपादितम् । इदानीमेवंप्रतिपादनात् उत्पन्नापिब्रह्मात्मतत्त्वप्रतीतिश्चित्तैकाग्र्याभावादनुभवपर्यवसायिनीनभवतियतोऽतस्तदैकाग्र्यसिद्ध्यर्थं तस्यबाह्यवृत्तिनिरोधःकर्तव्यइति तत्रतत्रप्रतिपादितमपिइहविशेषतःप्रतिपादयितुमाह ॥ यत्कृतमिति ॥ नामशब्दःप्रसिद्धौ ॥१॥ अचपलतां अचंचलतां अचपलतायास्तत्त्वमेवाह । मननवर्जितमिति संकल्पादिवर्जितमित्यर्थः । असौपुमान्अनुत्तमपदेनसर्वोत्तमोपायेनध्याने

इतिश्रीयोगवासिष्ठेमोक्षोपायेशांबरिकोपाख्याननंनामद्वादशःसर्गः ॥ १२ ॥ वसिष्ठउवाच ॥ यत्कृतंमनसानामतत्कृतंविद्धिराघव ॥ यत्त्यक्तंमनसातावत्तत्त्यक्तंविद्धिराघव ॥ १ ॥ यस्याचपलतांयातंमनोमननवर्जितम् ॥ अनुत्तमपदेनासौध्यानेनानुगतोऽनघ ॥ २ ॥ संयमान्मनसःशांतिमेतिसंसारविभ्रमः ॥ मंदरेऽस्पंदतांयातेयथाक्षीरमहार्णवः ॥ ३ ॥ मनसोवृत्तयोयायाभोगसंकल्पविभ्रमाः ॥ संसारविषवृक्षाणांताएवांकुरपंक्तयः ॥ ४ ॥

नचित्तस्यचिन्मात्रशेषतालक्षणेनानुगतोऽन्वितोभवति अतोमहाफलत्वान्मनसोऽचापल्यंसंपादनीयमित्यर्थः ॥ २ ॥ ननु ध्यानफलेनापिमनसश्चापल्येनसंसारान्मुमुक्षोःकिंभवेत्तत्राह ॥ संयमादिति ॥ अस्पंदतामितिछेदः ॥ ३ ॥ शब्दाद्याकाराणांचित्तवृत्तीनांसांसारिकदेहशतहेतुताप्रदर्शनपूर्वकंतन्निरोधोपायमाह ॥ मनसोवृत्तयइत्यादिश्लोकत्रयेण ॥ भोगाविषयसंकल्पाएवविभ्रमाः भोगसंकल्पविभ्रमास्तैर्हेतुभिर्जायमानायामनसोवृत्तयःशब्दादिवृत्तयःशब्दादिविषयास्ताएवेत्यन्वयः ॥ ४ ॥

औषधस्यपरत्वमेवसाधयति ॥ स्वायत्तमित्यादिना ॥ लोकेकिंचिदौषधंसहायंविनास्वेनैवसाध्यंनभवति । नेदंतथेत्याह । स्वायत्तंस्वाधी
नंस्वेनैवसाध्यमितियावत् । स्वाधीनमपिकिंचिद्दुःसंपादंनेदंतंथेत्याह । सुसाध्यमिति । स्वायत्तंसुसाध्यमप्युपयोगकालेकिंचिदौषधंसुस्वा
दुनभवति नेदंतथेत्याह । स्वाद्विति । एवंविधमपिकिंचिदौषधमनैकांतिकफलं नेदंतथेत्याह । निश्चितमिति । फलतोनिर्णीतमित्यर्थः
॥ ५ ॥ अभिमतमिष्टंवस्तुत्यजन्निरामयःपश्चात्तापरहितइत्यर्थः । बाह्यंप्रसरंमनसोबाह्यविषयेषुसंचारमुज्झतात्यजता ॥ ६ ॥ इष्टविषयत्या
गेप्रोत्साहजननाय तमकुर्वाणांनिंदति ॥ स्वायत्तमिति ॥ एकांतहितंनियमेनहितंकदाचिदप्यहितंनभवतीत्यर्थः । स्वेप्सितत्यागःस्वेष्टवि

अस्यचित्तमहाव्याधेश्चिकित्सायांपरौषधम् ॥ स्वायत्तंशृणुवक्ष्यामिसुसाध्यंस्वादुनिश्चितम्
॥ ५ ॥ त्यजन्नभिमतंवस्तुयस्तिष्ठतिनिरामयः ॥ जितमेवमनस्तेनबाह्यंप्रसरमुज्झता ॥ ६ ॥
स्वायत्तमेकांतहितंस्वेप्सितत्यागवेदनम् ॥ यस्यदुष्करतांयातंधिक्तंपुरुषकीटकम् ॥ ७ ॥ शा
स्त्रसंगमतीक्ष्णेनाचिंतातप्तमतापिना ॥ छिंधित्वमायसेनायोमनसैवमुनेमनः ॥ ८ ॥ स्वपौरु
षैकसाध्येनस्वेप्सितत्यागरूपिणा ॥ मनःप्रशममात्रेणविनानास्तिशुभागतिः ॥ ९ ॥

षयत्यागःसएववेदनंवेदनोपायत्वात् ॥ ७ ॥ इष्टवस्तुत्यागोनामजयोपायश्चेत्तर्हितत्त्यागस्यकउपायइत्यतआह ॥ शास्त्रेति ॥ शास्त्रसं
गमोऽध्यात्मशास्त्रश्रवणादिः । यद्वा संगमःसाधुसंगतिः । यथालोहकारोऽभितप्तमयस्तद्विपरीतेनशस्त्रसंबंधीघर्षणपाषाणादिस्तत्संगमे
नाधारेण छेदनदक्षेण अयसाछिनत्ति तद्वद्योगक्षेमचिंताभिस्तप्तंअविवेकिमनोऽतापिनाचिंताभिरसंक्षुब्धेनविवेकशालिमनसाछिंधि ॥८॥
मनोनिग्रहंविनापिपुरुषार्थप्राप्तिमाशंक्याह ॥ स्वेति ॥ स्वेप्सितत्यागसाध्यत्वादुपचारात्स्वेप्सितत्यागरूपिणा ॥ ९ ॥

कासौशुभागतिरित्यतआह ॥ सर्वमिति ॥ संकल्पनंशोभनाशोभनाध्यासलक्षणंतदभावोऽसंकल्पनंतदेवशस्त्रंतेन संकल्पशब्दितशोभना शोभनाध्यासाभ्यांहिरागद्वेषावुत्पद्येते तत्त्यागेतयोरनुदयाच्चित्तंजितमेवभवतीत्यसंकल्पनमेवशस्त्रमित्युक्तम् ॥ १० ॥ मनोनिग्रहंविना शुभगतेरभावेतदर्थंतन्निग्रहःकार्यइत्याह ॥ तांमहापदवीमित्यादिश्लोकत्रयेण ॥ महापदवीतिब्रह्मोच्यते साहिमहापदवीयस्यामनंताजीवा युगपदेवासंबाधंसंचरंति। कामप्यतर्क्यामित्यर्थः। अधिवसन्नधिरुह्यवसन्। तस्यांमनोधारयन्नित्यर्थः। चिद्भक्षितंचिंताग्रस्तंचित्तंचिन्मात्रशे



सर्वंसर्वगतंशांतंब्रह्मसंपद्यतेतदा ॥ असंकल्पनशस्त्रेणछिन्नंचित्तंगतंयदा ॥ १० ॥ तांमहापद वीमेकांकामप्यधिवसंश्चिरम् ॥ चित्तंचिद्भक्षितंकृत्वाचित्तादपिपरोभव ॥ ११ ॥ भवभावन यामुक्तोयुक्तःपरमयाधिया ॥ धारयात्मानमव्यग्रोग्रस्तंचित्तंततःपरम् ॥ १२ ॥ परंपौरुषमा श्रित्यनीत्वाचित्तमचित्तताम् ॥ तांमहापदवीमेहियत्रनासिनचेतरत् ॥ १३ ॥ अनुद्वेगःश्रियो मूलमनुद्वेगात्प्रवर्तते ॥ जंतोर्मनोजयोयेनत्रिलोकीविजयस्तृणम् ॥ १४ ॥ ध्यानतोहृदयाका शेचितिचिच्चक्रधारया ॥ मनोमारयनिःशंकंततोबध्नंतिनाधयः ॥ १५ ॥

षंकृत्वेत्यर्थः ॥ ११ ॥ आत्मानंचित्तंधारयब्रह्मणि ततःपरंचित्तंचिंताग्रस्तंभवति ॥ १२ ॥ मनुष्योऽहंअमुष्यपुत्रःकर्ताभोक्तेत्यभिमन्यमान स्त्वंयत्रनासि यस्यांपदव्यांनभवसि त्वदितरज्जगच्चनास्तितामद्वितीयांब्रह्माभिधानमहापदवीमेवैहिगच्छ ॥ १३ ॥ अद्यापिमनोजयोनसि द्ध्येद्विक्षेपस्यतज्जयविघातकत्वात्सनकर्तव्योमनोजयेप्रवृत्तेनेत्याह ॥ अनुद्वेगइति ॥ तथाचोक्तंभगवता। सनिश्चयेनयोक्तव्योयोगोनिर्वि ण्णचेतसा इति। येनमनोजयेनत्रिलोकीविजयस्तृणं त्रैलोक्यविजयोऽपितृणवत्प्रतिभातीत्यर्थः ॥ १४ ॥ पुनरपिमनोनिग्रहोपायमाह ॥

ध्यानतइति॥हृदयाकाशेंऽतःकरणवृत्तीनांभावाभावयोःसंधेश्वसाक्षितयाप्रतीयमानायांचितिविषयेध्यानतःप्रवृत्तयाचिच्चक्रधारयाज्ञानचक्र धारया ॥ १५ ॥ ननुचित्तस्यस्वभावतोबाह्यप्रवणत्वादात्मध्यानमेवनसंभवतीत्यतआह ॥ यदीति ॥ विदाविवेकिनात्वयारम्यंरमणीयंव स्तुअरम्यत्वेऽरमणीयतयामन्नतयासंविदितंयदि रमणीयताबुद्धिगृहीतंअरमणीयतयाविज्ञातंयदीत्यर्थः । तत्तर्हिरागमूलस्यविषयेषुरमणीय ताध्यासस्यनिवृत्त्यारागनिवृत्तेःचित्तस्यांगानिवृत्तयश्छिन्नान्येवभवंति ॥१६॥ असंकल्पनशस्त्रेणछिन्नमितियदुक्तंतन्मनःस्वरूपकथनपूर्वकं

यदिरम्यमरम्यत्वेत्वयासंविदितंविदा ॥ छिन्नान्येवतदंगानिचित्तस्येतिमतिर्मम ॥ १६ ॥ अयंसो ऽहमिदंतन्मेएतावन्मात्रकंमनः ॥ तदभावनमात्रेणदात्रेणेवविलूयते ॥ १७ ॥ छिन्नाभ्रमंडलंव्योम्नि यथाशरदिधूयते ॥ वातेनाकल्पनेनैवंतथांतर्धूयतेमनः ॥ १८ ॥ कल्पांतपवनावांतुयांतुचैकत्वम र्णवाः ॥ तपंतुद्वादशादित्यानास्तिनिर्मनसःक्षतिः ॥ १९॥ असंकल्पनमात्रैकसाध्येसकलसिद्धिदे ॥ असंकल्पातिसाम्राज्येतिष्ठावष्टब्धतत्पदः ॥ २० ॥ संकल्पमात्रविभवेनमनोरिणात्वंनिर्जीयसेविवि धवस्तुनिदर्शनेन ॥ संतोषमात्रविभवेनमनोविजित्यनित्योदितेनसुखमेहिनिरीप्सितेन ॥ २१ ॥

प्रपंचयति ॥ अयमित्यादिना॥ अयमहमस्मिसोऽहमस्मीत्यभिज्ञाप्रत्यभिज्ञे इदंसंनिहितंवस्तुएतद्व्यवहितंवस्तुएतदिदंवस्तुममेत्यादियोज नीयम् । एतावन्मात्रकंएतावत्परिमाणंतदभावनमात्रेणअसंकल्पमात्रेणसंकल्पत्यागेनेतियावत् । दात्रेणलवित्रेणछेदनसाधनेनविलूयतेसं छिद्यते ॥ १७ ॥ अकल्पनेनअसंकल्पेन ॥ १८ ॥ कल्पांतेत्यादयःप्रायेणस्पष्टार्थाः ॥ १९ ॥ असंकल्पातिसाम्राज्ये असंकल्पोनिर्वि कल्पसमाधिःसएवातिसाम्राज्यंअतिशयितसाम्राज्यंतस्मिन्नवष्टब्धतत्पदःअवलंबितब्रह्मस्वरूपः ॥ २० ॥ संतोषमात्रविभवेनमनसामनोवि

जित्यनित्योदितेन स्वयंप्रकाशत्वात्सर्वदाभातेनतुर्येणेत्यर्थः । तस्यविशेषणं निरीप्सितेनेति निरभिलषितेन ॥ २१ ॥ संतोषवत्समताया अपिमनोनिग्रहांगतांदर्शयन्नुपसंहरति ॥ परमपावनयेति ॥ आत्मविदांमतयासंमतया इष्टानिष्टप्राप्तौहर्षविषादरहितताल‌क्षणसमतया । तत्पूर्वकध्यानाभ्यासेनेत्यर्थः । मितयापरिच्छिन्नया अहंतया अहंभावेनशमितयाहेतुनामितयासत्यया यदवशिष्टंपदंतदस्त्वित्यन्वयः । समतापूर्वकध्यानाभ्यासेनाहंकारेशमितेयदनिदंरूपंतुरीयाख्यमवशिष्टंभवति तत्त्वमास्त्वित्यर्थः ॥ २२ ॥ नहिचंचलताहीनमित्यादयोयत्तत्सदसतो

परमपावनयाहिमशीतयासमतयामतयात्मविदामपि ॥ शमितयामितयांतरहंतयायदवशिष्ट मजंपदमस्तुतत् ॥ २२ ॥ वसिष्ठउवाच ॥ नहिचंचलताहीनंमनःक्वचनविद्यते ॥ चंचलत्वंमनोधर्मोवह्नेर्धर्मोयथोष्णता ॥ २३ ॥ यैषाहिचंचलास्पंदशक्तिश्चित्तत्त्वसंस्थिता ॥ तांविद्धिमानसीं शक्तिंजगदाडंबरात्मिकाम् ॥ २४ ॥ यत्तुचंचलताहीनंतन्मनोऽमृतमुच्यते ॥ तदेवचतपःशास्त्रं सिद्धांतोमोक्षउच्यते ॥ २५ ॥ तस्यचंचलतायैषात्वविद्यारामसोच्यते ॥ वासनापरनाम्नीं तांविचारेणविनाशय ॥ २६ ॥ अविद्ययावासनयातयांतश्चित्तसत्तया ॥ विलीनयात्याग वशात्परंश्रेयोऽधिगम्यते ॥ २७ ॥

र्मध्यमित्यतःप्राक्तनाःश्लोकाःप्रायेणस्पष्टार्थाः ॥ २३ ॥ २४ ॥ तदेवमनसोऽमृतत्वमेवशास्त्रंशास्त्रश्रवणंतत्फलत्वात्प्रामाणिकत्वेनोरीकृतोऽर्थःसिद्धांतः । तदेवमोक्षउच्यतेतदुपायत्वात् ॥ २५ ॥ अविद्याकार्यत्वात् अविद्योच्यते । वासनामूलत्वाद्वासनापरनाम्नीम् ॥ २६ ॥ त्यागवशादभिमतवस्तुत्यागवशात्विलीनया । उक्तंचपूर्वम् । त्यजन्नभिमतंवस्तुयस्तिष्ठतिनिरामयः । जितमेवमनस्तेनबाह्यंप्रसरमुज्झता इति ॥ २७ ॥

ज्ञानाभ्यासेनैवमनसोमारणीयतांवक्ष्यंस्तस्यस्वरूपकथनपूर्वकंयथाभ्यासंनिष्पद्यमानरूपतामाह ॥ यत्तत्सदसतोरित्यादिश्लोकचतुष्टयेन ॥ सदसतोरात्मानात्मनोर्मध्यंमध्यस्थं यथालोकेमध्यस्थमुभयानुकूलंभवत्येवंमनआत्मानात्मानुकूलंभवति अतउपायविशेषेणजेतव्यमित्यभिप्रायः।आत्मानात्मधर्मयोरपिचैतन्यजाडययोरनुकूलंमनइत्याह। यन्मध्यंचित्तजाडययोरिति। द्वयदोलायिताकृति अहमिदंवृत्तिद्वयात्मनापरिणामलीलत्वादुक्तद्वयेदोलायिताआकृतिराकारोयस्यतत्तथा ॥२८॥ जाडयानुसंधानहृतंजडचिंतापरवशीकृतंचेतोदृढाभ्यासवशेनेद्धया

यत्तत्सदसतोर्मध्यंयन्मध्यंचित्तजाड्ययोः ॥ तन्मनःप्रोच्यतेरामद्वयदोलायिताकृति ॥ २८ ॥
जाडयानुसंधानहृतंजाडयात्मकतयेद्धया ॥ चेतोजडत्वमायातिदृढाभ्यासवशेनहि ॥ २९ ॥
विबोधैकानुसंधानाच्चिदंशात्मतयामनः ॥ चिदेकतामुपायातिदृढाभ्यासवशादिह ॥ ३० ॥
पौरुषेणप्रयत्नेनतस्मिन्नेवपदेमनः ॥ योज्यतेतत्पदंप्राप्यभवत्यभ्यासतोहियत् ॥ ३१ ॥ अतः
पौरुषमाश्रित्यचित्तमाक्रम्यचेतसा ॥ विशोकंपदमालंब्यनिरातंकःस्थिरोभव ॥ ३२ ॥

दीप्तयाभिवृद्धयाजाडयात्मकतया जडत्वमायाति जडभावंप्राप्नोति जडदेहादिप्रधानंभवतीत्यर्थः। उपलभ्यतेहिप्राकृतानांमनस्तादृशम् २९ विशिष्टोबोधोविबोधःसाक्षीतस्मिन्नेकस्मिन्नेवानुसंधानंविबोधैकानुसंधानं तस्माच्चिदंशेतिविशेषणमत्राप्याकर्षणीयम् । चिदंशोऽनिदमंशआत्मास्वरूपंयस्यमनसस्तच्चिदंशात्म तस्यभावस्तत्ता तयाहंब्रह्मास्मीतिनिरंतरानुसंधानात्मनश्चिदाकारंसंचितोभेदेनाविभाव्यमानस्वरूपंअवतिष्ठतइत्यर्थः ॥ ३० ॥ उक्तंविशदयति ॥ पौरुषेणेति ॥ पदेवस्तुनि ॥ ३१ ॥ फलितमाह ॥ अतइति ॥ चेतसाविवेकिनाचित्तेन । निरातंकोनिरामयः निरुपद्रवइत्यर्थः ॥ ३२ ॥

चित्तादन्येनापिचित्तस्याक्रमणाशंकायामाह ॥ मनएवेत्यादि ॥ ३३ ॥ ग्राहोनक्रः आवर्तैः दाराद्यावर्तैः दूरमूह्यमानानामितिसंबंधः ॥३४॥ ॥ ३५ ॥ मनसामनश्छेदप्रकारमेवसंक्षेपविस्तराभ्यामाह ॥ ययोदेतीत्यादिश्लोकद्वयेन ॥ वासनेति ॥ वासनामूलावृत्तिर्गृह्यते । वासितंसंस्कृतंअंतरंमनःप्रदेशोययासावासितांतरा । वृत्त्याहिनष्टयांतःकरणेसंस्कारोजन्यतइतिवेदांतिनआचक्षते । तार्किकास्तुवृत्त्यैवज्ञानाख्ययेति ।

मनएवसमर्थंहिमनसोदृढनिग्रहे ॥ अराजाकिंसमर्थःस्याद्राज्ञोराघवनिग्रहे ॥ ३३ ॥ तृष्णाग्राहगृहीतानांसंसारार्णवपातिनाम् ॥ आवर्तैरूह्यमानानांदूरेस्वंमनएवनौः ॥ ३४ ॥ मनसैवमनश्छित्वापाशंपरमबंधनम् ॥ भवादुत्तारयात्मानंनासावन्येनतार्यते ॥ ३५ ॥ ययोदेतिमनोनाम्नीवासनावासितांतरा ॥ तांतांपरिहरेत्प्राज्ञस्ततोऽविद्याक्षयोभवेत् ॥ ३६ ॥ भोगैकवासनांत्यक्त्वात्यजत्वंभेदवासनाम् ॥ भावाभावौततस्त्यक्त्वानिर्विकल्पःसुखीभव ॥३७॥ एषएवमनोनाशस्त्वविद्यानाशएवच ॥ यद्यत्संविदितंकिंचित्तत्रास्याःपरिवर्जनम् ॥ ३८ ॥ अनास्थैवहिनिर्वाणंदुःखमास्थापरिग्रहः ॥ अनेनैवप्रयत्नेनब्रह्मसंपद्यतेक्षणात् ॥३९॥ अविद्याऽविद्यमानैवनष्टप्रज्ञेषुविद्यते ॥ नाम्नैवांगीकृताकारासम्यक्प्रज्ञस्यसाकुतः ॥ ४० ॥

ततोभेदबुद्धित्यागात् अनंतरंभावाभावौभेदिनौत्यक्त्वातद्विषयविकल्पौत्यक्त्वेत्यर्थः ॥ ३६ ॥ ३७॥ एषएवेत्यादिद्वयंस्पष्टार्थम् । प्रयत्नेनविषयेषुरमणीयताध्यासत्यागविषयेणेत्यर्थः ॥ ३८ ॥ ३९ ॥ नन्वविद्यायाविद्यमानत्वान्मनइवज्ञानेननिवृत्त्यसंभवात् तन्निवर्तकज्ञानलाभाय मनोनिरोधतदुपायोपन्यासोव्यर्थइत्याशंक्याह ॥ अविद्येति ॥ अविद्यमानेतिपदच्छेदः । नाम्नैवाविद्यानाम्नैवाभावएवहिनाम्नो

मुख्योऽर्थः ॥ ४० ॥ सम्यक्प्रज्ञस्यसाकुतइत्युक्तमर्थंतावत्संसारभृगुष्वित्यादिनाप्रपंचयितुंरामस्यप्रश्नमुत्थापयति ॥ अविद्याविभवप्रोत्थमि
ति ॥ अज्ञानैश्वर्योद्भूतम् ॥ ४१ ॥ दुःखान्येवकंटकशाखिनःकंटकवृक्षाः नीरंध्राःकंटकशाखिनोयेषुतेतथोक्तास्तेषु संसारभृगुषुसंसारसानुष्वां
दोलयति ॥ ४२ ॥ ४३ ॥ अस्याःशिष्टरूपेणस्थितायाअविद्यायाइत्यतःपरंपरमात्मानम् । पूर्वार्धोक्तंविशदयति ॥ दृष्टइति ॥ ४४ ॥स
र्वगतबोधशब्दितब्रह्मणोदर्शनस्यकउपायइत्याशंक्य विषयेष्विच्छायांसत्यांश्रवणादेरपिवैयर्थ्यात्तेषुवैतृष्ण्यमेवतदुपायइत्याशयेनाह ॥ इ

श्रीरामउवाच ॥ अविद्याविभवप्रोत्थंनिबिडंपुरुषस्यहि ॥ नश्यत्यांध्यंकथमिदंभूयोऽपिभगवन्वद
॥ ४१ ॥ वसिष्ठउवाच ॥ तावत्संसारभृगुषुस्वात्मनासहदेहिनाम् ॥ आंदोलयतिनीरंध्रदुःखकंटकशा
खिषु ॥ ४२ ॥ अविद्यायावदस्यास्तुनोत्पन्नाक्षयकारिणी ॥ स्वयमात्मावलोकेच्छामोहसंक्षयदायिनी
॥ ४३ ॥ अस्याःपरंप्रपश्यंत्याःस्वात्मनाशःप्रजायते ॥ दृष्टेसर्वगतेबोधेस्वयंह्येषाविलीयते ॥ ४४ ॥
इच्छामात्रमविद्येयंतन्नाशोमोक्षउच्यते ॥ सचासंकल्पशस्त्रेणसिद्धोभवतिराघव ॥ ४५ ॥ मनागपिम
नोव्योम्निवासनारजनीक्षये ॥ कालिकातनुतामेतिचिदादित्यप्रकाशनात् ॥ ४६ ॥ श्रीरामउवाच ॥ या
वत्किंचिदिदंदृश्यंसाविद्याक्षीयतेचसा ॥ आत्मभावनयाब्रह्मन्नात्मासौकीदृशःस्मृतः ॥ ४७ ॥

च्छामात्रमिति ॥ इच्छानाशस्तर्हिकेनसिद्ध्यतीत्यतआह ॥ सचेति ॥ विषयेषुरमणीयताध्यासःसंकल्पस्तदभावोऽसंकल्पःसएवशस्त्रंतेन
॥ ४५ ॥ ईषद्वैराग्यमपिफलायसंकल्पते किमुवक्तव्यंपूर्णवैराग्यमित्याशयेनाह ॥ मनागिति ॥ मनाक्किंचिद्वासनात्रविषयेच्छा तत्प्रकरणा
त् । कालिकातिमिरसंहतिः । वासनैवरजनीरात्रिस्तस्यामनागपिक्षयेसतिचिदेवादित्यस्तस्यप्रकाशनात् अविद्याकालिकातनुतांकृशतामे
ति ॥ ४६ ॥यावत्किंचिदिति ॥ स्पष्टार्थः ॥ ४७ ॥

चेत्यानुपातरहितंज्ञेयानुगतिशून्यंयथांतःकरणंशब्दादीन्ज्ञेयाननुगच्छति नैवंचित्तत्त्वंताननुगच्छतीत्यर्थः। सामान्येनसमतयैवन्यूनाधिक भावंविनैवसर्वगंचितस्तत्त्वमबाधितरूपंचित्तत्त्वं सर्वस्याभावादेवसर्वगमित्यपि अनाख्येयम्। यद्वा शब्दप्रवृत्तिनिमित्ताभावादनाख्येयम्। विषयसंनिधावपिनिर्विकारं अशेषविशेषरहितंपरिपूर्णसत्यंयच्चैतन्यंतदात्मेत्यर्थः। तस्यचब्रह्मणःसकाशाद्भेदंव्युदस्यति ॥ परमेश्वरइति ॥ ॥४८॥तस्यवस्तुपरिच्छेदंकालपरिच्छेदंचव्युदस्यति॥ सर्वंचखल्विति ॥ अव्ययमित्यपक्षयंवारयति सर्वमिदंब्रह्मेति बाधायांसामानाधिकरण्यं अतएवाह॥ कल्पनान्येति ॥ सर्वापिकल्पनामनोविलासएवेति मनोनाम्नीत्युक्तम्॥ ४९॥ नन्वसतोवंध्यापुत्रादेर्जन्माद्यदर्शनात्जन्मादि

वसिष्ठउवाच ॥ चेत्यानुपातरहितंसामान्येनचसर्वगम्॥ यच्चित्तत्त्वमनाख्येयंसआत्मापरमेश्वरः॥ ४८॥ सर्वंचखल्विदंब्रह्मनित्यंचिद्घनमव्ययम्॥ कल्पनान्यामनोनाम्नीविद्यतेनाहिकाचन॥ ४९॥ नजायतेनाम्रियतेकिंचिदत्रजगत्त्रये॥ नचभावविकाराणांसत्ताक्कचनविद्यते॥ ५०॥ केवलंकेवलाभासंसर्वसामान्यमक्षयम्॥ चेत्यानुपातरहितंचिन्मात्रमिहविद्यते॥ ५१॥ तस्मिन्नित्येततेशुद्धेचिन्मात्रेनिरुपद्रवे॥ शांतेसमसमाभोगेनिर्विकारोदितात्मनि ॥ ५२॥

षड्भावविकारवत्तयोपलभ्यमानंजगत्कथंतत्रविद्यतइत्यतआह॥ नजायतइति॥ यस्माज्जगजन्मादिनिरूपणानर्हंतस्मात्सत्तानविद्यतइतियुक्तमुक्तम्॥ ५०॥ उपसंहरति॥ केवलमिति॥ केवलमद्वितीयं केवलाभासं केवलं प्रमाणव्यापारंविनैवाभासतेप्रकाशतइतिकेवलाभासं स्वयंप्रकाशमित्यर्थः। सर्वसामान्यंसममेवसामान्यंब्रह्मादिस्तंबपर्यंतेष्वन्यूनाधिकतयावस्थितमित्यर्थः। चेत्यानुपातरहितं चेत्येषुज्ञेयेषुशब्दादिष्वनुपातस्तदाकारपरिणामस्तेनशून्यम्॥ ५१॥ उक्तस्वरूपमनूद्यतस्मिन्नधिष्ठानेतद्विपरीतद्वैतानर्थकल्पकमाह ॥ तस्मिन्नित्यादिना

त्रयेण ॥ ततेव्याप्तेसमसमोऽत्यंतंसमः आभोगः परिपूर्णतायस्यतत्समसमाभोगं तस्मिन्निर्विकारतयाउदितोभातआत्मास्वरूपंयस्यतन्निर्वि कारोदितात्म तस्मिन् ॥ ५२ ॥ यैषेति ॥ स्वभावंसत्यज्ञानादिस्वरूपमतिगतमतिक्रांतंस्वभावातिगतं स्वभावविपरीतंजडादिरूपंचेत्यं दृश्यंसंकल्प्य याचिज्जडाजडलक्षणास्वसंकल्पितंचेत्यमेवानुधावति नाधिष्ठानचिन्मात्रं सास्वयमम्लानास्वतोब्रह्मरूपत्वान्म्लानिरहिताप्युप द्रवरहिताप्युपाधिसंश्लेषातूम्लानेवप्रतीयमानामनएवोच्यते। तदुपाधित्वात्। मन्वानोमनइतिश्रुतेः ॥ ५३ ॥ विभागकल्पनाशक्तिःभेदक

यैषास्वभावातिगतंस्वयंसंकल्प्यधावति ॥ चिच्चेत्यंस्वयमम्लानामननान्मनउच्यते ॥ ५३ ॥ एतस्मात्सर्वगाद्देवात्सर्वशक्तेर्महात्मनः ॥ विभागकल्पनाशक्तिर्लहरीवोत्थितांभसः ॥ ५४ ॥ अतःसंकल्पसिद्धेयंसंकल्पेनैवनश्यति ॥ येनैवजातातेनैववन्हिज्वालेववायुना ॥ ५५ ॥ नाहं ब्रह्मेतिसंकल्पात्सुदृढाद्बध्यतेमनः ॥ सर्वंब्रह्मेतिसंकल्पात्सुदृढान्मुच्यतेमनः ॥ ५६ ॥ कृशो ऽतिदुःखीबद्धोऽहंहस्तपादादिमानहम् ॥ इतिभावानुरूपेणव्यवहारेणबध्यते ॥ ५७ ॥ नाहंदुः खीनमेदेहोबंधःकस्यात्मनःस्थितः ॥ इतिभावानुरूपेणव्यवहारेणमुच्यते ॥ ५८ ॥ नाहंमांसं नवास्थीनिदेहादन्यःपरोऽस्म्यहम् ॥ इतिनिश्चयवानंतःक्षीणाविद्योविमुच्यते ॥ ५९ ॥

ल्पनाशक्तिरुत्थितासांभसोमनोरूपेणोद्गतालहरीवोर्मिरिव ॥ ५४ ॥ एवंद्वैतानर्थमूलंप्रदर्श्यतन्नाशोपायमाह ॥ अतइति ॥ यतइयंमनो नाम्नीविभागकल्पनाशक्तिरुचितकारणरहिता नहिब्रह्मनिर्विकारंवस्तुतदुचितंकारणंभवितुमर्हति अतःसंकल्पसिद्धाप्रतिभाससिद्धा साचसं कल्पेनैववक्ष्यमाणेनसर्वंब्रह्मेत्येवंरूपेणनश्यति। येनैवे[illegible] श्लोकाःस्पष्टार्थाः ॥५५॥५६॥५७॥५८॥५९॥

॥ ६० ॥ नकेवलंसंकल्पितेनमनसोबंधकत्वं संकल्पितार्थेष्विंद्रियप्रवर्तकतयापीत्याह ॥ मनोयदन्विति ॥ ६१ ॥ यतःसत्यायामेवरागवासनायांमनसोऽपिबंधकत्वंनासत्यायामतःसात्याज्येत्याह ॥ परंपौरुषमिति ॥ भोगाशाभावनांभोगवासनांमूलेनाध्यासलक्षणेनसहवर्ततइति समूला ताम् ॥ ६२ ॥ तर्ह्यभ्यासलक्षणमूलोद्धरणार्थंकिंकार्यमित्याशंक्य तन्मूलवासनोद्धरणंकार्यमित्याह ॥ ममपुत्राइति ॥ इंद्रजालेने



कल्पितैवमविद्येयमनात्मन्यात्मभावना ॥ पुरुषेणाप्रबुद्धेननप्रबुद्धेनराघव ॥ ६० ॥ मनोयदनुसंधत्तेतत्सर्वेंद्रियवृत्तयः ॥ क्षणात्संपादयंत्येताराजाज्ञामिवमंत्रिणः ॥ ६१ ॥ परंपौरुषमाश्रित्ययत्नात्परमयाधिया ॥ भोगाशाभावनांचित्तात्समूलामेवमुद्धरेत् ॥ ६२ ॥ ममपुत्राममधनमयंसोऽहमिदंमम ॥ इतीयमिंद्रजालेनवासनैवाधिवल्गति ॥ ६३ ॥ माभवाज्ञोभवज्ञस्त्वंजहिसंसारवासनाम् ॥ अनात्मन्यात्मभावेनकिमज्ञइवरोदिषि ॥ ६४ ॥ कस्तवायंजडोमूकोदेहोभवतिराघव ॥ यदर्थंसुखदुःखाभ्यामवशःपरिभूयसे ॥ ६५ ॥ अहोनुचित्रंयत्सत्यंब्रह्मतद्विस्मृतंनृणाम् ॥ यदसत्यमविद्याख्यंतत्पुरःपरिवल्गति ॥ ६६ ॥ तिष्ठतस्तवकार्येषुमास्तुरागानुरंजना ॥ स्फटिकस्येवचित्राणिप्रतिबिंबानिगृह्णतः ॥ ६७ ॥

तीत्थंभावेत्तृतीया । इंद्रजालस्वरूपकथनंममपुत्राइत्यर्धेन ॥ ६३ ॥ ६४ ॥ कस्तवेतिस्पष्टार्थः ॥ ६५ ॥ अनुक्रोशव्याजेनाविद्यानिरासाय प्रोत्साहयति ॥ अहोन्विति ॥ ६६ ॥ अविद्यानिरासायप्रयतमानेनअवर्जनीयानिभुक्त्यादिकार्याणिकुर्वतापिनतत्ररागःकार्यइत्याह ॥ ॥ तिष्ठतइति ॥ रागानुरंजनारागानुषंगः ॥ ६७ ॥

॥६८॥ पञ्जोत्थतंतुभिरद्रिबंधनतुल्यंकिमत्राश्चर्यंदृष्टंतत्राह ॥ अविद्यमानेत्यादि ॥ खिलीकृतंरिक्तीकृतं पुरुषार्थरहितंकृतमित्यर्थः॥६९॥सर्गः प्रपंचः अपिशब्दोनामशब्दश्चकुत्सने अविद्ययापि सर्गोनिगडबंधनइतियन्नामतस्मात्तृणमात्रंतदिदंजगत्त्रयंवज्रतांप्राप्तमित्यन्वयः ॥७०॥

वाल्मीकिरुवाच ॥ एवमुक्तोभगवतावसिष्ठेनमहात्मना ॥ विकासितांतःकरणोरामोगिरमथाददे॥६८॥ श्रीरामउवाच ॥ अहोविचित्रंपञ्जोत्थैर्बद्धास्तंतुभिरद्रयः ॥ अविद्यमानायाविद्यातयाविश्वंखिलीकृतम् ॥ ६९ ॥ इदंतद्वज्रतांयातंतृणमत्रजगत्त्रये ॥ अविद्ययापियन्नामसर्गोनिगडबंधनः ॥ ७० ॥ अन्यच्चसंशयोऽयंमेमहात्मन्हृदिवर्तते ॥ लवणोऽसौमहाभागःकिंनामापदमाप्तवान् ॥ ७१ ॥ वसिष्ठउवाच॥ अत्रतेशृणुवक्ष्यामिवृत्तांतमिमद्भुतम् ॥ लवणोऽसौयथाजातश्चंडालत्वंमनोभ्रमात् ॥ ७२ ॥ मनःकर्तृफलंभुंक्तेनशरीरंक्रियाफलम् ॥ येनैतद्बुध्यसेनूनंतदाकर्णयराघव ॥ ७३ ॥ हरिश्चंद्रकुलोत्थेनलवणेनपुरानघ ॥ एकांतैकोपविष्टेनचिंतितंमनसाचिरम् ॥ ७४ ॥ पितामहोमेसुमहान्राजसूयस्ययाजकः ॥ अहंतस्यकुलेजातस्तंयजेमनसामखम् ॥ ७५ ॥ इतिसंचिंत्यमनसाकृत्वासंभारमग्रतः ॥ राजसूयस्यदीक्षायांप्रविवेशमहीपतिः ॥ ७६ ॥

अन्यच्चप्रष्टव्यमस्तीतिशेषः ॥ ७१ ॥ ७२ ॥ वक्ष्यमाणवृत्तांतकथनफलमाह ॥ मनइति ॥ साभासंमनएवकर्तृ तदेवचफलंक्रियाफलंभुंक्ते न शरीरं येनवृत्तेन तद्वृत्तमाकर्णयशृणु ॥ ७३ ॥ ७४ ॥ मखंक्रतुं यजेकुर्वे इत्यन्वयः ॥ ७५ ॥ मनसेतिपदं दीक्षायामित्यनेनापिसंबध्यते । सप्तमीद्वितीयार्थे ॥ ७६ ॥

॥ ७७ ॥ अग्रेणाधिकेनसहवर्ततइतिसाग्रः । ईषदधिकःसंवत्सरोगतइतितस्यमनसिप्रतिभातं नवस्तुतःसाग्रसंवत्सरोगतः व्यबुध्यतदिन स्यांतइतिवक्ष्यमाणविरोधात् ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ शांबरिकऐंद्रजालिकः । लावणींलवणराजसंबंधिनीम् ॥ ८२ ॥ शंबर



ऋत्विजश्चाह्वयामाससन्मुखीकृत्यदेवताः ॥ देवानामंत्रयामासज्वालयामासपावकम् ॥ ७७ ॥ तस्येत्थंयजमानस्यमनसोपवनांतरे ॥ ययौसंवत्सरःसाग्रोदेवर्षिद्विजपूजया ॥ ७८ ॥ भूतेभ्यो द्विजपूर्वेभ्योदत्वासर्वस्वदक्षिणाम् ॥ व्यबुध्यतदिनस्यांतेस्वएवोपवनेनृपः ॥ ७९ ॥ एवंसल वणोराजाराजसूयमवाप्तवान् ॥ मनसैवहिजुष्टेनयुक्तस्तस्यफलेनच ॥ ८० ॥ अतश्चित्तंपरंवि द्धिभोक्तारंसुखदुःखयोः ॥ जन्मनःपावनोपायेसत्येयोजयराघव ॥ ८१ ॥ शृणुशांबरिकस्या थवृत्तांतंरघुनंदन ॥ यदाशांबरिकःकालेसंप्राप्तोलावणींसभाम् ॥ ८२ ॥ तदाहमवसंतत्रतत्प्रत्य क्षेणदृष्टवान् ॥ अहंसभ्यैस्ततस्तत्रगतेशांबरकारिणि ॥ ८३ ॥ किमेतदितियत्तेनपृष्टेनपृथिवी भुजा ॥ चिंतयित्वामयादृष्ट्वातत्रतत्कथितंवचः ॥ ८४ ॥ शृणुतत्तेप्रवक्ष्यामिरामशांबरिकेहित म् ॥ राजसूयस्यकर्तारोयेहितेद्वादशाब्दिकम् ॥ ८५ ॥ अतिदुःखंप्राप्नुवंतिनानाकारदशामय म् ॥ अतःशक्रेणगगनाद्दुःखायलवणस्यसः ॥ ८६ ॥



स्यासुरस्येदंशांबरंइंद्रजालंतत्कारिणि ॥ ८३ ॥ ८४ ॥ तत्कारणं ईहितंचेष्टितम् । नानाकारदशामयं नानाकारावस्थाप्रचुरंद्वादशाब्दि कंदुःखमपिप्राप्नुवंतीतियदुक्तंनतद्राजसूयस्यपुरुषहितैकप्रवृत्तवेदविहितस्यफलम् ॥ ८५ ॥ ८६ ॥

किंतुतदानीमुद्बुद्धपूर्वंदुरितस्यैवेत्यवगंतव्यम् । महतीचासावापच्चमहापत्ताम् ॥८७॥८८॥ एवंकिंनामापदमाप्तवानिति प्रासंगिकप्रश्नस्यो त्तरमाख्यायेदानीम् । अविद्याविद्यमानैवनष्टप्रज्ञेष्ठविद्यते । नाम्नैवांगीकृताकारासम्यक्प्रज्ञस्यसाकुतः । इत्यत्रोक्ताहेयाविद्या । योपादेयावि द्यातांप्रज्ञानापरपर्यायविद्यांचोदितांसंक्षेपविस्तराभ्यांअवस्थाकथनादिनाप्रपंचयति । अज्ञानभूःसप्तपदेत्यादिना । अज्ञानमेवभूःभूमिः।यथा लोकेभूःस्वामिनेस्वानुकूलंफलंददाति तथाऽज्ञानमपिभूः साचसप्तपदान्यस्यांसंतीति सप्तपदावस्थोपेतेत्यर्थः । ज्ञभूर्ज्ञानभूमिरित्यर्थः ।

प्रहितोदेवदूतोहिरामशांबरिकाकृतिः ॥ राजसूयक्रियाकर्तुस्तस्यदत्वामहापदम् ॥८७॥ अगम तसनभोमार्गंसुरसिद्धनिषेवितम् ॥ ८८ ॥ वसिष्ठउवाच ॥ अतःपरंप्रवक्ष्यामिशृणुरामयथातथ म् ॥ अज्ञानभूःसप्तपदाज्ञभूःसप्तपदैवहि ॥ ८९ ॥ पदांतराण्यसंख्यानिभवंत्यन्योन्यमेतयोः ॥ एतेप्रतिपदंबद्धमूलेस्वंफलतःफलम् ॥ ९० ॥ स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोऽहंत्ववेदनम् ॥ एतत्संक्षिप्यतत्प्रोक्तंतज्ज्ञत्वाज्ञत्वलक्षणम् ॥ ९१ ॥ शुद्धसन्मात्रसंवित्तेःस्वरूपान्नचलंतिये॥ रागद्वेषादयोभावास्तेषांनाज्ञत्वसंभवः ॥ ९२ ॥

ज्ञस्यभूर्ज्ञभूरितिपक्षेऽपिसएवार्थः । हिशब्दोविद्वत्प्रसिद्धौ ॥ ८९ ॥ पदांतराण्यवांतरावस्थाइत्यर्थः । वक्ष्यतिच । एकैकाशतशाखात्रना नाविभवरूपिणीति । एतयोर्भूम्योःसप्तापिपदानिपृथक्पृथक्फलंप्रयच्छंति तानिचप्ररूढमूलान्येवनप्रशिथिलमूलानिफलंप्रयच्छंतीत्याह ॥ ए तेइति ॥ प्रतिपदमित्येतत्फलतइतिक्रियापदेनापिसंबध्यते ॥ ९० ॥ भूम्योःस्वामिनौलक्षयति ॥ स्वरूपेति ॥ तद्भ्रंशः स्वरूपावस्थितिलक्ष णमुक्तेःसकाशाद्भ्रंशः । तत्स्वरूपमेवाह ॥ अहंत्ववेदनमिति ॥ अहंभावज्ञानं अहमितिभ्रांतिरित्यर्थः ॥९१॥ नकेवलंमुक्तिशालीतज्ज्ञोऽहं

कारादिबंधशाल्यज्ञइतितयोर्लक्षणे रागादिराहित्यतत्साहित्येअपितयोर्लक्षणेइत्याह ॥ शुद्धेत्यादिना ॥१२॥ चेत्यार्थोऽहमादिर्ज्ञेयपदार्थः तद्विषयाचिच्चेत्यर्थंचिदहमादिज्ञेयपदार्थभ्रांतिः तस्यांमज्जनंनामतत्परत्वम् । मोहशब्देनमोहकार्यंगृह्यते । अहंकाराद्यध्यासपरत्वादन्यदति शयितंमोहकार्यंनभूतंनभविष्यति । इदमेवपरमंमोहकार्यंरागद्वेषादिसकलदोषनिदानत्वादित्यर्थः॥ १३॥ चित्तेअर्थादर्थांतरंविषयाद्विषयां तरंयातिगच्छतिसति मध्येवृत्त्योःसंधौयाद्द्रष्टुःस्थितिः। कीदृशीसेत्यतआह । निरस्तमननाकारानिरस्तविकल्पा । अयमर्थः । वृत्तिसंधिसाक्षित

यत्स्वरूपपरिभ्रंशश्चेत्यार्थंचितिमज्जनम् ॥ एतस्मादपरोमोहोनभूतोनभविष्यति ॥ १३ ॥ अ
र्थादर्थांतरंचित्तेयातिमध्येतुयास्थितिः ॥ निरस्तमननाकारास्वरूपस्थितिरुच्यते ॥ १४ ॥ सं
शांतसर्वसंकल्पायाशिलावदवस्थितिः ॥ जाड्यनिद्राविनिर्मुक्तासास्वरूपस्थितिःस्मृता ॥१५॥
अहंतांशेक्षतेशांतेभेदेनिष्पंदचित्तता ॥ अजडायाप्रकचतितत्स्वरूपमितिस्थितम् ॥ १६ ॥
बीजजाग्रत्तथाजाग्रन्महाजाग्रत्तथैवच ॥ जाग्रत्स्वप्नस्तथास्वप्नःस्वप्नजाग्रत्सुषुप्तकम् ॥ १७ ॥
इतिसप्तविधोमोहःपुनरेवपरस्परम् ॥ श्लिष्टोभवत्यनेकाख्यःशृणुतस्यचलक्षणम् ॥ १८ ॥

यायन्निर्विकल्पकंचैतन्यमस्तितदेवस्वरूपंतदात्मनावस्थितिःस्वरूपस्थितिरिति ॥ १४ ॥ संशांतसर्वसंकल्पेतिजागरितमोहार्थादित्या दिस्वरूपावस्थितिर्मुक्तिरित्युक्तं तत्रकासौस्वरूपावस्थितिरित्यतआह ॥ संशांतेति ॥ जागरितंव्युदस्यति ॥ जाड्यनिद्राविनिर्मुक्तेति ॥ सुषुप्तिस्वप्नौशिलावत्प्रकटपाषाणवदित्यर्थः । अवस्थात्रयमतीत्यतुरीयतयाऽवस्थानंस्वरूपस्थितिरित्यर्थः ॥ १५ ॥ अथयानिष्पंदचित्तता निश्चलचित्ततातत्साक्षिभूतेत्यर्थः । प्रकचतिप्रकाशतेतत्स्वरूपमितिस्थितम् ॥ १६ ॥ १७ ॥ वेदांतेषुअज्ञानभूःसप्तपदेत्युक्तंविवृणोति ॥

बीजजाग्रदित्यादिना नानाविभवरूपिणीत्यंतेन ॥ सप्तविधः सप्तप्रकारः । सप्तावस्थोमोहोऽज्ञानापरपर्यायःपरस्परंश्लिष्टःसंबद्धःसन्पुनरप्यनेकाख्योभवति । सप्तानामवस्थानांयथासंभवंसंभेदविशेषेणमोहःपुनरप्यनेकावस्थोभवतीत्यर्थः । तथाहि द्वयोरवस्थयोस्तिसृणांचतसृणांपंचानांषण्णांसप्तानांवाक्षणेक्षणेव्यत्ययेनउत्पादेसतिपुनरप्यनेकावस्थोभवति ॥ ९८ ॥ प्रथममिति ॥ सुषुप्तेरुत्थानेप्रथमंचितोविश्वरूपायाःसंबंधियच्चेतनंप्रतिबिंबलक्षणंतद्बीजंजाग्रदित्युच्यतइत्यन्वयः । चेतनंविशिनष्टि ॥ अनाख्यमित्यादिना ॥ अनाख्यंजीवाद्याख्ययातदानीमनुल्लेख्यं भविष्यच्चितिजीवादिनामशब्दार्थभाजनं भविष्यतांचितिजीवचेतनादिनामात्मकशब्दानांतदर्थानांचचित्तत्वप्राणभृत्त्वज्ञानकर्तृत्वादिलक्षणानांभाजनंपात्रमालंबनमित्यर्थः ॥ ९९ ॥ बीजजाग्रच्छब्दंविगृह्णाति ॥ बीजरूपमिति ॥ उत्तरावस्थानांबीजरूपेणस्थि

प्रथमंचेतनंयत्स्यादनाख्यंनिर्मलंचितः ॥ भविष्यच्चितिजीवादिनामशब्दार्थभाजनम् ॥९९॥
बीजरूपंस्थितंजाग्रद्बीजजाग्रत्तदुच्यते ॥ एषाज्ञप्तेर्नवावस्थात्वंजाग्रत्संस्थितिंशृणु ॥१००॥
नवप्रसूतस्यपरादयंचाहमिदंमम ॥ इतियःप्रत्ययःस्वच्छस्तज्जाग्रत्प्रागभावनात् ॥ १ ॥
अयंसोऽहमिदंतन्मइतिजन्मांतरोदितः ॥ पीवरःप्रत्ययःप्रोक्तोमहाजाग्रादितिस्फुरन् ॥ २ ॥

तंचतज्जाग्रच्चेतिबीजजाग्रदिति ॥ एषेतिबीजजाग्रत्परामृश्यते । विधेयावस्थानुरोधेनतस्यस्त्रीलिंगता । ज्ञप्तेर्जीवस्यनवानूतनावस्थावृक्षस्यांकुरावस्थेव ॥ १०० ॥ परात्परमात्मनोबिंबात् नवप्रसूतस्याभिनवजातस्यजीवस्येतियःप्रत्ययस्तज्जाग्रदितिसंबंधः । इतिशब्दपरामृष्टमाह ॥ यइति ॥ तत्रायंकार्यकारणसंघातोऽहमस्मीदंगृहादिकंममेत्येवंरूपोयःप्रत्ययोजाग्रन्नामावस्थांतरं नबीजजाग्रत् । कुतःअंकुरावस्थानंतरभावीद्विदलावस्थेव । नापिमहाजाग्रत् प्रागभावनात्पूर्वानुभवाभावात् पूर्वानुभवसंस्कारमपेक्ष्यहिप्रत्यभिज्ञारूपंमहाजाग्रज्जायते ॥१॥ जातिस्मरेपुरुषेमहाजाग्रद्दर्शयति ॥ अयंसोऽहमिति ॥ सोऽहमिति जन्मांतरानुभवसंस्काराडुत्पन्नइतियावत् । यद्वा पूर्वजन्मापेक्षाय

वर्तमानजन्मैवजन्मांतरंतस्मिन्प्राक्संस्काराडुदितःपीवरःपीनो दृढइत्यर्थः । अस्यचमहाजाग्रत्त्वंमहाकालस्पर्शितत्वात्पीवरत्वाच्चेतिज्ञेयम् । केचित्तु जन्मांतरोदितोवानंतरोदितइतिव्याचक्षाणाःसर्वसाधारणस्तादृशप्रत्ययोमहाजाग्रदितिमन्यंते ॥ २ ॥ अरूढमिति ॥ अरूढंअदृष्टं निष्पन्नं रूढंदृष्टंनिष्पन्नं तन्मयात्मकंतन्मयस्वरूपं विषयस्वरूपमित्यर्थः । मनोराज्यशब्देनात्रप्रमारूपस्मृतिविलक्षणःसर्वोऽपिप्रत्ययोगृह्यते ॥ ३ ॥ अतएवाह ॥ द्विचंद्रेति ॥ पूर्वंकदाचिदपि विषयानुभवेतद्विपर्यासायोगादभ्यासंप्राप्येत्युक्तम् ॥ ४ ॥ अल्पकालमिति ॥ प्रबु

अरूढमथवारूढंसर्वथातन्मयात्मकम् ॥ यज्जाग्रतोमनोराज्यंजाग्रत्स्वप्नःसउच्यते ॥ ३ ॥
द्विचंद्रशुक्तिकारूप्यमृगतृष्णादिभेदतः ॥ अभ्यासंजाग्रतःप्राप्यस्वप्नोऽनेकविधोभवेत् ॥ ४ ॥
अल्पकालंमयादृष्टमेतन्नोवेतियत्रहि ॥ परामर्शःप्रबुद्धस्यसस्वप्नइतिकथ्यते ॥ ५ ॥ चिरसं
दर्शनाभावादप्रफुल्लबृहद्वपुः ॥ चिरकालानुवृत्तश्चस्वप्नोजाग्रदिवोदितः ॥ ६ ॥ स्वप्नजाग्रदि
तिप्रोक्तोजाग्रत्यपिपरिस्फुरन् ॥ षडवस्थापरित्यागेजडाजीवस्ययास्थितिः ॥ ७ ॥ भवि
ष्यद्दुःखबोधाढ्यासौषुप्तीसोच्यतेगतिः ॥ जगत्तस्यामवस्थायामंधेतमसिलीयते ॥ ८ ॥

द्धस्यस्वप्नाडुत्थितस्यपरामर्शःयत्रयस्मिन्कालेभवतितदासस्वप्नइतिकथ्यतइतिसंबंधः । इतिशब्दपरामृष्टमाह ॥ अल्पेति ॥ एतन्नोवेतिसंशयः कथमतआह ॥ ५ ॥ चिरसंदर्शनाभावादिति ॥ अप्रफुलबृहद्वपुःअप्रफुल्लमविस्पष्टंबृहद्वपुःस्थूलंस्वरूपंयस्यसतथोक्तः । जाग्रदिवोदितः जागरितमिवविस्पष्टमुदितः ॥ ६ ॥ जाग्रत्यपिपरिस्फुरन् जागरेऽतिस्फुरणारूढतयास्पष्टंप्रकाशमानइत्यर्थः ॥७॥ भविष्यद्दुःखबोधाढ्या जाग्रत्स्वप्नयोर्भाविदुःखस्यबोधोऽनुभवःतदाढ्यातद्बीजवासनोपेतत्वात्तदाढ्यत्वम् । गतिरवस्थातमस्यज्ञानेंऽतर्लीयते संस्कारशेषमितिशेषः ८

नानाविभवरूपिणीविविधकार्यात्मिकेत्यर्थः ॥ ९ ॥ ज्ञभूःसप्तपदैवहीत्युक्तंविवृणोति ॥ इमांसप्तपदामित्यादिना ॥ ११० ॥ ११ ॥ अव
बोधोऽवगतिःसाक्षादनुभवः साप्तभूमिकंसप्तभूमिषुभवंसप्तावस्थोपेतमित्यर्थः ॥१२ ॥ १३ ॥ १४ ॥ निर्वचनंनिरुक्तिःनिकृष्यकथनम् ॥१५॥
अहंमूढएवकिमर्थंस्थितोऽस्मि । शास्त्रसज्जनैरुपायैःआत्मतत्त्वंप्रेक्षेप्रकर्षेणेक्षइत्यर्थः । इच्छावैराग्यपूर्विकाशुभेच्छेत्युच्यते इयंचप्रथमाभूमि

स्वप्नावस्थाइतिप्रोक्तामयाज्ञानस्यराघव ॥ एकैकाशतसंख्यात्रनानाविभवरूपिणी ॥९॥ वसिष्ठ
उवाच ॥ इमांसप्तपदांज्ञानभूमिमाकर्णयानघ ॥ नानयाज्ञातयाभूयोमोहपंकेनिमज्जति ॥११०॥
वदंतिबहुभेदेनज्ञानिनोयोगभूमिकाः ॥ ममत्वभिमतानूनमिमाएवसुखप्रदाः ॥ ११ ॥ अवबो
धंविदुर्ज्ञानंतदिदंसाप्तभूमिकम् ॥ मुक्तिस्तुज्ञेयमित्युक्ताभूमिकाभूमिकांतरे ॥ १२ ॥ ज्ञानभूमिः
शुभेच्छाख्याप्रथमासमुदाहृता ॥ विचारणाद्वितीयातुतृतीयातनुमानसा ॥ १३ ॥ सत्वाप
त्तिश्चतुर्थीस्यात्ततोऽसंसक्तिनामिका ॥ पदार्थाभावनीषष्ठीसप्तमीतुर्यगास्मृता ॥ १४ आसा
मंतेस्थितामुक्तिस्तस्यांभूयोनशोचति ॥ एतासांभूमिकानांत्वमिदंनिर्वचनंशृणु ॥ १५ ॥
किंमूढइवतिष्ठामिप्रेक्षेऽहंशास्त्रसज्जनैः ॥ वैराग्यपूर्वमिच्छेतिशुभेच्छेत्युच्यतेबुधैः ॥ १६ ॥
शास्त्रसज्जनसंपर्कोवैराग्याभ्यासपूर्वकम् ॥ सदाचारप्रवृत्तिर्याप्रोच्यतेसाविचारणा ॥ १७ ॥

कापुण्यकर्मफलभूतप्रत्यग्विविदिषारूपा । विविदिषंतियज्ञेनदानेनतपसानाशकेनेतिश्रुत्यादौप्रसिद्धा । तथाचश्रुतिः । तमेतंवेदानुवचनेनब्रा
ह्मणाविविदिषंति यज्ञेनदानेनतपसानाशकेनेति । तथाचवार्तिकम् । प्रत्यग्विविदिषांबुद्धेःकर्माण्युत्पाद्यशुद्धितः । कृतार्थान्यस्तमायांतिप्रावृ
डंतेघनाइवेति ॥ १६ ॥ अध्यात्मशास्त्रविचार[illegible]र्याविचारणेत्युच्यतेइतिनिर्वचनमभिप्रेत्याह ॥ शास्त्रेति ॥

शास्त्रसंपर्कोऽध्यात्मशास्त्रविचारणा सज्जनसंपर्कोब्रह्मनिष्ठसेवा। शास्त्रसज्जनसंपर्कैरुपायैर्वैराग्याभ्यासोनामवैराग्यहेतुभूतदृश्यमिथ्यात्वदोषदर्शनाभ्यासः एषाचद्वितीयाभूमिका ॥ १७॥ श्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रुत्युक्तश्रवणमननरूपांनिदिध्यासनात्मिकांतृतीयांभूमिकांनिर्वक्ति॥ विचारणेति ॥ यत्रयस्यामवस्थायांपूर्वभूमिकाभ्यांविचारणाशुभेच्छाभ्यांहेतुभ्यां इंद्रियार्थेष्वनात्मपदार्थेष्वरक्तताविरक्तताउदिता सावस्थातनुमानसोच्यते। तनुमानसंयस्यांसा तत्रहेतुस्तनुताभावात्। स्थौल्यकारणरागनिवृत्त्यामानसस्यतनुत्वसद्भावाद्भूमिकायानिदिध्यासनरूपतांवक्ष्यतिभगवान्वसिष्ठः। अनास्थयेतिभावानांपदभावनमांतरम्। लक्ष्यार्थलग्नमनसःसामान्योऽसावसंगमः। संसारांबुनिधेःपारेसारेपरमकारणे । यन्मौनमाश्रितंशांतंतच्छ्रेष्ठासंगउच्यते। श्रेष्ठासंगमताह्येषातृतीयाभूमिकाऽत्रहि। भवतिप्रोज्झिता

विचारणाशुभेच्छाभ्यामिंद्रियार्थेष्वरक्तता ॥ यत्रसातनुताभावात्प्रोच्यतेतनुमानसा ॥ १८ ॥ भूमिकात्रितयाभ्यासाच्चित्तेऽर्थविरतेर्वशात् ॥ सत्वात्मनिस्थितिःशुद्धेसत्वापत्तिरुदाहृता ॥ १९ ॥

शेषसंकल्पकलनःपुमानिति। एतच्चभूमिकात्रयंब्रह्मज्ञानसाधनमेव नतुज्ञानकोटावंतर्भवति भेदसत्यताबुद्धेरविनष्टत्वात्। अतएवैतज्जागरणमिति वक्ष्यतिवसिष्ठः। भूमिकात्रितयंत्वेतद्रामजाग्रदितिस्मृतम्। यथावद्भेदबुद्ध्येदंजगज्जाग्रतिदृश्यतइति । भूमिकात्रितयंजाग्रच्चतुर्थीस्वप्नउच्यते इतिच। तथामहद्भिरप्युक्तम्। अत्रभूमिकात्रितयंब्रह्मविद्यायाःसाधनमेवनतुविद्याकोटावंतर्भवति। भेदसत्यत्वबुद्धेरनिवर्त्यत्वात् अतएवैतज्जागरणमितिव्यपदिश्यतइति॥ १८ ॥ भूमिकेति॥ त्रितयस्यज्ञानभूमिकात्वंतुसत्वात्मनितत्साधनत्वेनोपचारादितिज्ञेयम। अर्थविरतिरनात्मपदार्थेष्वरुचिः चित्तेनिष्पन्नायाअर्थविरतेर्वशात्सत्त्वात्मनिस्थितिः सत्तामात्रस्वरूपेब्रह्मण्यवस्थितिः। तथाचवक्ष्यति। सत्तावशेषएवास्तेचतुर्थीभूमिकांगतइति। यच्च स्वप्नाख्याचतुर्थीभूमिरपरोक्षज्ञानमेवनसाधनकोटावंतर्भवति। यतोवक्ष्यति । सम्यग्ज्ञानो

दयेचित्तेपूर्णचंद्रोदयोपमे। निर्विभागमनाद्यंतंयोगिनोयुक्तचेतसः। समंसर्वंप्रपश्यंतिचतुर्थींभूमिकांगताइति। पंचम्यादिभूमिकात्रयेतु जीवन्मुक्तेस्तारतम्यंभवति। तत्रसप्तमीभूमिर्विदेहमुक्तिसदृशी। तथाचोक्तम्। जीवन्मुक्तेस्तारतम्यंशिष्टेभूमित्रयेभवेत्। विदेहमुक्तिसदृशीसप्तमीभूमिरुच्यतइति। तास्तिस्रोऽसंप्रज्ञातसमाध्यभ्यासकृतेनचित्तोपरतितारतम्येनसिध्यंति। तदप्युक्तम्। पंचम्यादयस्तिस्रोभूमयोनिर्विकल्पसमाध्यभ्यासकृतेनचित्तविश्रांतितारतम्येनसंपद्यंतइति ॥ १९ ॥ दशेति ॥ दशाचतुष्टयाभ्यासादितिप्रागुक्तावस्थाचतुष्टयस्याभ्यासात्कारणात् रूढसत्वचमत्कारा रूढःदृढनिष्पन्नःसत्वस्यांतःकरणस्यचमत्कारःपरमसूक्ष्मब्रह्मानंदग्रहणवैदग्ध्यंयस्यांभूमिकायांसा तथोक्ता। यद्वा सत्वशब्देनसत्वगुणोगृह्यते। प्रवृद्धसत्वगुणचातुरीहिपंचमीभूमिकाभवति। किमर्थंरूढसत्वचमत्कारेत्यतआह। असंसर्ग

दशाचतुष्टयाभ्यासादसंसर्गफलायच ॥ रूढसत्वचमत्काराप्रोक्तासंसक्तिनामिका ॥ २० ॥ भूमिकापंचकाभ्यासात्स्वात्मारामतयादृढम्॥आभ्यंतराणांबाह्यानांपदार्थानामभावनात्॥२१॥ परप्रयुक्तेनचिरंप्रयत्नेनावबोधनम् ॥ पदार्थभावनीनामषष्ठीसंजायतेगतिः ॥ २२ ॥

फलायासंसक्तिफलायप्रातिभासिकविषयेऽपिरागाभासस्यापिवृत्तिफलायेत्यर्थः। निरतिशयानंदानुभवफलायचेतिचकारार्थः। इयंचपंचमी भूमिःसुषुप्तिरित्युच्यते। तथाचवक्ष्यति। पंचमींभूमिकामेत्यसुषुप्तिपदनामिकाम्। शांताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रकः। इति। अत्र समाधेःस्वयमेवव्युत्तिष्ठति ॥ २० ॥ भूमिकापंचकाभ्यासादिति ॥ दृढमितिपदं आत्मारामतयाऽभावनादितिचपदद्वयेनसंबध्यते। उक्तपंचमभूमौनिर्विकल्पात्तदास्वयमेवोत्तिष्ठति अभावनादनुपलंभात् परप्रयुक्तेनान्यकृतेनावबोधेनसमाधेःसकाशात्स्वव्युत्थापनं अनात्मपदार्थस्यसमाधौविस्मृतस्यपरप्रयत्नेनभावनापदार्थभावनासायस्याःसापदार्थभावनी गतिरवस्थादृढंस्वात्मारामतयाहेतुनाभ्यंतराणांसुखदुःखादीनांबाह्यानांघटादीनांपदार्थानांदृढमभावनात् ॥२१॥ परप्रयुक्तेनेति ॥ चिरंपरप्रयुक्तेनप्रयत्नेनावबोधनंयदाभवतितदाषष्ठीगतिःसंजा

यतेइत्यन्वयः । केचित्तुसाक्षात्कारोविशुद्धपदार्थज्ञानसाध्योमहावाक्यार्थविषयः तेनपदार्थभावनीयमवस्थाआदरणीयेतिवदंतःषष्ठीभूमिकां ब्रह्मविद्यासाधनकोटिस्थांमन्यंते तत्र निर्वाणप्रकरणवचनविरोधात्।भूमिकायांविवासनः।षष्ठींगाढसुषुप्तारूयांक्रमात्पततिभूमिकाम् ।यत्रना सन्नसद्रूयोनाहंनाप्यनहंकृतिः । केवलंक्षीणमननआस्तेऽद्वैतैक्यनिर्गतः । निर्ग्रंथिःशांतसंदेहोजीवन्मुक्तोविभावनः । अनिर्वाणोऽपिनिर्वा णश्चित्रदीपइवस्थितइति । किंच शुद्धसंविन्मयानंदभूर्याभवतिपंचमी । अर्धसुप्तप्रबुद्धाभोजीवन्मुक्तोऽत्रतिष्ठतीति ॥ २२ ॥ षष्ठीभूमिका पेक्षयानिकृष्टांपंचमींभूमिकांप्राप्तस्यजीवन्मुक्ततामभिदधता ततउत्कृष्टायाःषष्ठीभूमिकायाविद्याकोटिनिविष्टस्यस्वस्यसुतरामभ्युपगतत्वा च्च स्वभावैकनिष्ठत्वमिति । स्वोभावःस्वभावःस्वभावरूपस्तस्मिन्नेकस्मिन्नेवनितरांस्वतःपरतोवापुनरुत्थानंविनैवतिष्ठतीतिस्वभावैकनिष्ठस्त

भूमिषट्कचिराभ्यासाद्भेदस्यानुपलंभनः ॥ यत्स्वभावैकनिष्ठत्वंसाज्ञेयातुर्यगागतिः ॥ २३॥ एषाहिजीवन्मुक्तेषुतुर्यावस्थेहविद्यते ॥ विदेहमुक्तविषयंतुर्यातीतमतःपरम् ॥ २४ ॥ येहिराममहाभागाःसप्तमींभूमिकांगताः ॥ आत्मारामामहात्मानस्तेमहत्पदमागताः ॥ २५ ॥

स्यभावस्तत्त्वम् । सप्तमीसापरिप्रौढाविषयोऽस्यांनजीवितादिति निर्वाणप्रकरणवचनात् । सप्तमभूमिकांप्राप्तस्ययोगिनःस्वतःपरतोवापुन र्व्युत्थानमेवनास्तीतिगम्यते । तथामहद्भिरप्युक्तम्।तुरीयाभिधांसप्तमभूमिंप्राप्तस्ययोगिनःस्वतःपरतोवाव्युत्थानमेवनास्तीतिमुमुक्षुषुवर्तमा नमवस्थात्रयात्मकंजागरितं चतुर्थभूम्यात्मकंस्वप्नंपंचमषष्ठभूमिकात्मकांसुषुप्तिंचापेक्ष्य स्वरूपमेवतुर्यं चतुर्थंतद्गच्छतीतितुर्यगा गतिरवस्था तुरीयावस्थेत्यर्थः ॥ २३ ॥ एषासप्तमभूमिरूपातुरीयावस्थाजगतिक्वचिदपिनास्त्येवेत्यतआह ॥ एषाहीति ॥ जीवन्मुक्तेषुशुकादिषुविदेह मुक्तविषयंविदेहमुक्तगम्यम् ॥२४॥ सप्तमीभूमिकासर्वोद्योगेनपुरुषधौरेयैःसंपाद्येतिज्ञापयितुंतांप्राप्तांस्तौति ॥ येहीति ॥ महत्पदमागताः महास्थानंप्राप्ताः महात्मतायाःपर्यवसानभूमिंप्राप्ताइत्यर्थः । महात्मपदंगताइतिक्वचित्तत्रापिसएवार्थः ॥ २५ ॥

सप्तमींभूमिकांप्राप्तादन्येजीवन्मुक्ता विक्षेपदशायांकथंव्यवहरंतीत्यतआह ॥जीवन्मुक्ताइत्यादि ॥ सुखदुःखरसस्थितौसुखदुःखानुभवस्थि तौनसज्जंतिआसक्तिंनकुर्वंति हर्षविषादौनकुर्वंतीत्यर्थः। यद्वासक्तिस्तत्राभिमानस्तंनकुर्वंतीत्यर्थः । अर्थकार्येण लोकसंग्रहलक्षणप्रयोजन मर्थःसएवकार्यंतेनहेतुनाकिंचित्कुर्वंतिवानवाकुर्वंति । आर्यकार्येणेतिक्वचित्तत्रार्यकार्येणविद्वत्कार्येणअनिषिद्धकार्येणेत्यर्थः ॥२६॥२७॥ ॥ २८ ॥ ननुज्ञानदशाप्राप्तानांसदेहत्वेकथंमुक्ततेत्यतआह ॥ ज्ञप्तिर्हीति॥ ज्ञप्तिरत्रज्ञानदशा सएवपक्वोग्रंथिविच्छेदोहिअहंकारलक्षणग्रंथेः

जीवन्मुक्तानसज्जंतिसुखदुःखरसस्थितौ ॥ प्राकृतेनार्थकार्येणकिंचित्कुर्वंतिवानवा॥२६॥पार्श्व स्थबोधिताःसंतःपूर्वाचारक्रमागतम् ॥ आचारमाचरंत्येवसुप्तबुद्धवदक्षताः ॥ २७ ॥ भूमिकास प्तकंत्वेतद्धीमतामेवगोचरम्॥प्राप्ताज्ञानदशामेतांपशुम्लेच्छादयोऽपिये॥सदेहावाविदेहावातेमु क्तानात्रसंशयः ॥ २८ ॥ ज्ञप्तिर्हिग्रंथिविच्छेदस्तस्मिन्सतिहिमुक्तता॥ मृगतृष्णांबुबुद्ध्यादि शांतिमात्रात्मकस्त्वसौ ॥ २९ ॥ येतुमोहार्णवात्तीर्णास्तेप्राप्ताःपरमंपदम् ॥ तेस्थिताभूमिका- स्वासुस्वात्मलाभपरायणाः ॥ ३० ॥ एतासुभूमिषुजयंतिहियेमहांतोवंद्यास्तएवहिजितेंद्रिय शत्रवस्ते ॥ संम्राट्स्वराडपिचयत्रतृणायतेतत्सारंपदंजगतितेसमवाप्नुवंति ॥ ३१ ॥

सकारणस्यविनाशोहि अहंकाराध्यासस्यसकारणस्यनिवृत्तिंविनाज्ञानदशायाएवपक्वायाअयोगात् । ततःकिंतत्राह ॥ तस्मिन्निति ॥ त स्मिन्ग्रंथिविच्छेदेसतिमुक्तिर्हिसकारणग्रंथिविच्छेदः । तर्हिसद्वासदसदात्मावासदसद्विलक्षणोवासर्वथाप्यनुपपत्तिरित्यतआह ॥ मृगतृष्णे ति ॥ यथामरीचिकोदकाध्यासनिवृत्तिरधिष्ठानमात्रंतथासौग्रंथिविच्छेदोऽपीत्यर्थः॥ २९ ॥ येतुमोहादित्यादिसार्धत्रयंस्पष्टार्थम् ॥ ३० ॥ जयंतिसर्वोत्कृष्टतयावर्तंते । सम्राट्मंडलेश्वराणांशास्ता । स्वराडिंद्रः ॥ ३१ ॥

॥ ३२ ॥ कीदृशंतद्ब्रह्माभिधंपरंवस्तुतत्राह ॥ त्वत्तेति ॥ त्वत्ताहंतेत्वमहंभावौ । आत्मतापरतेआत्मभावपरभावौ । भेदकलनाभेदज्ञानं भावाभावरंजनाभावाभावाभिनिवेशइत्यादि यत्रनास्तितत्परंब्रह्मेत्यर्थः ॥३३॥ सर्वमिति ॥ सर्वं तद्व्यतिरिक्तस्याभावात् । शांतमविद्या रागादिमलरहितं निरालंबमाधाररहितं सर्वाधारमित्यर्थः । तदपिमाययेत्यर्थः । व्योमस्थंस्वमहिमस्थं आधारमनपेक्षितमित्यर्थः । शिवं मंगलमनामयंनिरुपद्रवमनाभासं अप्रतिबिंबम् ॥३४॥ नेति ॥ अमध्यांतंमध्यांतरहितं नसर्वं मिथ्याभूतात्सर्वस्माद्विलक्षणम् । तर्हिवस्तु



वसिष्ठउवाच॥मनःप्रशमनोपायोयोगइत्यभिधीयते॥सप्तभूमिःसविज्ञेयःकथितास्ताश्चभूमिकाः ॥ ३२ ॥ एतासांभूमिकानांतुगम्यंब्रह्माभिधंपरम् ॥ त्वत्ताहंतात्मतायत्रपरतानास्तिकाचन॥ न क्वचिद्भेदकलनानभावाभावरंजना॥ ३३ ॥ सर्वंशांतंनिरालंबंव्योमस्थंशाश्वतंशिवम् ॥अनाम यमनाभासमनात्मकमकारणम् ॥ ३४॥ नसन्नासन्नमध्यांतंनसर्वंसर्वमेवच॥ मनोवचोभिरग्रा ह्यंशून्याच्छून्यंसुखात्सुखम् ॥ ३५ ॥ असंवेदनमाशांतमात्मवेदनमाततम् ॥ ३६ ॥ वसिष्ठ उवाच ॥ एतत्तेकथितंरामज्ञानंवैसाप्तभूमिकम् ॥ त्वंमाहात्म्यमविद्यायाःपुनःशृणुरघूद्वह॥३७॥

तःपरिच्छेदःस्यादित्यतआह ॥ सर्वमिति ॥ मनोवचोभिरग्राह्यत्वेहेतुः ॥ शून्याच्छून्यमिति॥ अत्यंतनिराकारमित्यर्थः । शून्यादपिशून्यं चेत्तर्हिपुरुषार्थबहिर्भूतंतदित्यतआह ॥ सुखात्सुखं परमानंदरूपत्वात् ॥ ३५ ॥ तर्हिवेद्यंतदित्यतआह ॥ असंवेदनमिति ॥ आसमंता च्छांतंआशांतं आत्मवेदनंस्वयंप्रकाशं आसमंतात्ततंव्याप्तमाततम् ॥३६॥ एतत्तेकथितमित्यादयःकाकतालीयवदित्यतःप्राक्तनाःश्लोकाः प्रायेणस्पष्टार्थाः । रघूद्वहरघूणांश्रेष्ठ ॥ ३७ ॥

॥३८॥ अरण्यानी महारण्यम् । महारण्यमरण्यानीगृहारामास्तुनिष्कुटाइत्यमरः । आदर्शोदर्पणं लभ्यतेऽपीत्यपिशब्दःशंकायाम् । गर्हासमुच्चयप्रश्नशंकासंभावनास्वपीत्यमरः ॥ ३९ ॥ ४० ॥ कौतुकात् कूतूहलात् । कौतुकंविषयाभोगेहस्तसूत्रेकुतूहले । कामेख्यातेमंगलेचेति

लवणोऽसौमहीपालस्तत्रदृष्टातथाभ्रमम् ॥ द्वितीयेदिवसेगंतुंप्रवृत्तस्तांमहाटवीम् ॥३८॥ यत्र दृष्टंमयादुःखमरण्यानींस्मरामिताम् ॥ चित्तादर्शगतांविंध्येकदाचिल्लभ्यतेऽपिसा ॥ ३९ ॥ इतिनिश्चित्यसचिवैःप्रययौदक्षिणापथम् ॥ पुनर्दिग्विजयायैवप्राप्यविंध्यमहीधरम् ॥ ४० ॥ पूर्वदक्षिणपाश्चात्यमहावनतटस्थलीम् ॥ बभ्रामकौतुकात्सर्वांव्योमवीथीमिवोष्णगुः ॥ ४१ ॥ अथैकस्मिन्प्रदेशेतांचिंतामिवपुरोगताम् ॥ ददर्शग्रामरण्यानींपरलोकमहीमिव ॥ ४२ ॥ स तत्रविहरंस्तांतुस्ववृत्तान्सकलानपि ॥ दृष्टवान्पृष्टवांश्चैवज्ञातवांश्चाविसिस्मये ॥ ४३ ॥ तत्परिज्ञातवांश्चापिव्याधान्पुक्कसजान्पुनः ॥ विस्मयाकुलयाबुद्ध्याभूयोबभ्रामसंभ्रमी ॥ ४४ ॥ अथप्रापमहाटव्याःपर्यंतेधूमधूसरम् ॥ तमेवग्रामकंयस्मिन्नसोऽभवत्पुष्टपुक्कसः ॥ ४५ ॥ तत्रापश्यज्जनांस्तांस्तान्स्त्रियस्तास्ताःकुटीरिकाः ॥४६॥ अन्यासुवृद्धासुसबाष्पनेत्रास्वभर्तृयुक्तासुचवर्णयंती ॥ वृद्धातिकांतारविशीर्णबंधुस्तत्रातिदीनापरिरोदितीदम् ॥ ४७॥

यादवप्रकाशः । उष्णगुःसूर्यः ॥ ४१ ॥ ४२ ॥ विसिस्मयेविस्मयंचक्रे ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ कांतारंदुर्गममार्गः । कांतारंवर्त्मदुर्गममित्यमरः ॥ ४७॥

असभुवीतिधातोर्लण्मध्यमपुरुषबहुवचनंस्थ भवथ। गुंजाफलदामभिर्हारोयस्याःसातथोक्ता। दामशब्देनमालोच्यते दुर्विधिनादुर्दैवेन॥४८॥ शुद्धांतविलासिनीरंतःपुरांगनाः ॥४९॥ संसारेति ॥ तुच्छमत्रासमंजसं संसारनद्याकिंनामतुच्छंनकृतमितिसंबंधः। कैःसाधनैःस्वतरंगभंग

हापुत्रकाःकुत्रगताःस्थदीनाद्दृष्टेर्ममोत्संगमपास्यदूरम् ॥ हापुत्रिगुंजाफलदामहारेनीतासिमेदुर्विधिनातिदूरम् ॥४८॥ हाराजपुत्रेंदुसमानकांतसंत्यज्यशुद्धांतविलासिनीस्ताः ॥ रतिंप्रयातोऽसिममात्मजायांनसापितेसुस्थिरतामुपेता ॥ ४९ ॥ संसारनद्यास्वतरंगभंगक्रियाविलासैर्विहितोपहासैः ॥ किंनामतुच्छंनकृतंनृपेशोयद्योजितःपुक्कसकन्यकायाम् ॥ ५० ॥ एवंलपंतीमवलोक्यवृद्धांदासीभिराश्वास्यनृपोनिजाभिः ॥ पप्रच्छवृत्तंकिमिहासिकात्वंकातेसुताकेचसुतास्तवेति ॥ ५१ ॥ उवाचसाबाष्पविलोचनाथग्रामस्त्वयंपुक्कसपोषनामा ॥ इहाभवत्पुक्कसपःपतिर्मेबभूवतस्येंदुसमासुतैका ॥ ५२ ॥ सादैवयोगात्पतिमिंद्रतुल्यमिहागतंप्रापधरातलेंद्रम् ॥ सातेनसार्धंसुचिरंसुखानिभुक्त्वाप्रसूतातनयांसुतौच ॥ ५३ ॥ केनचित्त्वथकालेनग्रामकेऽस्मिन्जनेश्वर ॥ अवृष्टिदुःखमभवद्भीषणंभग्नमानवम् ॥ ५४ ॥ महतातेनदुःखेनसर्वेतेग्रामकाजनाः ॥ विनिर्गत्यगताद्दूरंसर्वेपंचत्वमागताः ॥ ५५ ॥

क्रियाविलासैः स्वीयतरंगखंडरूपैःकर्मविलासैर्विहितोपहासैरेकस्मिन्नेवजन्मनिराजत्वपुक्कसत्वेहेतुत्वेन विवेकिभिर्विहितउपहासोयेषुतेतथोक्तास्तैः। यदितिहेतौ ॥ ५० ॥ लपंतींविलपंतीम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ पंचत्वंमरणम् ॥ ५५ ॥

॥ ५६ ॥ ५७ ॥ समुदितैःसुभाषितैःदानसंमानैःदानसत्कारैः दृष्टालोकेपरावरेउच्चावचाभावायेनसदृष्टलोकपरावरः ॥ ५८ ॥ ५९ ॥ ६० ॥
॥ ६१ ॥ मुहूर्तद्वयेनद्वादशवार्षिकोलवणस्यविभ्रमःस्वप्नइत्युच्यते । दुर्घटत्वमविद्यायाभूषणंनतुदूषणं कथंचिद्घटमानत्वेह्यविद्यात्वंनसि
द्ध्यतीतिन्यायात् अघटमानपटीयस्यामविद्यायांनासंभावितमेतदितिपरिहरति ॥ सर्वमिति ॥ सिंहासनएवासीनस्यलवणराजस्यमुहूर्तद्वि

तेनेमादुःखभागिन्यःशून्येवयमिहस्थिताः ॥ शोच्यांस्ताननुशोचंत्यस्तिष्ठामोदुःखजीविताः
॥ ५६ ॥ इत्याकर्ण्यांगनावक्राद्राजाविस्मयमागतः ॥ मंत्रिणांमुखमालोक्यचित्रार्पितइवाभवत्
॥ ५७ ॥ तेषांसमुदितैर्दानैःसंमानैर्दुःखसंक्षयम् ॥ कृत्वाकरुणयाविष्टोदृष्टलोकपरावरः ॥ ५८ ॥
आजगामगृहंपौरैर्मुदितःप्रविवेशह ॥ ज्ञाताविद्यास्वभावोऽसौनीतोबोधंमयाततः ॥ ५९ ॥ इत्ये
वंराघवाविद्यामहतीभ्रमदायिनी ॥ असत्सत्तांनयत्याशुसच्चासत्तांनयत्यलम् ॥ ६० ॥ रामउवा
च ॥ कथमेतद्वदब्रह्मन्स्वप्नःसत्यत्वमागतः ॥ संशयोभगवन्सोऽयंनमेगलतिचेतसः ॥ ६१ ॥ व
सिष्ठउवाच ॥ सर्वमेतदविद्यायांसंभवत्येवराघव ॥ एतत्तेगाधिवृत्तांतेस्फुटमग्रेभविष्यति ॥ ६२ ॥
काकतालीयवच्चेतोवासनावशतःस्वतः ॥ समुदंतिमहारंभाव्यवहाराःपरस्परम् ॥ ६३ ॥

तयेनद्वादशवार्षिकभ्रमःकालांतरेतस्यचभ्रमस्याविसंवादित्वंलवणप्रतिभायाःसर्वपुक्कसप्रतिभानांचपरस्परसंरंभइत्येवमादिकंसर्वंशब्दार्थः ।
गाधिनामाब्राह्मणः ॥ ६२ ॥ यद्यप्यविद्यायांसंभवत्येवैतत्सर्वंतथापिकाचिदुपपत्तिर्वक्तव्येत्यतआह ॥ काकतालीयवदित्यादि ॥ काकसता
लतरुसंयोगसमयएव दैवात्तत्फलपतनंकाकतालीयं चेतोवासनावशतश्चित्तस्यसदृशंभ्रमोत्पादकसंस्कारवशतःस्वतःस्वभावान्निमित्तांतरं

विनैवव्यवहाराऽभिज्ञालक्षणाः । समुदंतिसंवादंकुर्वंति । समानार्थभाजोभवंतीत्यर्थः । आरभ्यतइत्यारंभःकार्यं महानारंभोयेषांव्यवहारा णांतेमहारंभाः । स्मर्यंतेच भारते । युद्धेमृतानांवीराणांनानालोकान्प्राप्तानांधृतराष्ट्रादिशोकापनोदनार्थंभगवताव्यासेनतपःप्रभावात्तत्त लोकेभ्यःसमाकृष्टानांदुर्योधनादीनां धृतराष्ट्रेणपांडवैःस्त्रीभिश्चसंगतानां महारंभाव्यवहाराःसंवादिनोजायंतइति ॥ ६३ ॥ दृष्टमिति ॥ तत्रसदसिस्थितेनराज्ञाशांबरिकेहया ऐंद्रजालिकचेष्टया यद्यदापक्कणेशबरालयेदृष्टं तत्रतदायायाऽविद्योल्लासिताविवर्ततेसासैवान्येद्युरप्युल्ल सिता ॥ ६४ ॥ विंध्यपुक्कसचेतसांसंविदंप्राप्तः । विंध्यपुक्कसचेतोभिःसंविदितइत्यर्थः ॥ ६५ ॥ लावणीलवणराजसंबंधिनीप्रतिभाविंध्य

दृष्टंयत्पक्कणेराज्ञातत्रशांबरिकेहया ॥ तत्रयोल्लसिताविद्यासैवान्येद्युरितिध्रुवम् ॥ ६४ ॥ तत्का लेलवणेनाशुदृष्टोयःस्वप्नविभ्रमः ॥ सएवसंविदंप्राप्तोविंध्यपुक्कसचेतसाम् ॥ ६५ ॥ लावणीप्र तिभारूढाविंध्यपुक्कसचेतसि ॥ विंध्यपुक्कससंविद्वारूढापार्थिवचेतसि ॥ ६६ ॥ व्यवहारगते स्तस्याः सत्तास्तिप्रतिभानतः ॥ सत्तासर्वपदार्थानांनान्यासंवेदनादृते ॥ ६७ ॥ संबंधेद्रष्टृ दृश्यानामध्येद्रष्टुर्हियद्वपुः ॥ द्रष्टृदर्शनदृश्यादिवर्जितंतदिदंपरम् ॥ ६८ ॥

पुक्कसचेतस्यारूढा लवणस्यचेतसियत्प्रतिभातंतादृशमेवविंध्यपर्वतस्थपुक्कसचेतस्सुप्रतिभातमित्यर्थः । विपरीतंकिंनस्यादित्यतआह । विं ध्येति ॥ ६६ ॥ भ्रमव्यवहारस्यकथंतर्हिसत्यत्वमित्यतआह ॥ व्यवहारगतेरिति ॥ नकेवलमस्यैवव्यवहारस्वरूपस्यप्रातिभासिकंसत्त्वंस र्वस्यापिजगतस्तथेत्याह ॥ सत्तेति ॥ स्वप्नपदार्थानामिवजागरितेऽपिसर्वपदार्थानांसंवेदनात्प्रतिभासादृतेऽन्यासत्तानास्ति संवेदनमेवसत्ता संवेदनदशायामेवसत्तेत्यर्थः । यद्वा प्रतिभानतःसंवेदनादितिवाधिष्ठानचैतन्यमुच्यते । तथाच कल्पितानामधिष्ठानमेवसत्तेत्यर्थः ॥ ६७ ॥ प्रकरणार्थबुद्धिसौकर्यार्थंअंतेसंक्षिप्याह ॥ संबंधइति ॥ संबंधेद्रष्टृदृश्यानां द्रष्टृःशब्दादिदृश्यानांचसंबंधेद्रष्टृदृश्यभावलक्षणेजातानामनेके

षांमध्येद्रष्टृदृश्यदर्शनानामंतः कुसुमेषुसूत्रमिवानुगतस्यद्रष्टुर्यद्वपुःसाक्षिणोयत्स्वरूपमस्ति । किंभूतं द्रष्टृदर्शनदृश्यादिवर्जितं दृश्याद्यभावेऽपि सुषुप्तिसमाध्योस्तत्साक्षिणोविद्यमानत्वात् । द्रष्टृदर्शनदृश्यफलवर्जितं तदिदंशोधितत्वंपदार्थरूपंतत्पदलक्ष्यंपरमेव । यद्वा द्रष्टृदृश्यानांचपूर्वोक्तसंबंधेभाविनिमध्येपूर्वोत्तरवृत्त्योःसंधौद्रष्टुर्यद्वपुःजीवस्ययत्स्वरूपमस्ति तच्चद्रष्टृत्वेनदर्शनादिनाचवर्जिततंतदित्यादिसमानम् ॥ ६८ ॥

॥ देशादेशमिति ॥ चित्तेदेशाद्देशंगतेविषयाद्विषयांतरंगतेसति मध्येपूर्वोत्तरविषयज्ञानयोरंतराले चेतसस्तदुपाधिकस्यजीवस्येत्यर्थः । वपुःस्वरूपं किंभूतं अजाडयसंविन्मननं शब्दितसुषुप्तिस्वप्नजागरितवर्जितं तन्मयोभव तदात्मनिष्ठोभव ॥ ६९ ॥ अजाग्रत्स्वप्ननिद्रस्येत्यत्र

देशाद्देशंगतेचित्तेमध्येयच्चेतसोवपुः ॥ अजाडयसंविन्मननंतन्मयोभवसर्वदा ॥ ६९ ॥ अजाग्रत्स्वप्ननिद्रस्ययत्तेरूपंसनातनम् ॥ अचेतनंचाजडंचतन्मयोभवसर्वदा ॥ ७० ॥ जडतांवर्जयित्वैकांशिलायाहृदयंहियत ॥ अमनस्कंमहाबाहोतन्मयोभवसर्वदा ॥ ७१ ॥ चित्तंदूरेपरित्यज्ययोऽसिसोऽसिस्थिरोभव ॥ भवभावनयामुक्तोयुक्त्यापरमयान्वितः ॥ ७२ ॥

निद्राशब्देनसुषुप्तिर्गृह्यते । अचेतनंचेतनधर्मभूतावस्थात्रयरहितत्वात् । अजडं प्रज्ञानघनत्वान्निर्विकारतासर्ववस्त्ववभासकत्वाच्च ॥ ७० ॥

॥ जडतामिति ॥ अमनस्कंस्वभावतोमनोरहितं यच्छिलायाहृदयंपाषाणस्याभ्यंतरस्वरूपं तज्जडतामेकांवर्जयित्वाविहाय कदाचित्तस्थास्यतिचेत्तर्हितन्मयोभव तन्निष्ठोभव । तत्सदृशस्वरूपनिष्ठोभवेत्यर्थः । शिलायाबाह्यस्वरूपंपदार्थांतरसंगित्वादसंगात्मस्वरूपस्यदृष्टांतोनभवति तदुपेक्ष्यतस्याहृदयंगृहीतम् ॥ ७१ ॥ यस्मादविवेकात्संसारस्तस्माद्विवेकएवयत्नःकर्तव्यइत्याह ॥ चित्तंदूरइति ॥ भवभावनयामुक्तःसंसारभावनयामुक्तः । युक्त्याश्रुत्यनुकूलयापरमयायुक्तइत्यर्थः ॥ ७२ ॥

संसारेति ॥ संसारोग्रारघट्टयंत्ररज्जुवासनांछिंधीत्यर्थः ॥७३॥ पूर्वमिति ॥ शून्येनाल्पेनपरमात्मतत्त्वेनानिर्वचनीयेनमनसा शून्यमनिर्वचनीयंजगदाततंकल्पितमित्यर्थः ॥ ७४ ॥ संकल्पेति ॥ मिहिकाधूमाकारमेघाःशरद्यागतायांखमिवस्वच्छंचिन्मात्रंभातीत्यन्वयः ॥७५॥ इतिश्रो



संसारोग्रारघट्टेऽस्मिन्याहृढायंत्रवाहिनी ॥ रज्जुस्तांवासनामेतांछिंधिराघवयत्नतः ॥७३॥ पूर्वं मनःसमुदितंपरमात्मतत्त्वात्तेनाततंजगदिदंस्वविकल्पजालैः ॥ शून्येनशून्यमपितेनयथांबरेणनीलत्वमुल्लसतिचारुतराभिधानम् ॥ ७४ ॥ संकल्पसंक्षयवशाद्गलितेतुचित्तेसंसारमोहमिहिकागलिताभवंति ॥ स्वच्छंविभातिशरदीवखमागतायांचिन्मात्रमेकमजमाद्यमनंतमंतः ॥७५॥

इतिश्रीवाल्मीकीयेमोक्षोपायउत्पत्तिप्रकरणेलवणोपाख्यानंनामत्रयोदशःसर्गः ॥ १३ ॥

उत्पत्तिप्रकरणंसमाप्तम् ॥ श्रीरामायनमः ॥ शुभम् ॥



मत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौवासिष्ठचंद्रिकायांउत्पत्तिप्रकरणंनामत्रयोदशःसर्गः ॥ १३ ॥

ॐस्वस्ति श्रीगणेशायनमः ॥ अथस्थितिप्रकरणम् ॥ पूर्वस्मिन्प्रकरणेजगन्मनोविलासाद्वत्पन्नंयोगेनचमनोविलासशांतौशाम्यतीत्युक्तम् । आस्मिंस्तुप्रकरणेमनसउत्पन्नंजगन्मनस्येवतिष्ठति । तच्चमनःस्वकारणेआत्मनितिष्ठतीतिप्रतिपाद्यते ॥ अत्रपंचाख्यानानि ॥ शुक्रोदामादयोभीमादयोदानशूरउपदेशश्चेति । तत्रतावन्मनोमयस्यदृश्यस्यमनसासहात्मन्यवस्थितत्वादाधारत्वेनात्मानंनिरूपयितुमाधेयंदृश्यमाह ॥ अकर्तृकमिति ॥ चित्रंहिकेनचित्कर्त्राकैश्चिद्रंगैरंजनद्रव्यैःकस्मिंश्चिद्भित्त्यादौमूर्तेवस्तुनिक्रियते । इदंतुजगद्रूपंचित्रमकर्तृकंआत्मनोनिष्क्रियत्वेनाकर्तृत्वात् । अरंगंचात्मनोऽद्वितीयत्वेनरंजकस्यद्रव्यांतरस्याभावात् । गगनेचिदाकाशेउत्थितंमूर्तस्यकस्यचिदधिकरणस्याभा

ॐ नमःपरमात्मने ॥ वसिष्ठउवाच ॥ अकर्तृकमरंगंचगगनेचित्रमुत्थितम् ॥ अद्रष्टृकंस्वानुभवमनिद्रंस्वप्नदर्शनम् ॥१॥ साक्षिभूतेसमेस्वच्छेनिर्विकल्पेचिदात्मनि ॥ निरर्थंप्रतिबिंबंतिजगंति मुकुरेयथा ॥२॥ एतत्तेरामवक्ष्यामिकार्यकारणतांविना ॥ स्थिताब्रह्मणिविश्वश्रीःप्रतिभामात्ररूपिणी ॥ ३ ॥ एकंब्रह्मचिदाकाशंसर्वात्मकमखंडितम् ॥ इतिभावययत्नेनचेतश्चांचल्यशांतये॥४॥

वात् । किंचअद्रष्टृकंस्वानुभवंयत्खल्वनुभूयतेतत्सत्येस्वव्यतिरिक्तेद्रष्टरि । इदंतुनतथा द्रष्टृदृश्ययोर्भेदाभावात् किंचअनिद्रंस्वप्नदर्शनं स्वप्नदर्शनंहिसत्यांनिद्रायांभवति । इदंतुनतथा जाग्रत्येवप्रतीयमानत्वात् ॥ १ ॥ साक्षीति ॥ साक्षादीक्षतइतिसाक्षी दृग्रूपत्वात्साक्षिभूतेसमेपरिपूर्णेस्वच्छेनिर्मलेनिर्विकल्पेभेदशून्येचिदात्मनि जगंतिमुकुरेयथादर्पणवन्निरर्थंप्रयोजनमंतरेणैवप्रतिबिंबंतिप्रतिफलंति निरिच्छमितिपाठेइच्छामंतरेणेत्यर्थः । तत्रजगतांजडत्वादात्मनश्चासंगोदासीनत्वान्निरिच्छत्वंवेदितव्यम् ॥ २ ॥ एतदिति ॥ विश्वश्रीःकार्यकारणभावमंतरेणैवप्रतिभामात्ररूपेणब्रह्मणितिष्ठतीत्येतद्रहस्यमितिभावः ॥ ३ ॥ एकंब्रह्मभावयेत्युक्तम् ॥ ४ ॥

भेदेप्रतीयमानेकथमैक्यमित्यत्राह ॥ रेखेति ॥ यथाहिकाचित्पीवरीगरीयसीगिरिशिला रेखोपरेखाभिर्वलिताव्याप्ता करितुरंगनरादिवि त्रविचित्रदेवालयादिरूपेणप्रतीयमानतया सत्यपिभेदस्फुरणेवस्तुतएकैव तथात्रैलोक्यवलितंत्रैलोक्यात्मनाविवृतमपिब्रह्मएकमेवेतिदृश्य तांनिश्चीयताम् ॥ ५ ॥ द्वितीयेति ॥ इदंजगद्द्वितीयकारणाभावात्ब्रह्मव्यतिरिक्तस्यद्वितीयस्यकारणस्याभावात् भावरूपकार्यारंभका णांसमवाय्यसमवायिनिमित्तानामसंभवाद्धेतोरनुत्पन्नमेव। कथंतर्हिप्रतीयतइत्याह। स्फारेब्रह्मणिप्रतिभामात्ररूपधृक्तिष्ठति। ब्रह्मण्यध्यस्त

रेखोपरेखावलितायथैकापीवरीशिला ॥ तथात्रैलोक्यवलितंब्रह्मैकमितिदृश्यताम् ॥ ५ ॥ द्विती यकारणाभावादनुत्पन्नमिदंजगत् ॥ तिष्ठतिब्रह्मणिस्फारेप्रतिभामात्ररूपधृक् ॥ ६ ॥ अत्रभा र्गववृत्तांतंकथयामितवानघ ॥ अनुत्पन्नमिदंविश्वंयेनचेतसिपश्यसि ॥ ७ ॥ पुरामंदरशैलस्य सानौकुसुमसंकुले ॥ अतप्यततपोघोरंकस्मिंश्चिद्भगवान्भृगुः ॥ ८ ॥ तमुपास्तेस्मतेजस्वीबा लःपुत्रोमहामतिः ॥ शुक्रःसकलचंद्राभःप्रकाशेनेवभास्करः ॥ ९ ॥ विद्याविद्यादृशोर्मध्येशुक्रो ऽप्राप्तमहापदः ॥ त्रिशंकुरिवरोदस्योरवर्ततदाकिल ॥ १० ॥ निर्विकल्पसमाधिस्थेसकदा चित्पितर्यथ ॥ अव्यग्रोऽभवदेकांतेजितारिरिवभूमिपः ॥ ११ ॥

तयामरुमरीचिकायांतरंगिणीवप्रातिभासिकतयातिष्ठतीत्यर्थः ॥ ६ ॥ विश्वस्यप्रतिभामात्ररूपत्वेभार्गववृत्तांतंनिदर्शयन्नाह ॥ अत्रेत्या दिना ॥ ७ ॥ ८ ॥ ९ ॥ विद्येति ॥ यथाहित्रिशंकुर्नामराजाविश्वामित्रमहिम्नाचंडालदेहेनैवस्वर्गंगच्छन्देवैर्निराकृतोरोदस्योर्द्यावापृथि व्योरंतर्मध्यएववर्तते । तथाशुक्रोऽप्यप्राप्तमहापदत्वादनधिगतब्रह्मभावत्वाद्विद्यादृष्टेरविद्यादृष्टेश्चांतरालेअवर्तत ॥ १० ॥ ११ ॥

॥ १२ ॥ अथेति ॥ तामरप्सरसम् ॥ १३ ॥ आरब्धवान्मनोराज्यमिति ॥ इतःपरंवक्ष्यमाणःशुक्रवृत्तांतोमानसएवेत्यर्थः ॥ १४ ॥ १५ ॥



॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अथेति ॥ तामप्सरसंतादृशीमात्मानुरक्तांज्ञात्वा संकल्पितार्थभाक्तयासहसंभोगःसंकल्पितोऽर्थः



ददर्शाप्सरसंतत्रगच्छंतींनभसःपथा ॥ मंदारमालावलितांमंदानिलचलालकाम् ॥ १२ ॥ कांतामालोक्यतस्याभूदुल्लासतरलंमनः ॥ अथतांमनसाध्यायंस्तत्रैवामीलितेक्षणः ॥ १३ ॥ आरब्धवान्मनोराज्यमिदमेवकिलोशनाः ॥ एषाहिललनाव्योम्निसहस्रनयनालये ॥ १४ ॥ संप्राप्तोऽयमहंस्वर्गमालोलसुरसुंदरम् ॥ मंदमन्मथमातंग्यइमास्ताःसुरयोषितः ॥ १५ ॥ देवेश्वरंनिषेवंतेवनंवनलतायथा ॥ इहतावदिमंशक्रमहमास्थानसुस्थितम् ॥ १६ ॥ द्वितीयमिवत्रैलोक्यस्रष्टारमभिवादये ॥ इतिसंचिंत्यशुक्रेणमनसैवशचीपतिः ॥ १७ ॥ तेनाभिवादितस्तत्रद्वितीयइवस्वेभृगुः ॥ अथसादरमुत्थायशुक्रःशक्रेणपूजितः ॥ १८ ॥ स्वर्गेविहर्तुमारेभेस्वर्वासिपरिमोदितः ॥ तत्रतांमृगशावाक्षींकांतामध्यगतामसौ ॥ १९ ॥ ददर्शसापितंरामदृष्ट्वापरवशाभवत् ॥ रसाद्विकसतोर्नूनमन्योन्यमनुरक्तयोः ॥ प्रातरर्कनलिन्योर्याशोभासैवतयोरभूत् ॥ २० ॥ अथतांतादृशींदृष्ट्वाशुक्रःसंकल्पितार्थभाक् ॥ तमःसंकल्पयामाससंहारमिवभूतभुक् ॥ २१ ॥ अथसर्वेषुभूतेषुगतेष्वभिमतांदिशम् ॥ आजगामभृगोःपुत्रंसामयूरीववारिदम् ॥ २२ ॥



तंप्राप्तुमुद्यतःसंस्तद्भोग्यकालकल्पनाय तमःसंकल्पयामास । भूतभुक्रुद्रःसंहारमिव ॥ २१ ॥ २२ ॥ ॥ ॥ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ॥

ततःकल्पलताकुंजेतौविशश्रमतुःक्वचित् ॥ अथचित्तविलासेनाचिरसुप्रेक्षितैःश्रुतैः ॥ २३ ॥ प्रणयैर्भा
र्गवस्यासीत्तुष्टयेससमागमः ॥ अथावसदसौशुक्रःपुरंदरपुरेतया ॥ २४ ॥ सुखंचतुर्युगान्यष्टौहारिणे
क्षणयासह ॥ पुण्यक्षयानुसंधानात्पपातावनिमंडले ॥ २५ ॥ पतितस्यावनौतस्यस्वपुरीस्मृतिमाग
ता ॥ जीवश्चांद्रमसंज्योतिर्भृगुसूतोविवेशह ॥ २६ ॥ प्रालेयतामुपेत्याशुशालितामगमत्ततः ॥ शा
लींस्तान्भुक्तवान्पक्वान्दशार्णेषुद्विजोत्तमः ॥ २७ ॥ सशुक्रःशुक्रतामेत्यतद्भार्यातनयोऽभवत् ॥ ततो
मुनीनांसंसर्गात्तपस्युग्रेव्यवस्थितः ॥ २८ ॥ अवसन्मेरुगहनेमन्वंतरमनिंदितः ॥ तत्रतस्यसमुत्प
न्नोमृग्यांपुत्रोनराकृतिः ॥ २९ ॥ तत्स्नेहेनपरंमोहंपुनरप्यापयौक्षणात् ॥ पुत्रस्यास्यधनंमेऽस्तुगुणाश्चा
युश्चशाश्वतम् ॥ ३० ॥ इत्यनारतचिंताभिर्जहौसत्यामवस्थितिम् ॥ धर्मचिंतापरिभ्रंशात्पुत्रार्थभोग
चिंतया ॥ ३१ ॥ क्षीणायुषंतमहरन्मृत्युःसर्पइवानिलम् ॥ भोगैकचिंतयासार्धंससमुत्क्रांतचेतनः ॥ ३२ ॥
प्राप्यमद्रेशपुत्रत्वमासीन्मद्रमहीपतिः ॥ अथान्यान्यपिजन्मानिसमुपेत्यबहून्यपि ॥ ३३ ॥ जातःस
गंगातीरस्थतपस्वितनयोमुनिः ॥ अथकालेनमहतापवनातपजर्जरः ॥ ३४ ॥ कायस्तस्यपपातो
र्व्यांभृगुशुक्रसमुद्भवः ॥ रागद्वेषविहीनत्वात्तस्यपुण्याश्रमस्यतु ॥ ३५ ॥ महातपस्त्वाच्चभृगोर्नभुक्तो
मृगपक्षिभिः ॥ अथवर्षसहस्रेणादित्येनपरमेश्वरः ॥ ३६ ॥ ॥ ॥ ॥ ॥

॥ ३७ ॥ ३८ ॥ अपश्यदिति ॥ श्लोकद्वयवाक्यम् । कायकंकालंशरीरास्थिपंजरम् ॥ ३९ ॥ तापेति ॥ तापेनातपेनशुष्कायावपुःकृत्तिर्देहस्यकृत्तिःतस्यारंध्रेषुस्फुरितास्तित्तिरयःपक्षिविशेषायस्मिन् । संशुष्काःअंताःपर्यंतायस्यास्तस्याउदरगुहायाश्छायायांविश्रांतादर्दुरामंडू



भृगुःपरमसंबोधाद्विरराससमाधितः ॥ नापश्यदग्रेतनयंविनयावनताननम् ॥ ३७ ॥ सीमांते गुणसीमायाःपुण्यंमूर्तमिवस्थितम् ॥ अपश्यत्केवलंकायकंकालंपुरतोमहत् ॥ ३८ ॥ देहयुक्तमिवा भाग्यंदारिद्र्यमिवमूर्तिमत ॥ ३९ ॥ तापशुष्कवपुःकृत्तिरंध्रस्फुरिततित्तिरिम् ॥ संशुष्कांतोदरगुहाच्छायाविश्रांतदर्दुरम् ॥ ४० ॥ प्रेक्ष्यतच्छुष्ककंकालमालानंदुःखदंतिनः ॥ पूर्वापरपरामर्शमकुर्वन्भृगुरुत्थितः ॥ ४१ ॥ आलोक्यसमकालंहिज्ञात्वापुत्रंमृतंभृगुः ॥ कालंप्रतिचकाराशुकोपंपरमदारुणम् ॥ ४२ ॥ अकालएवमत्पुत्रोनीतःकिमितिकोपतः ॥ कालायशापमुत्स्रष्टुंभगवानुपचक्रमे ॥ ४३ ॥ अथाकलितरूपोऽसौकालःकवलितप्रजः ॥ आधिभौतिकमास्थायवपुर्मुनिमुपाययौ ॥ ४४ ॥ खड्गपाशधरःश्रीमान्कुंडलीकवचान्वितः ॥ षड्भुजःषण्मुखोबाह्यावृतःकिंकरसेनया ॥ ४५ ॥ स उपेत्यमहाबाहोकुपितंतंमहामुनिम् ॥ कल्पक्षुब्धाब्धिगंभीरंसांत्वपूर्वमुवाचह ॥ ४६ ॥ त्वमनंततपाविप्रोवयंनियतिपालकाः ॥ तेनसंपूज्यसेपूज्यसाधोनेतरयेक्षया ॥ ४७ ॥ मातपःक्षपया बुद्धेकल्पकालमहानलैः ॥ योनदग्धोऽस्मिमेतस्यकिंत्वंशापेनधक्ष्यसि ॥ ४८ ॥



कायस्मिन् ॥ ४० ॥ प्रेक्ष्येति ॥ आलानंबंधनस्तंभम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

॥ ४९ ॥ ५० ॥ नेहेति ॥ नष्टकलंकयादृष्ट्याविशुद्धेनज्ञानेनइहजगतिकर्ताभोक्ताचनास्ति । आत्मनोनिर्विकारतयाकर्तृभोक्तृत्वासंभवादृष्टकलंकयादृष्ट्या भ्रांतिदर्शनेनतुजगतिबहवःकर्तारोभोक्तारश्चकर्त्रादिभेदस्याविद्यापरिकल्पितत्वेनभ्रांतत्वात् ॥५१॥ पुष्पाणीति ॥ तरुखंडेषुपुष्पाणीवभुवनेषुभूतानिप्राणिनःस्वकर्मणाआयांतियांतिच । कल्पांतेतुविधेर्ब्रह्मणोऽपियोहेतुःप्रवृत्तिनिवृत्तिहेतुःकालईश्वरेच्छाच ते

ब्रह्मांडावलयोग्रस्तानिगीर्णारुद्रकोटयः ॥ भुक्तानिविष्णुवृंदानिकनशक्तावयंमुने ॥ ४९ ॥ भोक्तारोहिवयंब्रह्मन्भोजनंयुष्मदादयः ॥ स्वयंनियतिरेषाहिनावयोरेतदीहितम् ॥ ५० ॥ नेहकर्तानभोक्तास्तिदृष्टयानष्टकलंकया ॥ बहवश्चेहकर्तारोदृष्टयादृष्टकलंकया ॥५१॥ पुष्पाणितरुखंडेषुभूतानिभुवनेषुच ॥ कर्मणायांतियांतीहकल्पांतेहेतुनाविधेः ॥ ५२ ॥ क्वासौज्ञानमयीदृष्टिः क्वमहत्त्वंक्वधीरता ॥ मार्गेसर्वप्रसिद्धेऽपिकिमंधइवमुह्यसि ॥ ५३ ॥ स्वकर्मपरिपाकोत्थामविचार्यदशांमुने ॥ किंमूर्खइवसर्वज्ञमुधामांशप्तुमिच्छसि ॥५४॥ चित्तमेवेहपुरुषस्तत्कृतंकृतमुच्यते ॥ मनोहिजीवनाज्जीवोनिश्चायकतयातुधीः ॥ अहंकारोऽभिमंतृत्वान्नानातांस्वयमेतिहि ॥ ५५ ॥ तन्मनस्तवपुत्रस्यसमाधौत्वयिसंस्थिते ॥ प्रयातंवैबुधंसद्मसंत्यज्यौशनसंवपुः ॥ ५६ ॥

नयांत्यायांतिचेत्यर्थः ॥ ५२ ॥ ५३ ॥ ५४ ॥ भृगोःपुत्रस्यचित्तमयंसंसारंनिरूपयितुं कालश्चित्तस्यमहिमानंतावदाहसार्धेनश्लोकेन ॥ चित्तमेवेति ॥ पुरुषोजीवः कथंजीवइत्यत्राह ॥ मनोहीति ॥ मनएवजीवनात्प्राणधारणाज्जीवइत्युच्यते । निश्चायकतयानिश्चयहेतुत्वात् धीर्बुद्धिःनिश्चयात्मिकाबुद्धिरितिलक्षणात् । अभिमंतृत्वादहंममाभिमानहेतुत्वादहंकारोऽपि ॥ ५५ ॥ ५६ ॥

अथेत्यादिना सार्धश्लोकपंचकेन स्वर्गभोगानंतरभाविनोजन्मभेदानाह ॥ तत्रप्रथमांतानिपदानिजन्मभेदपराणि सप्तम्यंतानितु देशभेदपराणीतिद्रष्टव्यम् ॥ ५७ ॥ धीवरोमत्स्यादिघातकः । देशिकआचार्यः ॥ ५८ ॥ सामंतोमंडलेश्वरः ॥ ५९ ॥ वंशगुल्मःवेणुस्तंबः हरिण



असेवतमुनेतत्रविश्वाचींदेवसुंदरीम् ॥ अथविप्रोदशार्णेषुकोशलेषुमहीपतिः ॥ ५७ ॥ धीवरोऽथमहाटव्यांहंसस्त्रिपथगातटे ॥ सूर्यवंशेनृपःपौंड्रःशौरःशाल्वेषुदेशिकः ॥ ५८ ॥ कल्पंविद्याधरःश्रीमान्धीमानथमुनेःसुतः ॥ सौवीरेषुचसामंतस्त्रिगर्तेशैवदेशिकः ॥ ५९ ॥ वंशगुल्मःकिरातेषुहरिणश्रीश्वजांगले ॥ सरीसृपस्तालतलेतमालेवनकुक्कुटः ॥ ६० ॥ अन्यास्वपिविचित्रासुवासनावशतःस्वतः ॥ विषमास्वेवपुत्रस्तेचचारांतरयोनिषु ॥ ६१ ॥ वासुदेवाभिधानोऽसौमुनेविप्रकुमारकः ॥ तपश्चरतितेपुत्रःसमंगासारितस्तटे ॥ ६२ ॥ जटावानक्षवलयीजितसर्वेन्द्रियभ्रमः ॥ तत्रवर्षशतान्यष्टौसंस्थितस्तपसिस्थिरे ॥ ६३ ॥ यदीच्छसिमुनेद्रष्टुंतंस्वप्नाभंमनोभ्रमम् ॥ तत्समुन्मीलयज्ञाननेत्रमाशुविलोकय ॥ ६४ ॥ इत्युक्तेजगदीशेनकालेनसमदृष्टिना ॥ मुनिःसचिंतयामासज्ञानात्तत्तनयेहितम् ॥ ६५ ॥ ददर्शचमुहूर्तेनप्रतिभानवशादसौ ॥ पुत्रोदंतमशेषेणबुद्धिदर्पणबिंबितम् ॥ ६६ ॥ पुनर्मंदरसानुस्थांकालाकाराग्रसंस्थिताम् ॥ समंगायास्तटादेत्यविवेशस्वतनुंभृगुः ॥ ६७ ॥

श्रीःहरिणरूपः सरीसृपःसर्पः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ पुनरिति ॥ कालाकाराग्रसंस्थितां कालशरीरपुरोभागवर्ति

नीं भृगुर्ध्यानदृष्ट्यासमंगातटंगत्वापुनरेत्यस्वतनुंविवेशेत्यन्वयः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

विस्मयस्मेरयादृष्ट्याकालमालोक्यकांतया ॥ वीतरागमुवाचेदंवीतरागोमुनिर्वचः ॥ ६८ ॥ भगवन्भूतभव्येशबालावयमनुज्ज्वलाः ॥ त्वादृशामेवधीर्देवत्रिकालामलदर्शिनी ॥ ६९ ॥ इत्युक्तोभगवान्कालोहसन्निवजगद्गतिः ॥ हस्तंहस्तेनजग्राहभृगोरिंदुमिवांशुमान् ॥ ७० ॥ अथकालभृगूदेवौमंदराचलकंदरात ॥ गंतुंप्रवृत्तावववनौसमंगासरितस्तटे ॥ ७१ ॥ क्षणादेवापतुस्तत्रतौसमंगांतरंगिणीम् ॥ ददर्शाथतटेतस्याःकस्मिंश्चित्तनयंभृगुः ॥ ७२ ॥ शांतेन्द्रियंसमाधिस्थमचंचलमनोमृगम् ॥ समालोक्यभृगोःपुत्रंकालःसंकल्पवानभूत् ॥ ७३ ॥ विबुध्यतामयमितिसमाधेर्विररामसः ॥ उन्मील्यनेत्रेसोऽपश्यदग्रेकालभृगूप्रभू ॥ ७४ ॥ कदंबलतिकापीठादथोत्थायननामतौ ॥ मिथःकृतसमाचाराः शिलायांसमुपाविशन् ॥ ७५ ॥ अथोवाचवचःशांतंससमंगातटेद्विजः ॥ भवतोर्दर्शनेनाहमद्यनिर्वृतिमागतः ॥ ७६ ॥ योनशास्त्रेणतपसानज्ञानेननविद्यया ॥ विनष्टोमेमनोमोहःक्षीणोऽसौदर्शनेनवाम् ॥ ७७ ॥ नतथासुखयंत्यंतर्निर्मलामृतदृष्टयः ॥ यथाप्रहर्षयंत्येतामहतामेवदृष्टयः ॥ ७८ ॥ चरणाभ्यामिमंदेशंभवंतौभूरितेजसौ ॥ कौपवित्रितवंतौनःशशांकार्काविवांबरम् ॥ ७९ ॥ इत्युक्तवंतंप्रोवाचभृगुर्जन्मांतरात्मजम् ॥ स्मरात्मानंप्रबुद्धोऽसिनाज्ञोऽसीतिरघूद्वह ॥ ८० ॥



॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ॥ ॥ ॥ ॥ ॥ ॥

 ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ उत्तिष्ठेतिसार्धश्लोकोवाक्यम् । नियतेदैवगतेःकौतुकंविलासंद्रष्टुंविहरामिगच्छामि ॥ मेसमीहितं 



प्रबोधितोऽसौभृगुणाजन्मांतरदशांनिजाम् ॥ मुहूर्तमात्रात्सस्मारध्यानोन्मीलितलोचनः ॥ ८१ ॥ अथासौविस्मयस्मेरमुखोमुदितमानसः ॥ वितर्कमंथरांवाचमुवाचवदतांवरः ॥ ८२ ॥ अहो भ्रममयीदृष्टिर्जृंभतेकापिचेतसि ॥ यद्वशादिदमाभोगिजगज्जालंप्रवर्तते ॥ ८३ ॥ ज्ञातंज्ञातव्य मधुनादृष्टंद्रष्टव्यमक्षतम् ॥ विश्रांतोऽस्मिचिरंश्रांतश्चिन्मात्रान्नास्तिकिंचन ॥ ८४ ॥ उत्तिष्ठ तातगच्छामःपश्यामोमंदरास्थिताम् ॥ तांतनुंनियतेर्द्रष्टुंकौतुकंविहराम्यहम् ॥ नसमीहितमस्ती हनासमीहितमास्तिमे ॥ ८५ ॥ वसिष्ठउवाच ॥ विचारयंतस्तत्त्वज्ञाइतितेजागतीर्गतीः ॥ ८६ ॥ समंगायास्त्रयःप्रापुःक्षणान्मंदरकंदरम् ॥ ददर्शभार्गवस्तत्रपूर्वजन्मोद्भवांतनुम् ॥ ८७ ॥ उ वाचचेदंहेतातशुष्कातनुरियंहिसा ॥ यात्वयासुखसंभोगैःपुरासमभिलालिता ॥ ८८ ॥ पश्य विश्रांतसंदेहंविगताशेषकौतुकम् ॥ निरस्तकल्पनाजालंकथंशेतेसुखंवने ॥ ८९ ॥ सर्वाशाज्व रसंमोहमिहिकाशरदागमे ॥ विचित्तत्वंविनानान्यच्छ्रेयःपश्यामिजंतुषु ॥ ९१ ॥ तएवसुखसं भोगसीमानंसमुपागताः ॥ महाधियःप्राप्तधियोयेयाताविमनस्कताम् ॥ ९१ ॥



इष्टंमेऽसमीहितमनिष्टंचनास्ति ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ सर्वेति ॥ सर्वेषामाशानिमित्तानांज्वरसंमोहानांदुःखसंमोहानामे वमिहिकानांप्रालेयानांशरदागमंनिवर्तकम् । विचित्तत्वंविमनस्कत्वम् ॥ ९० ॥ ९१ ॥

९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ इतिश्रीमदल्लालसूरिसूनुनापदवाक्यप्रमाणपारावारदृश्वनाश्रीमुम्म डिदेवविद्वदाचार्यविरचितेसंसारतरणीनाम्निवासिष्ठविवरणेस्थितिप्रकरणेशुक्रोपाख्यानंनामचतुर्दशःसर्गः ॥ १४ ॥ पूर्वंभार्गवाख्यानेचि

सर्वदुःखदशामुक्तांसंस्थितांविगतज्वराम् ॥ दिष्ट्यापश्याम्यमननांवनेतनुमिमामहम् ॥ ९२ ॥ अथाक्षिप्यवचस्तस्यकालःप्रोवाचभार्गवम् ॥ प्रविशेमांतनुंसाधोनगरीमिवपार्थिवः ॥ ९३ ॥ गुरुत्वमसुरेंद्राणांकर्तव्यमनयात्वया ॥ कल्याणमस्तुवांयामोवयंत्वभिमतांदिशम् ॥ ९४ ॥ इत्युक्त्वामुंचतोर्बाष्पंतयोःसोंऽतरधीयत ॥ गतेतस्मिन्भगवतिभार्गवोनियतेर्वशः ॥ ९५ ॥ विवेशतांतनुंहित्वासमंगाद्विजभावनाम् ॥ तस्यांप्रविष्टजीवायांपुत्रतन्वांमहामुनिः ॥ ९६ ॥ चकाराप्यायनंमंत्रैःसकमंडलुवारिभिः ॥ सर्वानाड्यस्ततस्तन्व्यस्तस्याःपूर्णाविरेजिरे ॥ ९७ ॥ अथशुक्रःसमुत्तस्थौवहत्प्राणसमीरणः ॥ पुरोऽभिवादयामासपितरंपावनाकृतिम् ॥ ९८ ॥ ततस्तौकाननेतस्मिन्पावनेभृगुभार्गवौ ॥ संस्थितौमननोन्मुक्तौनिस्तरंगाविवहृदौ ॥ ९९ ॥ एवंतेभार्गवाख्यानंवर्णितंरघुनंदन ॥ विचार्यसुदृढंचित्तेयथेच्छसितथाकुरु ॥ १०० ॥ इतिश्रीयोगवासिष्ठसारेमोक्षोपायेस्थितिप्रकरणेभार्गवोपाख्यानंनामचतुर्दशःसर्गः ॥ १४ ॥ वसिष्ठउवाच ॥ जंतोःकृतविचारस्यविगलद्वृत्तिचेतसः ॥ मननंत्यजतोनित्यंकिंचित्परिणतात्मनः ॥ १ ॥

त्तमयःसंसारइतिदर्शितम् । अत्रतुदामाद्युपाख्यानेसचित्तमयःसंसारोविवेकेनचित्तशांतौशाम्यति विवेकाभावेतुवर्धतेइतिप्रतिपाद्यते । त

त्रचित्तप्रसादेसामग्रीमुपदर्शयितुमाह ॥ जंतोरितिसार्धैनश्लोकपंचकेन ॥ विगलद्वृत्तिचेतसः विगलंत्योमलिनावृत्तयोयस्माचेतसस्ताद्द शंचेतोयस्यतस्य । मननंसंकल्पम् ॥ १ ॥ उपादेयंदृग्मात्रं द्रष्टारमात्मानम् ॥ २ ॥ सुप्तस्यअनुसंधानरहितस्य ॥ ३ ॥ सुप्तत्वेहेतुः अत्यंतप क्ववैराग्यादिति ॥ अरसेषुअल्पसुखास्वादेषुऐहिकविषयेषु रसेषु सुखास्वादभूयिष्ठेषुपारलौकिकविषयेषु आखुनामूषिकेण खगानांजाले वागुरायामिव वैराग्यरंहसासंसारवासनाजाले त्रोटितेछेदितेसति हृदयग्रंथौअहंकाररूपेपर्वणिचश्लथेसति ॥ ४ ॥ कातकंफलमासाद्यवारी

दृश्यंसंत्यजतोहेयमुपादेयमुपेयुषः ॥ द्रष्टारंपश्यतोनित्यमद्रष्टारमपश्यतः ॥ २ ॥ निज्ञातव्ये परेतत्त्वेजागरूकस्यजीवतः ॥ सुप्तस्यघनसंमोहमयेसंसारवर्त्मनि ॥ ३ ॥ अत्यंतपक्ववैराग्याद रसेषुरसेष्वपि॥संसारवासनाजालेखगजालइवाखुना ॥ त्रोटितेहृदयग्रंथौश्लथेवैराग्यरंहसा॥४॥ कातकंफलमासाद्ययथावारिप्रसीदति ॥ तथाविज्ञानवशतःस्वभावःसंप्रसीदति ॥ ५ ॥ नीरा गंनिरुपासंगंनिर्द्वंद्वंनिरुपाश्रयम् ॥ विनिर्यातिमनोमोहाद्विहगःपंजरादिव ॥ ६ ॥ शांतसंदेहदो रात्म्यंगतकौतुकविभ्रमम् ॥ परिपूर्णातरंचेतःपूर्णेंदुरिवराजते ॥ ७ ॥ विचारेणपरिज्ञातस्वभा वस्योदितात्मनः ॥ अनुकंप्याभवंतीहब्रह्मविष्णिवद्रशंकराः ॥ ८ ॥

व विज्ञानवशतःस्वभावःस्वरूपंसंप्रसीदतीत्यन्वयः । यद्रजःसंपर्कात्कलुषंजलंप्रसन्नंभवतितत्कातकंफलम् ॥ ५ ॥ नीरागमिति ॥ रागइ च्छाविशेषः तद्रहितंनीरागम् अतएवनिरुपासंगंविषयासंगरहितं अतश्चनिर्द्वंद्वंसुखदुःखभेदानुसंधानविरतं ततश्चनिरुपाश्रयंनिरालंबनंस न्मनोमोहादज्ञानबंधान्निर्याति । विहगःपंजरादिवेति ॥ ६ ॥ शांतेति ॥ शांतसंदेहदानांदौरात्म्यंदुष्टतायस्य । गतःकौतुकानासंकल्पानांवि भ्रमोविलासोयस्मात् ॥ ७ ॥ विचारेणेति ॥ परिज्ञातस्वभावस्यसाक्षात्कृतात्मतत्त्वस्य अतएवोदितात्मनःपरिपूर्णस्वरूपस्य ब्रह्मादयोऽप्य

नुकंप्याभवंति हंतसंततमेतेदुःखिनइतिशोचनीयाभवंतीत्यर्थः ॥ ८ ॥ अविचारेदोषमाह ॥ कोऽहमित्यात्मविषयोविचारः । कथमिदमि तिजगद्विषयः । अंतःअंतःकरणे ॥ ९ ॥ विचारस्वरूपंदर्शयति श्लोकत्रयेण ॥ आत्मानमिति ॥ यःस्वात्मानमितरंपुरुषंनित्याविभिन्नया सर्वदाभेदशून्ययादृशाज्ञानेन पश्यतिविचारयति सर्वंजगच्चिज्ज्योतिरेवेतिचैतन्यमात्रमेवेतिपश्यति सविचारपरःपुमान्पश्यति तत्त्वंसाक्षा त्करोतीत्यर्थः ॥ १० ॥ सर्वेति ॥ सर्वभावांतरस्थितःसर्वपदार्थांतर्यामीपुरुषः सर्वशक्तिःअनंतात्माऽपरिच्छिन्नस्वरूपः अतएवाद्वितीयः

कोऽहंकथमिदंचेतियावन्नांतर्विचारितम् ॥ संसाराडंबरंतावदंधकारोपमंस्थितम् ॥ ९ ॥ आत्मा नमितरंचैवदृशानित्याविभिन्नया ॥ सर्वंचिज्ज्योतिरेवेतियःपश्यतिसपश्यति ॥ १० ॥ सर्वश क्तिरनंतात्मासर्वभावांतरस्थितः ॥ अद्वितीयश्चिदित्यंतर्यःपश्यतिसपश्यति ॥ ११ ॥ नाहंन चान्यदस्तीतिब्रह्मैवास्तिनिरामयम् ॥ इत्थंसदसतोर्मध्यंयःपश्यतिसपश्यति ॥ १२ ॥ अय त्नोपनतेष्वक्षिदिग्द्रव्येषुयथापुनः ॥ अरागमेवपततितद्वत्कार्येषुधीरधीः ॥ १३ ॥ परिज्ञायोप भुक्तोहिभोगोभवतितुष्टये ॥ विज्ञायसेवितश्चौरोमैत्रीमेतिनचौरताम् ॥ १४ ॥

स्वव्यतिरिक्तवस्त्वभावात् चिच्चिन्मात्ररूपइतिचयःपश्यति ॥ ११ ॥ नेति ॥ अहंअहंतापरिच्छिन्नंउपहितंवस्तुनास्ति अन्यत्स्वव्यतिरि क्तंदृश्यंचनास्ति किंतुनिरामयंनिर्विकारंब्रह्मैवास्ति इत्थमनेनप्रकारेणसदसतोःआत्मानात्मनोर्मध्यंद्रष्टृत्वदृश्यत्वोपाधिरहितंचिन्मात्रत्वम् ॥ १२ ॥ अयत्नेति ॥ दिग्द्रव्येषुदिक्षुस्थितेषुद्रव्येषु अक्षिचक्षुरिंद्रियं अयत्नेनैवोपनतेषुप्राप्तेषुसत्सु तद्विषयोमनोरथोऽनुरागस्तंविनैवपततित द्वद्धीराणांब्रह्मविदामपिधीर्बुद्धिःकार्येषुअवश्यकर्तव्येषुरागरहितमेवप्रवर्तते ॥ १३ ॥ परिज्ञायेति ॥ अयमिहज्ञानिनोभोगविशेषः यत्प

रिज्ञायोपभुक्तोभोगः तुष्टयेभवतिनपुनः क्लेशायेति । यथाहि । चौरः संसेव्यमानोऽपिविज्ञातारंनैवबाधते प्रत्युतमित्रभावेनोपकरोतितद्वदिति ॥१४॥ अशंकितेति ॥ अध्वगैः पुरुषैः अशंकितमतर्कितमेवोपसंप्राप्ता ग्रामयात्राग्रामस्यविवाहादिमहोत्सवपरिकल्पितायात्रा गच्छज्ज नसंघोयथाप्रेक्ष्यते तद्वद्देवज्ञैर्ज्ञानिभिर्भोगश्रीर्निरासंगमेवावलोक्यते ॥ १५ ॥ मनसइति ॥ निगृहीतस्यप्रत्याहारादिभिर्योगांगैर्निरुद्ध स्यमनसोऽल्पकोऽपियोलीलाभोगः अनादरेणोपभोगः तमेवभोगंक्लिष्टत्वान्निरुद्धत्वादलब्धविस्तारंमनोबहुमन्यते ॥१६॥ अत्रदृष्टांतमाह ॥

अशंकितोपसंप्राप्ताग्रामयात्रायथाध्वगैः ॥ प्रेक्ष्यतेतद्वद्देवज्ञैर्भोगश्रीरवलोक्यते ॥१५॥ मनसोनि गृहीतस्यलीलाभोगोऽल्पकोऽपियः ॥ तमेवालब्धविस्तारंक्लिष्टत्वाद्बहुमन्यते ॥१६॥ बंधयुक्तो महीपालोग्रासमात्रेणतुष्यति ॥ परैरबद्धोऽनाक्रांतोनराज्यंबहुमन्यते ॥१७॥ हस्तंहस्तेनसंपी डयदंतैर्दंतान्विचूर्ण्यच ॥ अंगान्यंगैः समाक्रम्यजयेदादौस्वकंमनः ॥ मनसोविजयान्नान्याग तिरस्तिभवार्णवे॥१८॥ एतावतिधरणितलेसुभगास्तेसाधुचेतसः पुरुषाः ॥ पुरुषकथासुचगण्या नाजितायेचेतसास्वेन ॥ १९ ॥ हृदयबिलेकृतकुंडलउल्बणकलनाविषोमनोभुजगः ॥ यस्योप शांतिमागतमुदितंतमव्ययंवंदे॥२०॥ वसिष्ठउवाच ॥ महानरकसाम्राज्येमत्तादुष्कृतवारणाः ॥ आशाशरशलाकाढ्यादुर्जयाहींद्रियारयः ॥ २१ ॥

बंधेति ॥ ग्रासमात्रेणअन्नपानप्रदानमात्रेण ॥ १७ ॥ मनोनिग्रहोपायमाह ॥ हस्तमिति ॥ हठयोगेनपवनजयद्वारास्वकंमनोजये दितितात्पर्यम् ॥ १८ ॥ १९ ॥ २० ॥ महानरकेति ॥ महांतोनरकाएवसाम्राज्यंइंद्रियादीनांभोगस्थानत्वात् । दुष्कृतान्येवमत्तावारणाः इंद्रियाणांप्रवृत्तिहेतुत्वात् । आशामनोरथाएवशरशलाकाः शलाकारूपाः शरास्तैः प्रवर्त्यमानत्वात् ॥ २१ ॥

चित्तोपशमस्येन्द्रियजयस्यचफलमाह ॥ प्रक्षीणेति ॥ भोगवासनाःपुनःपुनर्भोगाशाः ॥२२॥ तावदिति ॥ एकतत्त्वदृढाभ्यासा एकस्मि
न्नात्मतत्त्वेदृढोरूढमूलोयोध्यानाभ्यासस्तस्मात् ॥२३॥ वशीकृतंमनोबहुप्राणिनामुपकरोतीत्याह श्लोकद्वयेन ॥ भृत्यइति ॥ मनोभृत्यादि
कार्यकारणात्भृत्यादिरूपतामापद्यतइत्यर्थः । सतांहितानांकार्याणांस्वतएवकरणान्मंत्री इंद्रियाणांज्ञानकर्मकरणानामाक्रांतेर्नियोजकत्वा
द्बहुविधाधिकारिपुरुषप्रवर्तकःसामंतइव ॥२४॥२५॥स्वालोकितइति ॥ शास्त्रदृशाविचारसिद्धेनशास्त्रीयज्ञानेन स्वालोकितःसुष्ठुपर्यालोकि

प्रक्षीणचित्तदर्पस्यनिगृहीतेंद्रियद्विषः ॥ पद्मिन्यइवहेमंतेक्षीयंतेभोगवासनाः ॥ २२ ॥ तावन्निशी
थवेतालावल्गंतिहृदिवासनाः ॥ एकतत्त्वदृढाभ्यासाद्यावन्नविजितंमनः ॥२३॥ भृत्योऽभिमत
कर्तृत्वान्मंत्रीसत्कार्यकारणात् ॥ सामंतश्चेंद्रियक्रांत्यागुरुर्विद्याप्रदानतः ॥ २४ ॥ लालनात्स्नि
ग्धललनापालनात्पावनःपिता ॥ सुहृदुक्तंचविश्वासान्मनोमन्येमनीषिणाम् ॥ २५ ॥ स्वालो
कितःशास्त्रदृशास्वबुद्ध्यास्वानुभावितः ॥ प्रयच्छतिपरांसिद्धिंत्यक्त्वात्मानंमनःपिता ॥ २६ ॥
सुदृष्टःसुदृढःस्वच्छःसुकांतःसुप्रबोधितः ॥स्वगुणेनोर्जितोभातिहृदिहृद्योमनोमणिः ॥ २७ ॥ ए
वंमनोमणिंरामबहुपंककलंकितम् ॥ विवेकवारिणासिद्ध्यैप्रक्षाल्यालोकवान्भव ॥ २८ ॥

तःस्वबुद्ध्यास्वानुभवेनस्वानुभावितःसुष्ठुनिश्चयंप्रापितःमनःपितापालनात्पावनःपितेत्युक्तत्वात् । मनएवपिताआत्मानंत्यक्त्वास्वयंवि
लीयपरांसिद्धिंकैवल्यंप्रयच्छति ॥ कइत्थमुपकरिष्यतीतिभावः ॥२६॥सुदृष्टइति ॥ सम्यग्दृष्टःअतएवसुदृढःसंशयविपर्ययरहितत्वादप्रकंप्यःअ
तश्चस्वच्छोनिष्कलंकः सुकांतःशुभेच्छायुक्तः सुप्रबोधितःसमीचीनंप्रबोधंप्रापितः स्वगुणेनशमादिनाऊर्जितउत्कृष्टः सन्मनोमणिर्हृद्योभाती
ति ॥ २७ ॥ एवमिति ॥ बहुपंककलंकितंबह्वीभिर्मलिनवासनाभिःसंजातकलंकंएवंमनोमणिंविवेकवारिणाविचारजन्यंविज्ञानंविवेकस्ते

नैववारिणाप्रक्षाल्यसिद्ध्यैकैवल्यायालोकवान्तत्त्वज्ञोभव ॥ २८ ॥ २९ ॥ अयमिति ॥ अयमहमितियःपरिच्छिन्नाकारविषयोवृथानिश्चयो विपरीतंपरिच्छेदः तंस्वबुद्ध्याअलमपास्य इतरद्यत्पदंअहंतानवच्छिन्नंयच्चैतन्यंतदवलंब्यअमनस्कःसन् यथेच्छंव्यवहर।तथासतिनबध्यसइत्यर्थः ॥ ३० ॥ दामेति ॥ दामोव्यालःकटश्चेतिदैत्यावक्ष्यंते। तेषांन्यायो विवेकशून्योव्यवहारस्ते माभवतु। भीमोभासोदृढइतिचदैत्याःतेषांस्थि

विवेकंपरमाश्रित्यबुद्ध्यासत्यमवेक्ष्यच ॥ इंद्रियारीनलंतीर्त्वातीर्णोभवभवार्णवात् ॥ २९ ॥ अयमहमितिनिश्चयोवृथायस्तमलमपास्यमहामतेस्वबुद्ध्या ॥ यदितरदवलंब्यतत्पदंत्वंव्रजपिबभुंक्ष्वनबध्यसेऽमनस्कः ॥ ३० ॥ वसिष्ठउवाच ॥ दामव्यालकटन्यायोमातेभवतुराघव ॥ भीमभासदृढस्थित्यातवास्त्वतिविशोकता ॥ ३१ ॥ श्रीरामउवाच ॥ दामव्यालकटन्यायोभीमभासदृढस्थितिः ॥ ब्रह्मन्किमुक्तंभवताभवतापापहारिणा ॥ ३२ ॥ श्रीवसिष्ठउवाच ॥ दामव्यालकटन्यायंभीमभासदृढस्थितिम् ॥ शृणुराघवतच्छ्रुत्वायथेच्छसितथाकुरु ॥ ३३ ॥ आसीत्पातालकुहरेसर्वैश्वर्यमनोहरे ॥ शंबरोनामदैत्येंद्रोमायामणिमहार्णवः ॥ ३४ ॥ तस्यादिदेवदेवस्यकठिनोड्डामराकृतेः ॥ बभूवविपुलंसैन्यमासुरंसुरनाशनम् ॥ ३५ ॥ तस्मिन्मायाबलेसुप्तेदेशांतरगतेतथा ॥ तत्सैन्यंतरसाजघ्नुश्छिद्रंप्राप्यकिलामराः ॥ ३६ ॥

त्यातवविशोकतास्तु ॥ ३१ ॥ दामेति ॥ भवतापाःसंसारदुःखानितानपहर्तुंशीलमस्येति ॥ ३२ ॥ ३३ ॥ ३४ ॥ तस्येति ॥ आदिदेवाःपूर्वेदेवादैत्याः तेषांदेवोजातस्तस्यकठिनोड्डामराभयंकराचआकृतिर्यस्य ॥ ३५ ॥ ३६ ॥

अथेति ॥ मुंडिकांकद्रुमादयः मुंडिकाऽङ्कोद्रुमश्च आदिर्येषांते ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ वासने

अथशंबरदैत्येनमुंडिकांकद्रुमादयः ॥ रक्षार्थंमंत्रिसामंताःस्वसेनासुनियोजिताः ॥ ३७ ॥ तानप्यंतरमासाद्यजघ्नुर्देवाभयानकान् ॥ स्वयंकोपादथायासीच्छंबरःसुरपत्तनम् ॥ ३८ ॥ तस्यमायाबलाद्भीताःसुरास्तेंऽतर्धिमाययुः ॥ मेरुकाननकुंजेषुभयभारावयन्त्रिताः ॥ ३९ ॥ क्रन्दत्क्षुद्रामरगणंबाष्पक्लिन्नांगनामुखम् ॥ शून्यंददर्शसस्वर्गंकल्पक्षीणजगत्समम् ॥ ४० ॥ विंहृत्यकुपितस्तत्रदोर्दंडमदघूर्णितः ॥ लोकपालपुरींदग्ध्वाजगामात्मीयमालयम् ॥ ४१ ॥ एवंदृढतरीभूतेद्वेषेदानवदेवयोः ॥ देवाःस्वर्गंपरित्यज्यदिक्षुजग्मुरदर्शनम् ॥ ४२ ॥ चथशंबरदैत्येनयेयेसेनाधिनायकाः ॥ क्रियंतेयत्नतस्तांस्तान्जघ्नुर्यत्नपराःसुराः ॥ ४३ ॥ यावदुद्वेगमापन्नःशंबरःकोपवान्भृशम् ॥ ससर्जमाययाघोरानसुरान्त्रीन्महाबलान् ॥ ४४ ॥ निर्मितामाययाभीमाःपक्षक्षुब्धाइवाद्रयः ॥ उदगुस्तेमहामायादामोव्यालःकटस्तथा ॥ ४५ ॥ वासनात्माभिमानाभ्यांहीनास्तेप्रथमोद्गताः ॥ नाभिपातंनवापातंनविदुस्तेपलायनम् ॥ ४६ ॥ नजीवितंनमरणंसमरेनजयाजयौ ॥ केवलंसैनिकानग्रेदृष्ट्वातेहननोद्यताः ॥ ४७ ॥

ति ॥ वासनात्माभिमानाभ्यांलोकवासनयादेहाभिमानेनचहीनाः यतःप्रथमोद्गताःमायावशातपरस्मादात्मनएवोद्गताः । अतएवअभिपातंशत्रून्प्रत्यभियानंआपातंशत्रूणामागमनंचनविदुःनजानंति ॥ ४६ ॥ ४७ ॥

॥९॥ शंबरश्चिंतयामासपरितुष्टमनास्तदा ॥ इष्टानिष्टाभिरेतेहिवासनाभिर्यद्वुज्झिताः ॥ ४८ ॥ तदेतेनप लायंतेदैवैरभिहताअपि ॥ इतिनिर्णीयदैत्येन्द्रोदामव्यालकटान्विताम् ॥४९॥ सेनांसंप्रेषयामासदेवे न्द्रबलघातिनीम् ॥ दैत्याःसागरकुंजेभ्यःकंदरेभ्यश्चसायुधाः ॥ ५० ॥ उदगुर्भीमनिर्ह्रादाःसपक्षगिरि लीलया ॥ अथोत्तस्थुर्निकुंजेभ्यःकंदरेभ्यःसुराबलात् ॥ ५१ ॥ प्रयांतइवशैलेंद्राभीमाःस्वर्वासिनांग णाः ॥ देवासुरपताकिन्योस्तद्युद्धमभवत्तयोः ॥ ५२ ॥ अकालोल्बणकल्पांतभीषणंभुवनांतरे ॥ तस्मिंस्तदावर्तमानेघोरेसमरसंभ्रमे ॥ ५३ ॥ पतितांगायुधानीहप्रस्रवद्रुधिराणिच ॥ पयांसीवविशी र्णानिदेवसैन्यानिदुद्रुवुः ॥ ५४ ॥ दामव्यालकटास्तानिचिरमंतर्हितान्यपि ॥ अनुजग्मुर्लसन्नादमिंध नानीवपावकाः ॥५५॥ अन्विष्यंतोऽपियत्नेननालभंतासुराःसुरान् ॥ अलब्धेष्वमरौघेषुदामव्यालकटा स्तथा॥५६॥जग्मुःपातालकोशस्थंप्रभुंप्रमुदिताशयाः ॥ अथदेवाविषण्णास्तेक्षणमाश्वास्यवैययुः ५७ दामादिभिश्चविजिताब्रह्माणममितौजसम् ॥ तेषामाविरभूद्ब्रह्मारक्तोरक्तासनच्छविः ॥ ५८ ॥ प्रणे मुस्तेसुरास्तस्मैतत्सर्वंशंबरेहितम् ॥ सम्यक्प्रकथयामासुर्दामव्यालकटक्रमम् ॥ ५९ ॥ समाकर्ण्याखि लंब्रह्माविचार्यसाविचारवान् ॥ उवाचेदंसुरानीकमाश्वासनपरंवचः ॥ ६० ॥ ब्रह्मोवाच ॥ हंतवर्षसह स्रांतेशंबरस्यरणेसुराः॥ जेतव्यासमरेसेनातावत्कालंप्रतीक्ष्यताम् ॥ ६१ ॥ ॥ ॥ ॥ ॥९॥

॥ ६२ ॥ युद्धेति ॥ युद्धाभ्यासबलात् पुनः पुनर्युद्धप्रवर्तनात् । मुकुराणां दर्पणानां आशये अभ्यंतरे इव अहंकाररूपश्चमत्कारः प्रत्ययविशेषः

दामव्यालकटानेतान्युध्यध्वममरेश्वराः ॥ योधयंतः पलायध्वं युद्धार्थं पुनरेव च ॥ ६२ ॥ युद्धाभ्यासबलादेषां मुकुराणामिवाशये ॥ अहंकारचमत्कारः प्रतिबिंबमुपेष्यति ॥ ६३ ॥ गृहीतवासनाह्येते दामव्यालकटासुराः ॥ सुजेया वो भविष्यंति लग्नजालाः खगा इव ॥ ६४ ॥ आस्थामात्रमनंतानां दुःखानामाकरं विदुः ॥ अनास्थामात्रमभितः सुखानामाकरं विदुः ॥ ६५ ॥ वासनातंतुबद्धोऽयं लोको हि परिवर्तते ॥ साप्रवृद्धातिदुःखाय सुखायोच्छेदमागता ॥ ६६ ॥ धीरोऽप्यतिबहुज्ञोऽपि प्रवृद्धोऽपि महानपि ॥ तृष्णया बद्ध्यते जंतुः सिंहः शृंखलया यथा ॥ ६७ ॥ इत्युक्त्वा भगवान्देवस्तत्रैवांतर्धिमाययौ ॥ सुरास्त्वाकर्ण्य तद्वाक्यं जग्मुश्चाभिमतां दिशम् ॥ ६८ ॥ चक्रुर्दुंदुभिनिर्घोषं प्रलयाभ्ररवोपमम् ॥ अथ दैत्यैर्महाव्योम्नि तैः पातालतलोत्थितैः ॥ ६९ ॥ कालक्षेपकरं घोरं पुनर्युद्धमवर्तत ॥ पुनः पलायनं चक्रुरयुध्यंत पुनः सुराः ॥ ७० ॥ एवं ते कालहरणं युद्धेन सुरपुंगवाः ॥ चक्रुर्नानाविधोपायैर्दैत्यव्यामोहकारणात् ॥ ७१ ॥ एतावता च कालेन दृढाभ्यासादहंकृतेः ॥ दामादयोऽहमित्यास्थां जगृहुर्युक्तचेतसः ॥ ७२ ॥ भववासनया ग्रस्ता मोहवासनया युताः ॥ आशापाशनिबद्धास्ते ततः कृपणतां गताः ॥ ७३ ॥

प्रतिबिंबमुपेष्यतीत्यन्वयः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

 यथेति ॥ दामादयोयथाप्रतिभामात्ररूपिणः मायापरिकल्पितत्वात्प्रातिभासि 
कदेहाः। इमेवयमपितथैवप्रतिभामात्ररूपिणः बहिश्चिदाकाशात्बहिःक्वापिनसंस्थिताः ॥८१॥८२॥ प्रतीति ॥ परात्मनः सकाशात्प्रतिभा



स्थिरोभवतुमेदेहःसुखायास्तुधनंमम ॥ इतिवृद्धाधियांतेषांधैर्यमंतर्धिमाययौ ॥ ७४ ॥ अतस्त
स्मिन्रणेदैत्याःसापेक्षत्वमुपाययुः ॥ मरिष्यामोमरिष्यामइतिचिंताहताशयाः ॥ ७५ ॥ अथ
प्रम्लानसत्वास्तेहंतुमग्रगतंभटम् ॥ नशेकुरिंधनेक्षीणेहविर्दग्धुमिवाग्नयः ॥ ७६ ॥ बहुनात्रकि
मुक्तेनमरणाद्भीतचेतसः ॥ पलायनैकशरणानष्टास्तेत्रिदशारयः ॥ ७७ ॥ अहमेतत्प्रबोधायव
च्मिराममहामते ॥ दामव्यालकटन्यायोमाभवत्वितिलीलया ॥ ७८ ॥ अविवेकानुसंधानाच्चित्त
मापदमीदृशीम् ॥ अनंतभवदुःखायपरिगृह्णातिहेलया ॥७९॥ रामउवाच ॥ कथंदामकटव्यालाः
समुत्पन्नाःपरात्पदात् ॥ इतिमेसंशयंब्रह्मन्यथावच्छेत्तुमर्हसि ॥ ८० ॥ वसिष्ठउवाच ॥ यथादा
मादयोरामप्रतिभामात्ररूपिणः ॥ तथैवेमेवयमितिनबहिःक्वापिसंस्थिताः ॥ ८१ ॥ अलीकमे
वत्वद्भावोमद्भावोऽलीकमेवच ॥ दामव्यालकटादीनांसद्भावोऽलीकमेवच ॥ ८२ ॥ प्रतिभासम
यीकाचिज्जीवशक्तिः परात्मनः ॥ शंबरध्यानविक्षुब्धात्रिधोल्लासमवापसा ॥ ८३ ॥ तस्मान्ने
मेवयंसत्यानचदामादयःक्वचित् ॥ सत्यंसंवेदनंशुद्धंबोधाकाशंनिरंजनम् ॥ ८४ ॥



समयीसाकाचिज्जीवशक्तिः शंबरध्यानेनविक्षुब्धासती त्रिधादामादिरूपेणउल्लासमवाप ॥ ८३ ॥ तस्मादिति ॥ भेदः प्रपंचः सर्वोऽप्यसत्यः

चिदाकाशमात्रंशुद्धंसंवेदनमेवसत्यम्॥८४॥तस्यचिन्मात्रस्यशक्तिसमुल्लासमिदंजगत्स्थितमितिश्लोकद्वयाभिप्रायः॥८५॥सर्वत्रेति॥यथानुभू
तंअनुभवानुसारेणसर्वंसर्वत्रास्ति नचानुभूतम्। चशब्दश्चेदर्थे नचेदनुभूतंतर्हिकिंचनक्कचिन्नास्ति। शांतंसद्रूपमेकंवस्तुइत्थमाततंव्याप्तंसत्इदं
विश्वमास्तेजगद्रूपेणभाति अतः कारणात्त्वंसंत्यक्तशंकंअभेदंवास्वशंकांभेदंचविहायसुखंतिष्ठेत्यर्थः॥८६॥इतिश्रीमदल्लालसूरिसूनुनापदवा
क्यप्रमाणपारावारदृश्वनाश्रीमुम्मडिदेवविद्वदाचार्यविरचितसंसारतरणिनाम्निवासिष्ठविवरणेदामाद्युपाख्यानंनामपंचदशः सर्गः ॥ १५ ॥

सत्यंसर्वगतंशांतमस्त्यनस्तमनोदयम् ॥ तस्यशक्तिसमुल्लासमात्रंजगदितिस्थितिः ॥ ८५ ॥
सर्वत्रसर्वमिदमस्तियथानुभूतंनोकिंचनक्कचिदिहास्तिनचानुभूतम् ॥ शांतंसदेकमिदमाननमि
त्थमास्तेसंत्यक्तशंकमपभेदमतस्त्वमास्स्व ॥ ८६ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायेस्थितिप्रक
रणेदामाद्युपाख्यानंनामपंचदशःसर्गः ॥ १५ ॥ ॥ वसिष्ठउवाच ॥ इदंमेस्यादिदंमेस्यादि
तिबुद्धिर्महामते ॥ स्वेनदौर्भाग्यदैन्येननसत्यमुपतिष्ठति ॥ १ ॥ वेत्तिनित्यमुदारात्मात्रैलोक्य
मपियस्तृणम् ॥ तंत्यजंत्यापदःसर्वामृगाइवजरत्तृणम् ॥ २ ॥ परिस्फुरतियस्यांतर्नित्यंसत्य
चमत्कृतिः ॥ ब्राह्ममंडमिवाखंडंलोकेशाःपालयंतितम् ॥ ३ ॥

पूर्वंदामाद्युपाख्यानेऽविवेकादहंममाभिमानाभ्यांसंसारोवर्धतइत्युक्तम् इदानींभीमाद्युपाख्यानेदेहादावहंकाररराहित्यं पुरुषार्थायप्रकल्पतइ
ति प्रतिपाद्यते। तत्रादौहितमुपदिशति॥इदमिति॥ सर्वंजगदात्मन्येववर्तते सर्वात्मकश्चात्मा एवंचसतिस्वेनैवदौर्भाग्यदैन्येनदुर्भगोऽहमिति
दीनभावेनइदंपुत्रादिकंमेस्यात् इदंक्षेत्रादिकंचमेस्यादितियाबुद्धिः तस्याहेतोः सत्यंब्रह्म नोपतिष्ठति नसंनिधत्ते नप्रकाशतइत्यर्थः॥१॥२॥
परीती ॥ यस्यांतःसत्यचमत्कृतिः सत्यस्व[illegible]तुल्यं ब्रह्मगर्भत्वात्ब्रह्मांडमिवलोकेशाःपालयंतिबहुम

न्यंतइत्यर्थः ॥ ३ ॥ येषामिति ॥ तेउक्तगुणयुक्ताएवनराःपुरुषाः । अपरेपशवइत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ यथेति ॥ चिरकालंपक्कासिद्धिः पुष्टफलासतीपराउत्कृष्टाभवेदित्यन्वयः ॥ ८ ॥ वीतेति ॥ अगर्धंअनाकांक्षम् । गृधुअभिकांक्षायामित्यस्माद्धातोः अपर्यंत्रणंअपगतकौटि

येषांगुणोषुसंतोषोरागोयेषांश्रुतंप्रति ॥ सत्यव्यसनिनोयेचतेनराःपशवोऽपरे ॥ ४ ॥ अथापदिदुरं तायांनैवगंतव्यमक्रमम् ॥ राहुरप्यक्रमेणैवपिबन्नप्यमृतंमृतः ॥ ५ ॥ अवश्यावश्यतांयांतियांतिसर्वा पदःक्षयम् ॥ अक्षयंभवतिश्रेयःक्रीतंयेनगुणैर्यशः ॥ ६ ॥ परमंपौरुषंयत्नमास्थायादायसूद्यमम् ॥ यथा शास्त्रमनुद्वेगमाचरन्कोनसिध्यति ॥ ७ ॥ यथाशास्त्रंविहरतात्वराकार्यानसिद्धिषु ॥ चिरकालंपराप क्वासिद्धिःपुष्टफलाभवेत् ॥ ८ ॥ वीतशोकभयायासमगर्धमपर्यंत्रणम् ॥ व्यवहारोयथाशास्त्रंक्रियतांमा विनश्यताम् ॥ ९ ॥ अनर्थायार्थसंपत्तिर्भोगौघोभवरोगदः ॥ आपदःसंपदःसर्वाःसर्वत्रानादरोजयः ॥ १० ॥ आचारचारुचरितस्यविविक्तवृत्तेःसंसारसौख्यफलदुःखदशास्वगृध्नोः ॥ आयुर्यशांसिचगु णाश्चसहैवलक्ष्म्याफुल्लंतिमाधवलताइवसत्फलाय ॥ ११ ॥ वसिष्ठउवाच ॥ नतपांसिनतीर्थानिनशा स्त्राणिजपंतिहि ॥ संसारसागरोत्तारेसज्जनासेवनंविना ॥ १२ ॥ लोभमोहरुषांयस्यतनुतानुदिनंभवे त् ॥ यथाशास्त्रंविहरतिस्वकर्मसुससज्जनः ॥ १३ ॥ अहमर्थोऽपरिज्ञातःपरमार्थांबरेमलः ॥ परिज्ञा तोऽहमर्थस्तुपरमार्थांबरंभवेत् ॥ १४ ॥

ल्यम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ अहमिति ॥ अपरिज्ञातोऽहंशब्दार्थः ॥ परमार्थांबरेचिदाकाशे मलःकलंकइवपरिज्ञातःश्रेष्ठएवाह मर्थःपरमार्थांबरंभवेत् जीवब्रह्मणोरैक्यादितिभावः ॥ १४ ॥ ॥ ॥ ॥ ॥

चिज्ज्योत्स्नेति ॥ परमार्थकुमुद्वतीपरमार्थकैवल्यम् ॥१५॥अहमिति॥ जन्मनामेववृक्षाणांअहंभावएवांकुरःममेदमितिभावः। तेषांजन्मवृक्षा णांअसत्फलाः दुःखफलाः शाखाः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥२१॥ २२ ॥ २३ ॥ अनयेति ॥ अनयाशरीरपरिमिता

चिज्ज्योत्स्नायावदेवांतरहंकारघनावृता ॥ विकाशयतिनोतावत्परमार्थकुमुद्वती ॥ १५ ॥ अहंभावोऽकु रोजन्मवृक्षाणामक्षयात्मनाम् ॥ ममेदमितिविस्तीर्णास्तेषांशाखास्त्वसत्फलाः ॥ १६ ॥ रामउवाच॥ किमाकृतिरहंकारःकथंसंत्यज्यतेप्रभो ॥ सशरीरोऽशरीरश्चत्यक्तेतस्मिंश्चकिंभवेत् ॥ १७॥ वसिष्ठउ वाच ॥ त्रिविधोराघवास्तीहसोऽहंकारोजगत्त्रये॥ द्वौश्रेष्ठावितरस्त्याज्यःशृणुतेकथयाम्यहम् ॥ १८॥ अहंसर्वमिदंविश्वंपरमात्माहमच्युतः॥नान्यदस्तीतिसंचिंत्यपरमासाह्यहंकृतिः॥१९॥एषासानैवबंधा यजीवन्मुक्तस्यविद्यते॥सर्वस्माद्व्यतिरिक्तोऽहंवालाग्रशतकल्पितः॥ २० ॥ इतियासंविदेवासौद्वितीया हंकृतिःशुभा ॥ मोक्षायैषानबंधायजीवन्मुक्तस्यविद्यते ॥ २१ ॥ पाणिपादादिमात्रोऽयमहमित्येषनिश्च यः॥ अहंकारस्तृतीयोऽसौलौकिकस्तुच्छएवसः ॥ २२ ॥ वर्ज्यएषदुरात्मासौकंदःसंसारसंततेः ॥ अनेनाभिहतोजंतुरधोऽधःपरिधावति ॥ २३ ॥ अनयादुरहंकृत्याभावात्संत्यक्तयाचिरम् ॥ शिष्टाहंका रवान्जंतुर्भवत्याशुविमुक्तये ॥ २४ ॥ प्रथमौद्वावहंकारावंगीकृत्यातिलौकिकौ ॥ तृतीयाहंकृतिस्त्या ज्यालौकिकीदुःखदायिनी ॥ २५ ॥ ॥ ॥

त्मविषयया दुरहंकृत्याभावादभिप्रायाच्चिरं संत्यक्तयासत्या शिष्टाहंकारवान् सर्वात्मकोऽहंसर्वातीतोऽहमितिचयौद्वावहंकारौशिष्टौतद्वा न्जंतुर्मुक्ततांयाति ॥ २४ ॥ २५॥ ॥ ॥ ॥ ॥

॥ १२ ॥

एषातावत्परित्याज्यात्यक्त्वैनादुःखदायिनीम् ॥ यथायथापुमास्तिष्ठेत्परमेतितथातथा ॥२६॥ अहंकृतिदृशावेतेपूर्वोक्तेभावयन्यदि ॥ तिष्ठत्यभ्येतिपरमंतत्पदंपुरुषोऽनघ ॥ २७ ॥ अथतेअ पिसंत्यज्यसर्वाहंकृतिवर्जितः ॥ सतिष्ठातितथात्युच्चैःपदमेवाधिरोहति ॥२८॥ शरीरावस्थामहा पुण्यादुरहंकृतिवर्जनात् ॥ अत्यंतंपरमंश्रेयएतदेवपरंपदम् ॥ २९ ॥ वसिष्ठउवाच ॥ अथतेशृ णुवक्ष्यामिदामादिषुगतेष्वपि ॥ देवनिर्जितसैन्योऽसौशंबरोदृप्तमानसः ॥ ३० ॥ पुनर्देववधो पायंचिंतयामासदानवः ॥ दामादयोयेरचितास्तेमयामाययापुरा ॥ ३१ ॥ मोहात्तैर्भाविताबुद्धि र्मिथ्यैवांतरहंकृतिः ॥ इदानींसंसृजाम्यन्यान्दानवान्माययोत्तमान् ॥ ३२ ॥ तानप्यध्यात्म शास्त्रज्ञान्सविवेकान्करोम्यहम् ॥ ततस्तत्त्वपरिज्ञानान्मिथ्याभावनयोज्झिताः ॥३३॥ नाहंका रंप्रयास्यंतिविजेष्यंतेचतेसुरान् ॥ इतिसंचिंत्यदैत्येंद्रस्तादृशान्दानवान्धिया ॥३४॥ माययो त्पादयामासबुद्बुदानिववारिधिः ॥ सर्वज्ञावेद्यवेत्तारोवीतरागागतैनसः ॥ ३५ ॥ याथाप्राप्तैक कर्तारोभावितात्मानउत्तमाः ॥ भीमोभासोदृढइतिनामाभिःपरिलांछिताः ॥ ३६ ॥ जगत्तृण मिवाशेषंपश्यंतःपावनाशयाः ॥ तेदैत्येन्द्रवचः प्राप्यछादयामासुरंबरम् ॥ अयुध्यंतसमंदेवै रपिवर्षगणान्बहून् ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥

॥ १२ ॥

त्वात् परमंश्रेयःपरंपदमित्यपिएतदेवनान्यतत्तत्साधनत्वात् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

तेषामिति ॥ तेषांभीमादीनांयावन्ममेदं अयमहमितिचवासनांतरुदेतितावत्कालंसावासनाविचारात्स्वस्वरूपविचाराद्धेतोः असत्यतां याति तेषांब्रह्मवित्त्वादिदमहंते नस्थिरेइत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ इतिश्रीमदल्लालसू

तेषांयावदुदेत्यंतर्ममेदमितिवासना ॥ तावत्कोऽयमहंतेतिविचाराद्यात्यसत्यताम् ॥ ३८ ॥ ततस्तैर्निरहंकारैर्जरामरणनिर्भयैः ॥ प्राप्तार्थकारिभिर्वीरैर्वर्तमानानुवर्तिभिः ॥ ३९ ॥ वीतरागैर्गतद्वेषैःसततंसमदृष्टिभिः ॥ ४० ॥ सादैवीदानवैःसेनाभीमभासदृढादिभिः ॥ हतामुक्ताक्षताक्षुण्णास्वान्नश्रीरिवभोक्तृभिः ॥४१॥ भीमभासदृढक्षुण्णाततोगीर्वाणवाहिनी ॥ परिदुद्राववेगेनगंगेवहिमवच्युता ॥४२॥ सासुरानीकिनीदेवंक्षीरोदार्णवशायिनम् ॥ जगामशरणंशैलंवाताहतैवाभ्रमालिका ॥४३॥ अथदेवेनतेदैत्याःसंगरेभृशदारुणे ॥ चक्राग्निज्वालनिर्दग्धाःप्रापितावैष्णवींपुरीम् ॥४४॥ तस्माद्वासनयाबद्धंमुक्तंनिर्वासनंमनः ॥ रामनिर्वासनीभावमाहराशुविवेकतः ॥ ४५ ॥ सम्यगालोकनात्सत्याद्वासनाप्रविलीयते ॥ वासनाविलयेचेतःशाम्यत्यस्नेहदीपवत् ॥४६॥ इतिश्रीयोगवासिष्ठसारेस्थितिप्रकरणेभीमाद्युपाख्यानंनामषोडशःसर्गः ॥१६॥ वसिष्ठ उवाच ॥ अस्यसंसारदुःखस्यसर्वोपद्रवकारिणः ॥ उपायएकएवास्तिमनसःस्वस्यनिग्रहः ॥१॥

रिसूनुनापदवाक्यप्रमाणपारावारदृश्वनाश्रीमुम्मडिदेवविद्वदाचार्यविरचितेसंसारतरणिनाम्निवासिष्ठविवरणेस्थितिप्रकरणेभीमाद्युपाख्यानं नामषोडशःसर्गः ॥ १६ ॥ पूर्वंभीमाद्युपाख्यानेअहंममवासनात्यागोमुक्त्यर्थायकल्पतइत्युक्तम् । इदानींतदुपपादनायजगत्स्थितेर्मायिक

त्वंविशदंप्रतिपाद्यते। तत्रतावदुपायमुपदिशति ॥ अस्येति ॥ संसारदुःखस्य दुःखयतीतिदुःखं दुःखहेतुरित्यर्थः। संसाररूपस्यदुःखहेतोरिति यावत् दुःखत्वेहेतुः सर्वोपद्रवदायिनइति। उपायःनिवृत्त्युपायइत्यर्थः ॥१॥२॥ किमिति ॥ इदंजगतियद्वस्तुस्वादुमनसःप्रियंप्रतीयतेतत्सर्वं विषवद्वह्निवच्चदृश्यतां संतापहेतुत्वादहितमितिविचार्यताम् ॥ ३ ॥ ४ ॥ मनसइति ॥ मनसःअभ्युदयः अभितउदयोविस्तारइत्यर्थः। स मनोऽभ्युदयोनाशःस्वरूपादर्शनहेतुत्वात्। मनोनाशस्तु आत्मनोमहोदयः निःश्रेयसहेतुत्वाज्ज्ञस्यज्ञानिनोमनोनाशमभ्येति अज्ञस्यतुम



श्रूयतांज्ञानसर्वस्वंश्रुत्वाचैवावधार्यताम् ॥ भोगेच्छामात्रकोबंधस्तत्त्यागोमोक्षउच्यते ॥ २ ॥ किमन्यैःशास्त्रसंदर्भैःक्रियतामेतदेवतु ॥ यद्यत्स्वादुहितत्सर्वंदृश्यतांविषवन्हिवत् ॥ ३ ॥ विषयाविषमाभोगाःप्रविचार्यपुनःपुनः ॥ मनसासंपरित्यज्यसेव्यमानाःसुखावहाः ॥ ४ ॥ मनसोऽभ्युदयोनाशोमनोनाशोमहोदयः ॥ ज्ञमनोनाशमभ्येतिमनोऽज्ञस्यहिशृंखला ॥ ५ ॥ नानंदंननिरानंदंनचलंनाचलंस्थिरम् ॥ नसन्नासन्नचैतेषांमध्यंज्ञानिमनोविदुः ॥ ६ ॥ श्रीरामउवाच ॥ यथेदंसंस्थितंविश्वंविश्वातीतेचिदात्मनि ॥ तन्मेकथयहेब्रह्मन्पुनर्बोधविवृद्धये ॥ ७ ॥

नएवशृंखला ॥५॥ नेति ॥ ज्ञानिनोमनोनिर्वासनत्वाद्व्यवहारहेतुत्वाच्च किमित्यपिनिरूपयितुंनशक्यते। तथाहि। नतावदानंदात्मकं जडत्वात्। नचनिरानंदं आनंदानुभवहेतुत्वात्। नचलं आत्मैकनिष्ठत्वात्। नाचलंस्थिरंनियतंयथाभवतितथा बहिरपिस्फुरणात्। नसत्संकल्पादेस्तत्कार्यस्याभावात्। नासत् इंद्रियाणांविषयेषुप्रवर्तनात्। नचैतेषामानंदनिरानंदादीनांमध्यं परस्परविरोधेपक्षांतरानुदयात्। तस्मादनिर्वचनीयंज्ञानिमनोविदुरित्यर्थः ॥ ६ ॥ ७ ॥

विश्वस्यविवर्तभावेनचिदात्मनावस्थानेनहिदर्शयितुंचित्स्वरूपनिरूपणायदुर्लक्ष्यत्वंतावदाह ॥ यथेति ॥ चिदाभासश्चित्प्रकाश्योभूताकाशः सौक्ष्म्यान्निरवयवत्वाद्यथानोपलक्ष्यते तथाचिद्भावश्चिद्रूपःपदार्थः सर्वगोऽपिनिरंशत्वान्नोपलक्ष्यते ॥ ८ ॥ सर्वेतिश्लोकद्वयंवाक्यम् । वस्तुतःसर्वसंज्ञाविवर्जितापिसैषाचित् स्वात्मेत्यादिकृताभिधास्वमित्यात्मेतिचेतनइत्येवमादिभिःशब्दैःकल्पितसंज्ञेत्यर्थः ॥ ९ ॥ आकाशातशतेनभागैरच्छा शतगुणाच्छेत्यर्थः । ज्ञेषुज्ञानिषुनिष्कलरूपिणीनिष्कलंकस्वरूपा सकलाज्ञनिष्ठायाःपूर्वमभिधानादज्ञेषुसकलंका अतएवमलसंसारस्वरूपैकात्मदर्शिनी मलमज्ञानंसंसारस्तथातत्कार्यंतयोःस्वरूपेणसहएकःऐक्यापन्नोयआत्मातथाभूतंआत्मानंदर्शयंती

वसिष्ठउवाच ॥ यथासर्वगतःसौक्ष्म्यादाकाशोनोपलक्ष्यते ॥ तथानिरंशश्चिद्भावःसर्वगोऽपिनलक्ष्यते ॥ ८ ॥ सर्वसंकल्परहितासर्वसंज्ञाविवर्जिता ॥ सैषाचिदविनाशात्मास्वात्मेत्यादिकृताभिधा ॥ ९ ॥ आकाशशतभागाच्छाज्ञेषुनिष्कलरूपिणी ॥ सकलामलसंसारस्वरूपैकात्मदर्शिनी ॥ १० ॥ तरंगादिमयीस्फारानानातासलिलार्णवे ॥ तस्मान्नव्यतिरेकेणयथाभातिविसारिणी ॥ ११ ॥ त्वत्तामत्तामयीस्फारानानासेयंचिदर्णवे ॥ चिन्मात्राव्यतिरेकेणतथैवेत्थंप्रकाशते ॥ १२ ॥ अज्ञेष्वसत्स्वभावोग्रसंसारगणगर्भिणी ॥ ज्ञेषुप्रकाशरूपैवसकलैकात्मिकासती ॥ १३ ॥

अज्ञानतत्कार्याभ्यामभिन्नमात्मानंदर्शयंतीत्यर्थः । मलसंसारस्वरूपेणात्मदर्शिनीतिपाठेऽपिसएवार्थः । मलसंसारयोःस्वरूपेणअभिन्नंआत्मानंदर्शयतीति ॥ १० ॥ तरंगेतिश्लोकद्वयंवाक्यम् । अर्णवेतरंगफेनबुद्बुदादिस्वरूपागतिवशाद्विसारिणी नानारूपता यथातस्मादर्णवादव्यतिरेकेणप्रकाशते ॥ ११ ॥ तथात्वत्तामत्तामयीस्फारेयंनानामताअपिचिदर्णवेचिन्मात्राव्यतिरेकेणैवप्रकाशतइत्यन्वयः ॥ १२ ॥ अज्ञेष्वितिश्लोकत्रयंवाक्यम् । अज्ञेषुअसत्स्वभावारागद्वेषादिका[illegible]सत्स्वभावाअतएवोग्रसंसारगणगर्भिणी घोरेणसंसृतिसमूहेन

गर्भवतीसंसारपरंपराहेतुरित्यर्थः । ज्ञेषुतुप्रकाशरूपाविशुद्धज्ञानरूपैवसकलैकात्मिकासर्वत्राभिन्नस्वभावासती ॥ १३ ॥ अनुभूतीति ॥ अनुभूतिवशात्तत्तद्विषयानुभववशात्कर्मादीनांकार्यकारकाणांप्रकाशनी सर्वभावानांसर्वेषांभोग्यवस्तूनांस्वादनीरसज्ञानहेतुः । भवभोगिनांसंसारिणांभावनीप्रवृत्तिहेतुः एवंभूताचित् ॥१४॥ नास्तमेतिनचोदेति नित्यत्वात् । नोत्तिष्ठतिनतिष्ठति निर्विकारत्वात् । नचयातिनचायाति निष्क्रियत्वात् । नचेहवर्ततेनिराधारत्वात् । नचनेहवर्ततेपरिपूर्णत्वात् ॥ १५ ॥ सेति ॥ सैषापूर्वोक्ताचिन्निर्मलाकारास्वात्मन्येव संस्थिता इत्थंजगन्नाम्नाप्रपंचेनविजृंभते ॥ १६ ॥ तदितिसार्धश्लोकत्रयंवाक्यम् ॥ तत्पूर्वोक्तंचिद्रूपंपरंवस्तुसर्वगेनपरिपूर्णेन उदितात्म

॥ १४ ॥

अनुभूतिवशान्नित्यंकर्मादीनांप्रकाशिनी ॥ स्वादिनीसर्वभावानांभावनीभवभोगिनाम् ॥ १४ ॥ नास्तमेतिनचोदेतिनोत्तिष्ठतिनतिष्ठति ॥ नचयातिनचायातिनचेहनचनेहचित् ॥ १५ ॥ सैषाचिदमलाकारास्वयमात्मनिसंस्थिता ॥ राघवेयंप्रपंचेनजगन्नाम्नाविजृंभते ॥ १६ ॥ तत्स्वभावेनचिन्नाम्नासर्वगेनोदितात्मना ॥ प्रकाशेनाप्रकाशेननिरंशेनांशधारिणा ॥ १७ ॥ स्वयंस्वकल्पनायोगादनंतंपदमुज्झता ॥ अयमस्मीतिभावेनगच्छताज्ञपदंशनैः ॥ १८ ॥ नानातायांप्रवृद्धायामस्यांसंसृतिपूर्वकम् ॥ भावाभावग्रहोत्सर्गपदेस्थितिमुपागते ॥ पुर्यष्टकंस्पंदशतैःकरोतिनकरोतिच ॥ १९ ॥

ना अनस्तमितरूपेण प्रकाशेनाप्रकाशेनज्ञानाज्ञानरूपेण निरंशेनांशधारिणानिरवयवसावयवरूपेण स्वकल्पनायोगात् स्वसंकल्पवशात् स्वयमेवअनंतपदंस्वस्वरूपावस्थानमुज्झता अयमस्मीतिभावेनउपहिताकाराभिमानेनअज्ञपदंजीवभावंगच्छताचिन्नाम्नास्वभावेनसंसृतिपूर्वकम् ॥ १७ ॥ १८ ॥ नानातायांप्रवृद्धायांसत्यां भावाभावग्रहोत्सर्गपदे इदंभावरूपमिदमभावरूपमिदंगृहीतमिदमुत्सृष्टमित्येवंरूपेभेदपदे स्थितिमुपागतेसति स्पंदशतैर्विकल्पगतैःपुर्यष्टकंवक्ष्यमाणलक्षणंसूक्ष्मशरीरंकरोति नकरोतिच वस्तुतःकारणाभावात् ॥ १९ ॥



॥ १५ ॥

॥२०॥ व्योमनीति ॥ यथानिदाघानंतरंव्योम्निसरितोवृष्टयोलक्ष्यंते तद्वन्निराभासेनिष्कलंकेचित्तत्वेसृष्टिरूपादृष्टयइत्यर्थः ॥२१॥ यथेति ॥ यथाह्यात्मामदवशात्संमोहानंदसंभेदोमदिरादिकृतोमदः तद्वशात्स्वस्मादन्यवत्प्रतिभासतेतथैवचित्त्वस्याविद्यातःचित्स्वरूपाज्ञानाद्धेतोः सएवात्माअसइवतस्मादन्यइवस्थितः ॥ २२ ॥ येनेति ॥ बाह्येन्द्रियप्रणालिकयाबहिःप्रसृतेनयेनचैतन्येनशब्दादीन्विषयान्जानासि सोऽयंतादृशचैतन्यरूपोऽयमात्मापरंब्रह्मसएवात्मासर्वमापूर्यसंस्थितः ॥ २३ ॥ ब्रह्मेति ॥ ब्रह्मैवनाम्नावियदादिनामभेदेनइदंजगत्स्थितं

इत्थंस्थिरबलाकाराः संसारावलयोऽभितः ॥ स्वभावाद्ब्रह्मणःसर्वाःपुनरायांतियांतिच ॥ २० ॥
व्योमन्येवचिदाभासेनिदाघात्सरितोयथा ॥ लक्ष्यंतेतद्वदेवेमाश्चित्तत्वेसृष्टिदृष्टयः ॥ २१ ॥
यथामदवशादात्माअन्यवत्प्रतिभासते ॥ तथैवचित्त्वाविद्यातःसएवासइतिस्थितः ॥ २२ ॥
येनशब्दंरसंरूपंगंधंजानासिराघव ॥ सोऽयमात्मापरंब्रह्मसर्वमापूर्यसंस्थितः ॥ २३ ॥ ब्रह्मै
वेदंस्थितंनाम्नामलमस्तीहनेतरत् ॥ तरंगोग्रगणैरंभःसिंधोःस्फुरतिनोरजः ॥ २४ ॥ द्वितीयाक
ल्पनैवेहनरघूद्वहविद्यते ॥ ब्रह्ममात्रादृतेवन्हावौष्ण्यमात्रादृतेयथा ॥ २५ ॥ आदौशमदमप्रायैर्गु
णैःशिष्यंप्रबोधयेत् ॥ पश्चात्सर्वमिदंब्रह्मशुद्धस्त्वमितिबोधयेत् ॥ २६ ॥

जगद्रूपेणस्थितमित्यर्थः । इहमलंअविद्यातत्कार्यरूपंइतरत्ब्रह्मणोव्यतिरिक्तंकिंचिन्नास्ति । तथाहि । सिंधोस्तरंगोग्रगणैःअंभएवस्फुरति नोरजः । रजइत्युपलक्षणंनवस्त्वंतरंस्फुरतीत्यर्थः ॥ २४ ॥ द्वितीयेति ॥ यथावन्हावौष्ण्याद‍ृतेद्वितीयाकल्पनानविद्यते एवमिहजगतिसच्चि दानंदात्मकंयद्ब्रह्मरूपंतन्मात्रादृतेद्वितीयाकल्पनानास्ति ॥ २५ ॥ इत्थंचेतनाचेतनप्रपंचस्यचिद्विवर्ततयातदभेदंनिरूप्याधिकारिणस्तादृ शस्यैवायमर्थःपरिस्फुरतीतिदर्शयितुमाह ॥ आदाविति ॥ आदौशमादिसाधनचतुष्टयसंपत्तिंपरीक्ष्यपश्चादधिकारिणंबोधयेदित्यर्थः ॥२६॥

अनधिकारिबोधेतुमहान्प्रत्यवायइत्याह ॥ अज्ञस्येति ॥ सः अज्ञः तेनबोधकेन ॥ २७ ॥ प्रबुद्धेति ॥ निराशिषः निःसंकल्पस्यत्वादृशस्यै
वअविद्यामलंनास्तीतिबोधोगोचरः योग्यइत्यर्थः ॥ २८ ॥ सतीति ॥ दीपालोकादिवच्चिज्जगतोरपिकार्यकारणत्वात् नपरस्परंवियोगो
नापिभेदइतिभावः ॥ २९ ॥ क्षीरोदेति श्लोकद्वयंवाक्यम् ॥ शीतलवैरातपलवैश्चोपलक्षितःप्रावृड्लोलाभ्रःप्रावृषिवर्षाकालेलोलान्यभ्राणिय
स्मिन्सवासरइव क्षणमांध्यमवाप्नोमिक्षणंप्रकाशतांयामीत्यन्वयः ॥ ३० ॥ ३१ ॥ अनंतस्येति ॥ सर्वस्यसर्वात्मकस्य एकस्याद्वितीयस्य

अज्ञस्यार्धप्रबुद्धस्यसर्वंब्रह्मेतियोवदेत् ॥ महानरकजालेषुसतेनविनियोजितः ॥ २७ ॥ प्रबुद्धबुद्धेःप्र
क्षीणभोगेच्छस्यनिराशिषः ॥ नास्त्यविद्यामलमितित्वादृशस्यैवगोचरः ॥२८॥ सतिदीपइवालोकःस
त्यर्कइववासरः ॥ सतिपुष्पइवामोदश्चितिसत्यांजगत्तथा ॥ प्रतिभासतएवेदंनजगत्परमार्थतः ॥२९॥
रामउवाच ॥ क्षीरोदकुक्षितुल्याभिःशीतलामलदीप्तिभिः ॥ तवोक्तिभिर्विचित्राभिर्गंभीराभिःप्रबो
धितः ॥ ३० ॥ क्षणमांध्यमिवाप्नोमिक्षणंयामिप्रकाशताम् ॥ शीतातपलवप्रावृड्लोलाभ्रइववासरः ॥
॥ ३१ ॥ अनंतस्याप्रमेयस्यसर्वस्यैकस्यभास्वतः ॥ अनस्तमितसारस्यकलनाकथमागता ॥ ३२ ॥
वसिष्ठउवाच ॥ यथाभूतार्थवाक्यार्थाःसर्वाएवममोक्तयः ॥ नासमर्थाविरूपार्थाःपूर्वापरविरोधतः ॥
॥ ३३ ॥ ज्ञानदृष्टौप्रसन्नायांप्रबोधेविततोदये ॥ यथावज्ज्ञास्यसिस्वस्थोमद्वाग्दृष्टिबलाबलम् ॥३४॥

भास्वतःनित्यंप्रकाशमानस्य अनस्तमितसारस्यअनष्टशक्तेः कलनाबंधहेतुरविद्याकथमागता तेजसस्तिमिरावरणासंभवादितिभावः
॥ ३२ ॥ यथेति ॥ ममोक्तयःसर्वाएवयथाभूतार्थवाक्यार्थाः विसंवादिवाक्यार्थाएव असमर्थाअसंगतार्थास्तुनभवंतिपूर्वापरविरोधतोवि
रूपार्थाविपरीतार्थाश्चनभवंति ॥ ३३ ॥ यद्येवंतर्हिकिमितितथानप्रतीयतइत्यत्राह ॥ ज्ञानेति ॥ मद्वाग्दृष्टिबलाबलंममवाचांतन्मूलभू

तायादृष्टेर्ज्ञानस्यचबलाबलंप्रामाण्यमप्रामाण्यंच ॥ ३४ ॥ अविद्ययेति ॥ उत्तमयापरिपक्वयास्वात्मनाशोद्यमोत्थया स्वस्वरूपनाशायय उद्यमस्तेनोदितयाचरमसाक्षात्काररूपया अप्यविद्यया विद्यापरिणामरूपत्वादविद्यायाःस्वात्मनाशोद्यमोत्थत्वंवेदितव्यम् ॥ ३५ ॥ ३६ ॥ ई दृशीति ॥ भूतमायाप्राणिनामविद्या । भवमायेतिपाठे भवःसंसारःतन्मूलभूतमायाईदृशी यास्वनाशेनस्वयंनष्टासती हर्षदाब्रह्मानंददायिनी । अस्याःस्वरूपंतुनलक्ष्यतेद्रष्टुंनशक्यते यतःप्रेक्ष्यमाणैवनश्यति असत्यत्वादितिभावः ॥ ३७ ॥ नास्तीति ॥ ज्ञेयसंप्राप्त्याज्ञेयस्यब्रह्मात्मैक्य

अविद्ययैवोत्तमयास्वात्मनाशोद्यमोत्थया ॥ विद्यासाप्राप्यतेराम सर्वदोषापहारिणी ॥ ३५ ॥ शाम्यतिह्यस्त्रमस्त्रेणमलेनक्षाल्यतेमलः ॥ शमंविषंविषेणैतिरिपुणाहन्यतेरिपुः ॥ ३६ ॥ ईदृशीभूतमायेयं यास्वनाशेनहर्षदा ॥ नलक्ष्यतेस्वभावोऽस्याः प्रेक्ष्यमाणैवनश्यति ॥३७॥ नास्त्येषापरमार्थेनेत्येवंभावनयेद्धया ॥ ज्ञोभूत्वाज्ञेयसंप्राप्त्याज्ञास्यस्यस्यास्त्वमाशयम् ॥ ३८ ॥ यावत्तुनप्रबुद्धत्वंतावन्मद्वच सेवते ॥ निश्चयोभवतूद्दामोनास्त्यविद्येतिनिश्चलः ॥३९॥ सर्वंब्रह्मेतियस्यांतर्भावनासहिमुक्तिभाक् ॥ भेददृष्टिरविद्येयंसर्वथातांविवर्जयेत् ॥ ४० ॥ अविद्यासरितःपारमात्मलाभादृतेकिल ॥ रामनासाद्यतेतद्धिपदमक्षयमुच्यते ॥ ४१ ॥ कुतोजातेयमितितेराममास्तुविचारणा ॥ इमांकथमहंहन्मीत्येषातेऽस्तुविचारणा ॥ ४२ ॥

स्यसंप्राप्त्या । अस्याअविद्यायाःआशयंस्वभावम् ॥ ३८ ॥ ३९ ॥ ४० ॥ अविद्येति ॥ आत्मलाभादृतेस्वरूपसाक्षात्कारमंतरेणअविद्यासरितःपारंनासाद्यते । अविद्यानिवृत्तिर्नसिध्यतीत्यर्थः । हियस्मात्कारणात्तत्सत्अविद्यापारमेवअक्षयंपदंकैवल्यमुच्यते ॥ ४१ ॥ कुतइति श्लोकत्रयंवाक्यम् । इयमविद्याकुतोजातेति[illegible] भूयोजन्मदुःखेषुयथात्वांनवियोक्ष्यतितथाइमा

मविद्यांकथंहन्मीत्येषैवविचारणातेऽस्तु अस्याएवसप्रयोजनत्वात् ॥ ४२ ॥ सप्रयोजनत्वमेवाह ॥ अस्तमिति ॥ अस्याम विद्यायांक्षीणा यामस्तंगतायांसत्यां एषाअविद्यायतउद्भतास्वरूपेणचयथाभूतायथाचनष्टत्वादखंडितंअखिलंज्ञास्यसि ॥ ४३ ॥ तत्तस्मात्कारणाद्रो गशालायारोगादीनांरोगाणांआस्पदभूतायाअस्याअविद्यायाश्चिकित्सनेयत्नंकुर्वित्यन्वयः ॥४४॥ आत्मनीति ॥ व्योम्निमारुतोयथाआ त्मन्येवनाश्रयांतरेणआत्मनैवनहेत्वंतरेण सरतिगच्छतितथाआत्मापिस्वात्मशक्त्यैवस्वाभिन्नयाचिच्छक्त्यैव स्वात्मन्येवलोलतांजगद्रूपता



अस्तंगतायांक्षीणायामस्यांज्ञास्यसिराघव ॥ यतएषायथाचैषायथानष्टेत्यखंडितम् ॥ ४३ ॥ तद स्यारोगशालायायत्नंकुरुचिकित्सने ॥ यथैषाजन्मदुःखेषुनभूयस्त्वांनियोक्ष्यति ॥ ४४ ॥ आत्मन्येवा त्मनाव्योम्नियथासरतिमारुतः ॥ तथात्मास्वात्मशक्त्यैवस्वात्मन्येवैतिलोलताम् ॥४५॥ स्वात्मनि स्वपरिस्पंदैःस्फुरत्यच्छाश्चिदर्णवः ॥ एकात्मकमखंडंतदित्यंतर्भाव्यतांदृढम् ॥ ४६ ॥ किंचित्क्षुभि तरूपासाचिच्छक्तिश्चिन्महार्णवे ॥ तन्मय्येवस्फुरत्यच्छातत्रैवोर्मिरिवार्णवे ॥ ४७ ॥ क्षणंस्फुरंतीसा देवीसर्वशक्तितयातथा ॥ देशकालक्रियाशक्तीर्वयस्याःसंप्रकर्षति ॥ ४८ ॥

मेति आत्मैवजगतोऽधिकरणमुपादानंनिमित्तंचेत्यर्थः ॥ ४५ ॥ स्वात्मनीति ॥ चिदर्णवःस्वपरिस्पंदैःस्वरूपविक्षेपैःआत्मन्येवस्फुरतिअतः कारणात्तद्वस्तुएकात्मकमखंडंचेत्यंतर्दृढंभाव्यतांविचार्यताम् ॥ ४६ ॥ किंचिदिति ॥ चिन्महार्णवेसाअविद्यारूपाचिच्छक्तिः किंचित्क्षु भितरूपासती तन्मय्येवचिद्रूपैवतत्रैवस्फुरतिअर्णवेऊर्मिरिवेति ॥ ४७ ॥ क्षणमिति ॥ साचिद्रूपादेवीसर्वशक्तितयाअनंतशक्तित्वात्क्षणं तथास्फुरंतीवयस्याःसखीरिवसहचारिणीर्देशकालक्रियाशक्तीःसंप्रकर्षतिप्रेरयतिसृष्ट्यर्थंप्रवर्तयति ॥ ४८ ॥

स्वमिति ॥ असौचिद्देवीस्वस्वभावंस्वस्वरूपंविदित्वाउच्चैरुन्नते अनंतपदेकैवल्यपदेस्थितापिअविभाविताप्रमत्ताविचाररहितासती रूपंस्व रूपंपरिमितेनपरिच्छिन्नेनात्मनाभावयति ॥ ४९ ॥ यदेति ॥ परमकांतयादेव्यायदारूपमेवंपरिमितत्वेनभावितंतदैवैनांदेवींनामसंख्या दिकादृशोदृष्टयोऽनुगताभवंति ॥ ५० ॥ नामसंख्यादिभेदमेवप्रपंचयितुमाह सार्धेनश्लोकत्रयेण ॥ विकल्पेति ॥ विकल्पकल्पिताकारं संकल्पविकल्पाद्युपहिताकारंदेशकालक्रियास्पदंदेशकालादिभिरवच्छिन्नंचितोरूपंक्षेत्रज्ञइतिकथ्यते । क्षेत्रज्ञोजीवः ॥ ५१ ॥ सक्षेत्रज्ञो

स्वस्वभावंविदित्वोच्चैरप्यनंतपदेस्थिता ॥ रूपंपरिमितेनासौभावयत्यविभाविता ॥४९॥ यदैवंभावि तंरूपंतयापरमकांतया ॥ तदैवैनामनुगतानामसंख्यादिकादृशः ॥ ५० ॥ विकल्पकल्पिताकारंदेशका लक्रियास्पदम् ॥ चितोरूपंमहाबाहोक्षेत्रज्ञइतिकथ्यते ॥ ५१ ॥ वासनाःकलयन्सोऽपियात्यहंकारतां पुनः ॥ अहंकारोविनिर्णेताकलंकीबुद्धिरुच्यते ॥५२॥ बुद्धिःसंकल्पकलिताप्रयातिमननास्पदम् ॥ मनो घनविकल्पंतुगच्छतींद्रियतांशनैः ॥ पाणिपादादिमद्देहमिन्द्रियाणिविदुर्बुधाः ॥ ५३ ॥ एवंजीवोहिसं कल्पवासनारज्जुवेष्टितः ॥ दुःखजालपरीतात्माक्रमादायातिनीचताम् ॥ ५४ ॥ इतिशक्तिमयंचेतो घनाहंकारतांगतम् ॥ कोशकारकृमिरिवस्वेच्छयायातिबंधनम् ॥ ५५ ॥

ऽपिवासनाःकल्पयन्भावयन्नहंकारतांयाति । अहंकारोऽपिवासनाभिः कलंकीभूत्वाविनिर्णेतानिश्चेतासन् बुद्धिरुच्यते निश्चयात्मिकाबु द्धिरितिवचनात् ॥ ५२ ॥ बुद्धिरपिसंकल्पादिभिःकलितामननास्पदंस्पंदनंप्रयाति मनश्चघनविकल्पंनिबिडविकल्पंसदिन्द्रियतांबाह्येन्द्रि यत्वंगच्छति। इंद्रियाणिचपाणिपादमयंदेहंविदुः इन्द्रियाण्येवदेहइत्यर्थः ॥ ५३ ॥ एवमिति ॥ एवमुक्तेनप्रकारेणसंकल्पवासनारज्जुवेष्टितः सन्जीवएवदुःखजालपरीतात्माक्रमान्नीचतामायाति ॥ ५४ ॥ इतीति ॥ इतिपूर्वोक्तप्रकारेणसंकल्पशक्तिमयंविचित्रशक्तिकंचेतः चिदे

वघनाहंकारंसत्कोशकारक्रमिवत् स्वेच्छयैवबंधनंयाति ॥ ५५ ॥ स्वेति ॥ तदेवचेतःस्वेनसंकल्पितानांतन्मात्राणांशब्दादीनांजालस्या भ्यंतरवर्तिचभूत्वाशृंखलाबद्धसिंहवत्परांविवशतामेति ॥ ५६ ॥ क्वचिदितिश्लोकत्रयंवाक्यम् ॥ नानाशक्तिभूकमेतदेवचैतन्यंमनोबुद्ध्या दिरूपेणनानात्वंप्रतिपद्यतइत्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ इममितिसार्धश्लोकद्वयंवाक्यम् । वटधानावटबीजंकर्तृ वटमिव आशापाश विधायकंफलैर्हीनंनश्वरफलंइमंसंसारमंतरभ्यंतरेदधत् ॥ ६० ॥ चिंताभिरेवानलशिखाभिर्दग्धंकोपेनचाजगरेणसर्पेणचर्वितंभक्षितंकामैरे

स्वसंकल्पिततन्मात्रजालाभ्यंतरवर्तिच ॥ परांविवशतामेतिशृंखलाबद्धसिंहवत् ॥ ५६ ॥ क्वचि न्मनःक्वचिद्बुद्धिःक्वचिज्ज्ञानंक्वचित्क्रिया ॥ क्वचिदेवेत्यहंकारःक्वचित्पुर्यष्टकंस्मृतम् ॥ ५७ ॥ क्व चित्प्रकृतिरित्युक्तंक्वचिन्मायेतिकल्पितम् ॥ क्वचिन्मलमितिप्रोक्तंक्वचित्कर्मेतिसंस्थितम् ॥ ५८ ॥ क्वचिद्बंधइतिप्रोक्तंक्वचिच्चित्तमितिस्फुटम् ॥ प्रोक्तंक्वचिदविद्येतिक्वचिदिच्छेतिसंमतम् ॥ ५९ ॥ इमं संसारमखिलमाशापाशविधायकम् ॥ दधदंतःफलैर्हीनंवटधानावटंयथा ॥ ६० ॥ चिंतानलशिखा दग्धंकोपाजगरचर्वितम् ॥ कामाब्धिकल्लोलहतंविस्मृतात्मपितामहम् ॥ समुद्धरमनोराममातंग मिवकर्दमात् ॥ ६१ ॥ ज्वलज्जरामरणविषादमूर्छितेशुभाशुभप्रसरपराहताकृतौ ॥ दयेहनस्वम नसियस्यजायते नराकृतिर्जगतिसरामराक्षसः ॥ ६२ ॥

वाब्धिकल्लोलैर्हतं विस्मृतआत्मापितामहश्चयेनतथाभूतंमनोमातंगमिवकर्दमात्संसाररूपात्सकाशात्समुद्धर ॥ ६१ ॥ ज्वलदिति ॥ ज्वलद्भिर्जरामरणविषादैर्मूर्छितेशुभाशुभयोःपुण्यपापयोःप्रसरेणपराहताआकृतिर्यस्यतस्मिन्स्वमनसि यस्यदयाउद्धर्तुमिच्छानजायतेसनरा कृतीराक्षसएव ॥ ६२ ॥

एवमितिनवभिःश्लोकैर्वाक्यम् ॥ निर्झरात्प्रवाहाज्जलौघाइव कल्पिताकारात्मायासहिताद्ब्रह्मणःसकाशाद्भवभावनयासंसारवासनयास हिताःजीवरूपाश्रितोभावाविलासालक्षशःकोटिशः ॥ ६३ ॥ संख्यातीताश्चपुराजाताःअद्यापिजायंतेउत्पत्स्यंतेऽपिचतेचजन्मकालपौ र्वापर्यात्पुण्यपापतारतम्यात् ज्ञानवैचित्र्याच्चप्रथमचरमभावेनसुरनरतिर्यगादिभावेनजडभावेनचबहुधाभिद्यमानाः ॥ ६४ ॥ ६५ ॥ ६६ ॥

वसिष्ठउवाच ॥ एवंजीवाश्रितोभावाभवभावनयेहिताः ॥ ब्रह्मणःकल्पिताकारालक्षशोऽप्यथकोटि शः ॥ ६३ ॥ संख्यातीताःपुराजाताजायंतेऽद्यापिचाभितः ॥ उत्पत्स्यंतेऽपिचैवान्येजलौघाइवनिर्झ रात् ॥ ६४ ॥ केचित्प्रथमजन्मानःकेचिज्जन्मशताधिकाः ॥ केचिच्चासंख्यजन्मानःकेचिद्द्वित्रिभ वांतराः ॥ ६५ ॥ केचित्किन्नरगंधर्वविद्याधरमहोरगाः ॥ केचिदर्केंदुवरुणत्र्यक्षाधोक्षजपद्मजाः ॥६६॥ केचिद्ब्राह्मणभूपालवैश्यशूद्रगणाःस्थिताः ॥ केचित्पुण्यौषधीपत्रफलमूलपतंगकाः ॥ ६७ ॥ केचित्क दंबजंबीरशालतालतमालकाः ॥ केचिन्महेंद्रमलयाःसह्यमंदरमेरवः ॥ ६८ ॥ केचित्क्षारदधिक्षीरघृते क्षुजलराशयः ॥ केचिद्विशालाःककुभःकेचिन्नद्योमहारयाः ॥ ६९ ॥ विहरंत्युच्चकैःकेचिन्निपतंत्युत्पतं तिच ॥ कंदुकाइवहस्तेनमृत्युनाविरतंहताः ॥ ७० ॥ भुक्त्वाजन्मसहस्राणिभूयःसंसारसंकटे ॥ पतं तिकेचिदबुधाःसंप्राप्याप्यविवेकिताम् ॥ ७१ ॥ अविरतमियमाततास्थितौघैर्भवतिविनश्यतिवर्धते मुधैव ॥ त्रिभुवनरचनाविमोहमायापरमपदेलहरीववारिराशौ ॥ ७२ ॥

॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ संसारसंकटेपतंतीतिसमुदायार्थः ॥ ७१ ॥ अविरतमिति ॥ वारिराशौलहरीव परमपदेब्रह्मणित्रिभुवन रचनारूपाविमोहयंतीमायामुधैवभवतिवर्धतेविनश्यतीत्यन्वयः ॥ ७२ ॥

॥ ७३ ॥ ७४ ॥ दिक्कालेतिश्लोकद्वयंवाक्यम् दिक्कालादिभिरनवच्छिन्नमात्मतत्त्वंकर्तृ लीलयैवस्वशक्तितोहेतोःदिक्कालकलितंयद्वपुरादत्ते स्वीकरोति ॥ ७५ ॥ जीवपर्यायंजीवशब्दपर्यायवाच्यं तदेतद्रूपंवासनावशतःपरंवासनावशादेवकेवलंलोलंमनःसंपद्यते ॥ ७६ ॥ कलयंतीति ॥ मनोरूपाशक्तिःकलयंतीविचारयंतीसती आदावच्छांशब्दबीजरसोन्मुखीं शब्दएवबीजंशब्दतन्मात्रमित्यर्थः । तद्विषयोरसस्तद्भावनातदुन्मुखींतत्सापेक्षांतत्पूर्विकामित्यर्थः । तादृशीमाकाशभावनांभावयति पूर्वंशब्दतन्मात्रंभावयित्वापश्चादाकाशभावनांभावयति

रामउवाच ॥ जीवोमनःपदंप्राप्यवैरंचंपदमागतः ॥ यथाब्रह्मंस्तथासर्वंविस्तरेणवदाशुमे ॥ ७३ ॥ वसिष्ठउवाच ॥ ब्राह्मंशृणुमहाबाहोशरीरग्रहणक्रमम् ॥ निदर्शनेनतेनैवज्ञास्यसेजागतींस्थितिम् ॥ ७४ ॥ दिक्कालाद्यनवच्छिन्नमात्मतत्त्वंस्वशक्तितः ॥ लीलयैवयदादत्तेदिक्कालकलितंवपुः ॥ ७५ ॥ तदेतज्जीवपर्यायंवासनावशतःपरम् ॥ मनःसंपद्यतेलोलंकलनाकलनोन्मुखम् ॥ ७६ ॥ कलयंतीमनःशक्तिरादौभावयतिक्षणात् ॥ आकाशभावनामच्छांशब्दबीजरसोन्मुखीम् ॥ ७७ ॥ ततस्तद्घनतांयातंघनस्पंदक्रमान्मनः ॥ भावयत्यनिलस्पंदंस्पर्शबीजरसोन्मुखम् ॥ ७८ ॥ ताभ्यामाकाशवाताभ्यांदृढाभ्यासवशाद्यतः ॥ शब्दस्पर्शस्वरूपाभ्यांसंघर्षाज्जायतेऽनलः ॥ ७९ ॥

स्मेत्यर्थः । शब्दतन्मात्रस्याकाशनिदानत्वात् ॥ ७७ ॥ ततइति ॥ ततोऽनंतरंतन्मनोघनतांयातंसत्घनस्पंदक्रमातस्पर्शबीजरसोन्मुखंस्पर्शतन्मात्रभावनापूर्वकंअनिलस्पंदंवायोश्चलनंभावयति ॥ ७८ ॥ ताभ्यामिति ॥ शब्दस्पर्शस्वरूपाभ्यांआकाशवाताभ्यांसहदृढाभ्यासवशातयः संघर्षःतस्माद्धेतोर्मनएवानलोजन्यते । अग्निंभावयित्वातद्रूपंभवतीत्यर्थः । वशात्ततइतिपाठेततोमनसःअनलोजन्यतइत्यन्वयः ॥ ७९ ॥

मनइति ॥ तादृग्गुणगतं शब्दस्पर्शरूपगुणयुक्तंमनो रसतन्मात्रवेदनंरसतन्मात्रंभावयत्क्रमादपांशैत्यंचेततिभावयति ततोभावनाज्जलसं
विद्भवेत् ॥ ८० ॥ ततइति ॥ तादृग्गुणगतंशब्दस्पर्शरूपरसयुक्तंमनोगंधतन्मात्रंभावयति ततोऽनंतरमेतस्माद्भावनाद्भूमिसंविद्भवेत्
॥ ८१ ॥ अथेति ॥ अथमहाभूतसृष्ट्यनंतरं इत्थमनेनप्रकारेणभूतैस्तन्मात्रैश्चवेष्टितं अतएवतनुतांसूक्ष्मतांजहत्त्यजन्मनःकर्तृक्रमाद्व्योम्नि
स्फुरितंवह्निकणाकारंवपुःपश्यतिभावयति ॥ ८२ ॥ अहमिति ॥ अहंकारकलायुक्तंअहंकारांशैरेकादशभिरिंद्रियैर्युक्तंबुद्धिबीजसमन्वितं

मनस्तादृग्गुणगतंरसतन्मात्रवेदनम् ॥ क्षणाच्चेतत्यपांशैत्यंजलसंवित्ततोभवेत् ॥ ८० ॥ ततस्तादृ
ग्गुणगतंमनोभावयतिक्षणात् ॥ गंधतन्मात्रमेतस्माद्भूमिसंवित्ततोभवेत् ॥ ८१ ॥ अथेत्थंभूततन्मा
त्रैर्वेष्टितंतनुतांजहत् ॥ वपुर्वह्निकणाकारंस्फुरितंव्योम्निपश्यति ॥ ८२ ॥ अहंकारकलायुक्तंबुद्धिबी
जसमन्वितम् ॥ तत्पुर्यष्टकमित्युक्तंभूतहृत्पद्मषट्पदम् ॥ ८३ ॥ तस्मिंस्तत्तीव्रसंवेगाद्भावयन्भासुरंव
पुः ॥ स्थूलतामेतिपाकेनमनोबिल्वफलंयथा ॥ ८४ ॥ मूषास्थद्रुतहेमाभंस्फुरितंविमलांबरे ॥ संनि
वेशमथादत्तेतत्तेजःस्वस्वभावतः ॥ ८५ ॥

बुद्ध्यातन्मात्रैश्चसमन्वितंतद्व्योम्निस्फुरितंवपुर्भूतंहृत्पद्मषट्पदंभूतानांहृत्पुंडरीकेवर्तमानंपुर्यष्टकमित्युक्तम् ॥ ८३ ॥ तस्मिन्निति ॥ तस्मि
न्पुर्यष्टकेस्थित्वामनस्तीव्रसंवेगात्तीव्रवासनायोगाद्धेतोर्भासुरंवपुर्भावयत्पाकवशाद्बिल्वफलवत्स्थूलतामेति ॥ ८४ ॥ मूषेतिश्लोकद्वयंवा
क्यम् । अथअनंतरंमूषास्थद्रुतहेमाभं मूषानामप्रतिमादिनिर्माणार्थंविरचिता अंतःसांतरालामृन्मयीआकृतिः तत्स्थंद्रवीभूतंयद्धेमतत्सदृशं
विमलांबरेस्फुरितंतत्पुर्यष्टकरूपंतेजःस्वस्वभावतएव ॥ ८५ ॥

ऊर्ध्वमुपरिशिरःपिंडमयं अधःपादमयं पार्श्वयोर्हस्तसंस्थानं मध्येउदरधर्मिणंचसंनिवेशमादत्ते ॥ ८६ ॥ कालेनेतिसार्धश्लोकंवाक्यम् । सप्रवोक्तःसंनिवेशएवकालेनस्फुटतामेत्यअमलविग्रहःबुद्ध्यादियुक्तःसर्वलोकपितामहोभगवान्ब्रह्माभवतीत्यन्वयः ॥ तद्बुद्धिस्तात्कालिकी कार्याकार्यहेतुर्मनीषा सत्वंव्यवसायः बलंशरीरसामर्थ्यं उत्साहोलोकोत्तरकार्येषुस्वेच्छयायत्नः विज्ञानंविशिष्टमीश्वरसाक्षात्काररूपंज्ञानं



ऊर्ध्वंशिरःपिंडमयमधःपादमयंतथा ॥ पार्श्वयोर्हस्तसंस्थानंमध्येचोदरधर्मिणम् ॥ ८६ ॥ कालेनस्फुटतामेत्यभवत्यमलविग्रहः ॥ बुद्धिसत्त्वबलोत्साहविज्ञानैश्वर्यसंस्थितः ॥ ८७ ॥ सएवभगवान्ब्रह्मासर्वलोकपितामहः ॥ अवलोक्यवपुर्ब्रह्माकांतमात्मीयमुत्तमम् ॥ ८८ ॥ चिंतामभ्येतिभगवांस्त्रिकालामलदर्शनः ॥ एतस्मिन्परमाकाशेचिन्मयैकात्मरूपिणि ॥ ८९ ॥ अदृष्टापारपर्यंतेप्रथमंकिमभूदिति ॥ इतिचिंतितवान्ब्रह्मासद्योजातोऽमलात्मदृक् ॥ ९० ॥ संपश्यन्सर्ववृंदानिसमतीतान्यनेकशः ॥ स्मरत्यथोससकलान्सर्वधर्मगुणक्रमान् ॥ ९१ ॥ लीलयाकल्पयत्येषचित्राःसंकल्पजाःप्रजाः ॥ नानाचारसमारंभागंधर्वनगरंयथा ॥ ९२ ॥ तासांस्वर्गापवर्गार्थंधर्मकामार्थसिद्धये ॥ अनंतानिविचित्राणिशास्त्राणिसमकल्पयत् ॥ ९३ ॥ सृष्टिरेवमियंरामसर्गेऽस्मिन्स्थितिमागता ॥ विरिंचिरूपान्मनसःपुष्पलक्ष्मीर्मधोरिव ॥ ९४ ॥ वसिष्ठउवाच ॥ स्वसंकल्पकृताःसर्वेदेवासुरनरामराः ॥ स्वसंकल्पोपशमनेशाम्यंत्यस्नेहदीपवत् ॥ ९५ ॥



ऐश्वर्यमणिमादि तेषुसंस्थितःप्रतिष्ठितः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ सृष्टिरिति ॥ सर्गेजगतिसृष्टिःसृज्यमानःप्रपंचः ॥ ९४ ॥ ९५ ॥

॥ ९६ ॥ ९७ ॥ कोशमिति ॥ मात्रभावंनिवेशय । अत्रसंसाराडंबरेभावंतात्पर्यमानिवेशय ॥ ९८ ॥ गंधर्वेति ॥ गंधर्वनगरशब्दस्या र्थेभूषितेदूषितेवायथानसुखंनदुःखंवातद्वदविद्याकल्पितेसुतादावपिसुखदुःखयोरक्रमः ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ य स्येति ॥ यस्यसर्ववस्तुषुइदंस्यादित्यास्थानिवृत्तातंसर्वज्ञमवास्तवीअविद्यानक्रोडीकरोतिनावृणोति ॥ ४ ॥ शुद्धमिति ॥ शुद्धंनिष्कलं

आकाशसदृशंसर्वंकल्पनामात्रजृंभितम् ॥ जगत्पश्यमहाबुद्धेसुदीर्घस्वप्नमुत्थितम् ॥ ९६ ॥ नजाय तेनम्रियतेइतिकिंचित्कदाचन ॥ परमार्थेनसुमतेमिथ्यासर्वंतुविद्यते ॥ ९७ ॥ कोशमाशाभुजंगानां संसाराडंबरंत्यज ॥ असदेतदितिज्ञात्वामात्रभावंनिवेशय ॥ ९८ ॥ गंधर्वनगरस्यार्थेभूषितेदूषितेऽथ वा ॥ अविद्यांशसुताद्येर्वाकःक्रमःसुखदुःखयोः ॥ ९९ ॥ धनदारेषुवृद्धेषुदुःखंयुक्तंनचेष्टतः ॥ वृद्धा यांमोहमायायांकःसमायासवानिह ॥ १०० ॥ यैरेवजायतेरागोमूर्खस्याधिकतांगतैः ॥ तैरेवभो गैःप्राज्ञस्यविरागउपजायते ॥ १ ॥ अतोराघवतत्त्वज्ञोव्यवहारेषुसंस्थितः ॥ नष्टंनष्टमुपेक्षस्वप्राप्तंप्राप्त मुपाहर ॥ २ ॥ अनागतानांभोगानामवांछनमकृत्रिमम् ॥ आगतानांचसंभोगइतिपंडितलक्षणम् ॥ ३ ॥ यस्यस्यादिदमित्यास्थानिवृत्तासर्ववस्तुषु ॥ क्रोडीकरोतिसर्वज्ञंनाविद्यातमवास्तवी ॥ ४ ॥ शुद्धंसदसतोर्मध्यंपदंबुद्ध्यावलंब्यच ॥ सबाह्याभ्यंतरंदृश्यंमागृहाणविमुंचमा ॥ ५ ॥

कंसदसतोःकार्यकारणभूतयोःश्चिचेत्ययोःमध्यंकार्यकारणात्मकंकिंचिन्मात्ररूपंपदंवस्तु बुद्ध्यावलंब्यसबाह्याभ्यंतरंदृश्यंमागृहाण माविमुंच उपेक्षस्वेत्यर्थः ॥ ५ ॥

यस्येति ॥ कर्मणिअवश्यकर्तव्येतिष्ठतःप्रवर्तमानस्यज्ञस्यज्ञाननिष्ठस्यविषयेषुइच्छानप्रवर्तते इष्टसाधनबुद्ध्यभावात् । अनिच्छाचअ
निष्टसाधनबुद्ध्यभावात् तस्यप्रज्ञापद्मपत्रमंबुभिरिवहर्षविषादादिभिर्नलिप्यतेनसंश्लिष्यते ॥ ६ ॥ यदिति ॥ स्वदतेस्वादनंकरोति
॥७॥ उच्चैरिति ॥ उच्चैःपदायकैवल्यायप्रज्ञयाप्रज्ञाप्रकर्षेणहेतुनावासनाजालाच्चेतःसमुद्धरेत्यर्थः ॥ ८ ॥ संसारेति ॥ प्रज्ञायामनारूढायां

यस्यनेच्छानवानिच्छाज्ञस्यकर्मणितिष्ठतः ॥ नतस्यलिप्यतेप्रज्ञापद्मपत्रमिवांबुभिः ॥ ६ ॥
यदितेनेंद्रियार्थश्रीःस्वदतेहृदिराघव ॥ तदसिज्ञातविज्ञानः समुत्तीर्णोभवार्णवात् ॥ ७ ॥ उच्चैः
पदायपरयाप्रज्ञयावासनागणात् ॥ पुष्पाद्गंधमिवोदारंचेतोरामपृथक्कुरु ॥ ८ ॥ संसारांबुनिधाव
स्मिन्वासनांबुपरिप्लुते ॥ येप्रज्ञानावमारूढास्तेतीर्णाद्दुःखिताःपरे ॥ ९ ॥ नत्यजंतिनवांछं
तिव्यवहारंजगद्गवम् ॥ सर्वमेवानुवर्ततेपारावारविदोजनाः ॥ ११० ॥ तेशून्येऽपिनखिद्यं
तेतेदेवोद्यानसंगिनः ॥ नियतिंचनमुंचंतिमहांतोभास्कराइव ॥ ११ ॥ वाल्मीकिरुवाच ॥
इत्थंगिराविमलयाविमलाशयस्यरामोमुनेःसपरिपुष्टइवाबभासे ॥ ज्ञानामृतेनमधुरेणविचा
रितांतःपूर्णशशांकइवशीतलतांजगाम ॥ १२ ॥ श्रीरामउवाच ॥ सृष्टिरेकविधाकिंस्यात्किं
वाबहुविधावद ॥ तद्विज्ञानेनमायायारूपंस्फुटतरंभवेत् ॥ १३ ॥ वसिष्ठउवाच ॥ कदाचि
त्सृष्टयःशार्व्यःकदाचित्पद्मजोद्भवाः ॥ कदाचिदपिवैष्णव्यः कदाचिन्मुनिनिर्मिताः ॥ १४ ॥

कदाचिदपिसंसारान्नोत्तरणमितिभावः ॥९॥ नेति ॥ पारावारविदःसंसारसागरस्यपारंउत्तरणेहेतुर्विद्याअवारंसंसारहेतुरविद्यातद्विदइत्यर्थः
॥ ११० ॥ ११ ॥ १२ ॥ १३ ॥ कदाचिदित्यादिनासार्धेनश्लोकषट्केनसृष्टिक्रमस्यानियमंदर्शयति । तत्रकर्तुरनियममाहाद्येन ।

शार्व्यः शिवसंबंधिन्यः ब्राह्मण्यः । प्रादुर्भावस्थानमपिननियतमित्याहद्वितीयेन । पृथिवीस्वरूपमप्यनियतमित्याह तृतीयचतुर्थाभ्याम् । विपदादेः पौर्वापर्यमप्यनियतमित्याह सार्धेनपंचमेन । उक्तस्यानियमस्योपसंहारः षष्ठेनेतिविवेकः ॥ १४ ॥ १५ ॥ १६ ॥

कदाचिदब्जजोब्रह्माकदाचित्सलिलोद्भवः ॥ अंडोद्भवः कदाचित्तुकदाचिज्जायतेंऽबरात् ॥ ॥ १५ ॥ कदाचिद्भूरभूत्सृष्टौनीरंध्रतरुसंकटा ॥ कस्यांचिन्नरनीरंध्राकस्यांचिद्भूधरावृता ॥ ॥ १६ ॥ कदाचिन्मृन्मयीभूमिः कदाप्यासीद्दृषन्मयी ॥ कदाचित्कांचनमयीकदाचिन्मांसमय्यभूत् ॥ १७ ॥ कदाचित्प्रथमंव्योमप्रतिष्ठामधिगच्छति ॥ कदाचित्प्रथमंपृथ्वीकदाचित्प्रथमंपयः ॥ १८ ॥ कदाचित्प्रथमंतेजः कदाचित्प्रथमंमरुत् ॥ निदर्शनार्थंसृष्टेस्तुमयैकस्यप्रजापतेः ॥ भवेतकथितोत्पत्तिर्नत्वयंनियमः क्वचित् ॥ १९ ॥ पुनः कृतंपुनस्त्रेतापुनश्चद्वापरः कलिः ॥ पुनः पुनरिदंसर्वंतत्रास्तिनपुनस्तुयत् ॥ २० ॥ जगन्मायास्वरूपस्यवर्णनाव्यपदेशतः ॥ दाशूराख्यायिकारामवर्ण्यमानांमयाशृणु ॥ २१ ॥ अस्त्यस्मिन्वसुधापीठेविचित्रकुसुमद्रुमः ॥ मागधोनामविख्यातः श्रीमान्जनपदोमहान् ॥ २२ ॥ कदंबवनविस्तारितालावलितजंगमः ॥ विचित्रविहगव्यूहः सर्वाश्चर्यमनोहरः ॥ २३ ॥ तत्रैकस्मिन्गिरितटेकर्णिकारसमाकुले ॥ कदलीखंडनीरंध्रेनीपगुल्मविराजिते ॥ २४ ॥

॥ १७ ॥ १८ ॥ १९ ॥ पुनरिति ॥ चत्वार्यपियुगानिपुनः पुनरावर्ततइत्यर्थः । इत्थंसर्वमिदंपुनः पुनरावर्ततएव यत्तुपुनरस्ति कालांतरेऽपि तथैवावतिष्ठतेतादृशंकूटस्थंनित्यंवस्तुनास्ति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

॥ २१ ॥

कश्चित्परमधर्मात्मामुनिरासीन्महातपाः ॥ दाश्रूरनामामहतातपोयोगेनसंयुतः ॥ २५ ॥ शरलोमे तिविख्यातःपितातस्यबभूवह ॥ रामापरइवब्रह्मातस्मिन्नेवावसद्गिरौ ॥ २६ ॥ तस्यासावेकपुत्रोऽभू त्कचोदेवगुरोरिव ॥ तेनसार्धंसपुत्रेणनीतवान्जीवितंवने ॥ २७ ॥ अथासौशरलोमात्रभुक्त्वायुगग णान्ययौ ॥ त्यक्त्वादेहंसुरागारंत्यक्तनीडःखगोयथा ॥ २८ ॥ एकएववनेतस्मिन्दाश्रूरःप्ररुरोदह ॥ दशापनीतपितृकःकरुणंकुररोयथा ॥ मातापितृवियोगेनशोकसंतापिताशयः ॥ २९ ॥ म्लानिमभ्या ययौनूनंहेमंतइवपंकजम् ॥ बालोऽसावथदीनात्मावनदेवतयावने ॥ ३० ॥ इत्थमाश्वासितोरामतदा दृश्यशरीरया ॥ ऋषिपुत्रमहाप्राज्ञकिमज्ञइवरोदिषि ॥ ३१ ॥ संसारस्यनकस्मात्त्वंस्वरूपंवेत्सिचं चलम् ॥ सर्वदैवेदृशीसाधोसंसारस्यस्थितिश्चला ॥ ३२ ॥ जायतेजीव्यतेपश्चादवश्यंचविनश्यति ॥ तदर्थंमाकृथाव्यर्थंविषादंमरणेपितुः ॥ ३३ ॥ अवश्यभाव्योऽस्तमयोजातस्याहर्पतेरिव ॥ अशरीरामि तिश्रुत्वागिरमारक्तलोचनः ॥ ३४ ॥ धैर्यमासादयामासशिखंडीस्तनितादिव ॥ उत्थायावश्यकंकृत्वा पाश्चात्यंपितुराद्दतः ॥ चकारतपसेबुद्धिंदृढामुत्तमसिद्धये ॥ ३५ ॥ ब्राह्मेणकर्मणातस्यविपिनेचरतस्त पः ॥ अनंतसंकल्पमयंश्रोत्रियत्वंबभूवह ॥ ३६ ॥

॥ २१ ॥

मापक्षिविशेषः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ उत्थायेति ॥ पाश्चात्यमौर्ध्वदैहिकंकर्म ॥ ३५ ॥ ब्राह्मेणेति ॥ अनंत

संकल्पमयंतपसेएतादृशेनविशुद्धेनस्थानेनभवितव्यम्। एवंविधैश्चपावनैःसाधनैर्भवितव्यमित्यनंतसंकल्पप्रचुरंश्रोत्रियत्वंछांदसत्वम्॥३६॥

अज्ञातज्ञेयबुद्धेस्तुसुश्रोत्रियतयातया ॥ नविश्रामचेतोऽस्यपवित्रेऽपिधरातले ॥ ३७ ॥ केवलं सर्वमेवेदंसुविशुद्धंधरातलम् ॥ अशुद्धमेवपश्यन्सनरमेत्क्वचिदेवहि ॥ ३८ ॥ अथसंकल्पनेनैव संकल्पमनसैवसः ॥ वृक्षाग्रमेवसंशुद्धंस्थितिरत्रोचितामम ॥ ३९ ॥ अथेदानींतपस्तप्यंतपसो ग्रेणशाखिषु ॥ खगवत्स्थितिमाप्नोतिशाखासुचदलेषुच ॥ ४० ॥ इतिसंचिंत्यसंज्वाल्यहुता शमतिभास्वरम् ॥ जुहावतस्मिन्प्रोत्कृत्यमांसंस्वस्कंधभित्तितः ॥ ४१ ॥ अथगीर्वाणवृंदस्यस मग्रागलभित्तयः ॥ मन्मुखस्थेनमायांतुविप्रमांसेनभस्मताम् ॥ ४२ ॥ इतिसंचिंत्यभगवान् सप्तार्चिस्तस्यदेवता ॥ पुरोबभूवदीप्तांशुर्दीप्तांशुर्वाक्पतेरिव ॥ ४३ ॥ उवाचवचनंविप्रकुमा राभिमतंवरम् ॥ गृहाणस्थापितंसाधोकोशस्थंसन्मणिंयथा ॥ ४४ ॥ इत्युक्तवंतंतंदेवमर्घपुष्पो पशोभितम् ॥ संपूज्यस्तुतिवादेनप्राहविप्रकुमारकः ॥ ४५ ॥ भगवन्भूतपूर्णायाभुवःपावनमं डलम् ॥ नाप्नोमितेनवृक्षाणामुपरिस्थितिरस्तुमे ॥४६॥ इत्युक्तेमुनिपुत्रेणसर्वदेवमुखंशिखी ॥ एवमस्तुतवेत्युक्त्वाजगामांतर्धिमीश्वरः ॥ ४७ ॥ तस्मिन्नंतर्हितेदेवेक्षणात्सांध्यइवांबुदे ॥ अथ काननमध्यस्थंचुंबितांबुदमंडलम् ॥ ४८ ॥ ॥ ॥ ॥

॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

कदंबरोदसीस्तंभमारुरोहद्द्विजोत्तमः ॥ तत्रासौऽयोमलग्नायाःशाखायाःप्रांतपल्लवे ॥ ४९ ॥
विवेशविगताशंकमेकाग्रतपसिस्थितः ॥ अथोपविश्यमृदुनितत्रपल्लवविष्टरे ॥ ५० ॥ क्षण
मालोकितास्तेनदिशःकौतुकलीलया ॥ सरिदेकावलीरम्याःशैलेंद्रस्तनकुड्मलाः ॥ ५१ ॥ नि
र्मलाकाशकबरालोलनीलांबुदालकाः ॥ तस्मिन्लतागृहेस्थित्वाविलोक्यककुभःक्षणम् ॥ ५२ ॥
दृढंपद्मासनंबद्ध्वादिग्भ्यःप्रत्याहृतात्मना ॥ अज्ञातपरमार्थेनक्रियामात्रेचतिष्ठता ॥ ५३ ॥
फलकार्पण्ययुक्तेनचेतसासोऽकरोन्मखम् ॥ तत्रासौदशवर्षाणिमनसैवायजत्सुरान् ॥ ५४ ॥
गवाश्वनरमेधाद्यैर्यज्ञैर्विपुलदक्षिणैः ॥ कालेनामलतांयातेविततेतस्यचेतसि ॥ ५५ ॥ बलादव
ततारांतर्ज्ञानमात्मप्रसादजम् ॥ ततोविशीर्णावरणोविगलद्वासनामलः ॥ संददर्शैकदातस्यां
लतायामग्रतःस्थिताम् ॥ ५६ ॥ वनदेवींविशालाक्षीमालोलकुसुमांबराम् ॥ तामुवाचानवद्यां
गींसमुनिर्विनताननाम् ॥ ५७ ॥ कात्वमुत्पलपत्राक्षिकांतिविक्षोभितस्मरे ॥ इत्युक्तेमृगशा
वाक्षीगौरीपीनपयोधरा ॥ ५८ ॥ मुनिमाहमनोहारिमुग्धाक्षरमिदंवचः ॥ यानियानिदुरापाणि
वांछितानिमहीतले ॥ ५९ ॥ प्राप्यंतेतानितान्याशुमहतामेवयाच्ञया ॥ अहमत्रद्रुमाकीर्णेत्व
त्कदंबाभ्यलंकृते ॥ ६० ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ इतीति ॥ प्रार्थनोक्तांप्रार्थनारूपमुक्तंवचनंयस्यास्ताम् ॥ ६९ ॥ ७० ॥

लतालीलालयेब्रह्मन्विपिनेवनदेवता ॥ यश्चैत्रासितपक्षस्यत्रयोदश्यांस्मरोत्सवे ॥ ६१ ॥ बभू
ववनदेवीनांसमाजोनंदनेवने ॥ तत्राहमगमंनाथत्रैलोक्यललनासदः ॥ ६२ ॥ तत्रदृष्टामयास
र्वावयस्यामदनोत्सवे ॥ अपुत्रयापुत्रयुतास्तेनाहंदुःखिताभृशम् ॥ ६३ ॥ त्वयिसर्वार्थिसार्थ
स्यबृहत्कल्पतरौस्थिते ॥ अनाथेवकथंनाथकिलशोचाम्यपुत्रिका ॥ ६४ ॥ देहिमेभगवन्पुत्रं
नोचेद्देहमिहाग्नये ॥ प्रकरोम्याहुतिंपुत्रदुःखदाहोपशांतये ॥६५॥ तामित्युक्तवतींतन्वींविहस्यमु
निपुंगवः ॥ प्रादाद्धस्तगतंपुष्पंतस्यैदत्वादयान्वितः ॥ ६६ ॥ गच्छतन्वंगिमासेनपूजार्हमलि
लोचने ॥ प्रसोष्यसेसुतंकांतंप्रसूनमिवसल्लता ॥ ६७ ॥ किंत्वसौमरणावेशोपायिन्यायस्त्वया
सुतः ॥ याचितःकृच्छ्रसंप्राप्यज्ञानस्तेनभविष्यति ॥६८॥ इत्युक्त्वासमुनिस्तन्वींप्रसन्नसुखमं
डलाम् ॥ परिचर्यांकरोमीतिप्रार्थनोक्तांव्यसर्जयत् ॥६९॥ साजगामात्मसदनंमुनिःस्वार्थपरो
ऽभवत् ॥ अवहत्क्रमशःकालंऋतुसंवत्सरांकितम् ॥७०॥ अथदीर्घेणकालेनसैवोत्पलविलोच
ना ॥ द्वादशाब्दमुपादायसुतंमुनिमुपाययौ ॥ ७१ ॥ साप्रणम्योपविश्याग्रेमुनिमिंदुसमान
ना ॥ उवाचकलयावाचाचूतद्रुममिवालिनी ॥ ७२ ॥

॥ ७१ ॥ ७२ ॥

॥ २३ ॥

अयंसभगवन्भव्यःकुमारःपुत्रआवयोः ॥ कृतोमयासमग्राणांकलानांकिलकोविदः ॥ ७३ ॥
प्रभोकेवलमेतेनज्ञानंनाधिगतंशुभम् ॥ तेनसंसारयंत्रेऽस्मिन्नवशःपरिपीडयते ॥ ७४ ॥
ज्ञानंत्वमेवास्यविभोकृपयोपदिशाधुना ॥ एवंवदंतींसमुनिर्मच्छिष्यमबलेसुतम् ॥ ७५ ॥ इ
हैवस्थापयैनंत्वमित्युक्त्वातांव्यसर्जयत ॥ तस्यांगतायांसपितुरंतेवासितयात्तया ॥ ७६ ॥
अतिष्ठत्संयतोधीमानर्कस्येवारुणःपुरः ॥ कदर्थंप्राप्यविज्ञानंततश्चित्राभिरुक्तिभिः ॥ ७७ ॥
चिरकालमसौतत्रमुनिःपुत्रमबोधयत् ॥ आख्यायिकाख्यानशतैर्दृष्टांतैर्दृष्टिकल्पितैः ॥ ७८ ॥
तथेतिहासवृत्तांतैर्वेदवेदांतनिश्चयैः ॥ अनुद्वेगतयानित्यंविस्तरेणयथाक्रमैः ॥ ७९ ॥ वसि
ष्ठउवाच ॥ कदाचिदार्यमार्गेणतेनकैलासवाहिनीम् ॥ अहंस्नातुमदृश्यात्माव्योमवीथींगतः
पुरा ॥ ८० ॥ निर्गत्यनभसस्तत्रमुनिमंडलकोदरात् ॥ रात्रौप्राप्तोऽस्मिसुमतेदाशूरतरुमुन्न
तम् ॥ ८१ ॥ यावच्छृणोमिविटपकुहरात्काननेवचः ॥ कुड्मलांभोजसद्मस्थषट्पदस्येवनिस्वनम्
॥ ८२ ॥ दाशूरउवाच ॥ शृणुपुत्रमहाबुद्धेवस्तुनोऽस्यसमामिमाम् ॥ वर्णयामिमहाश्चर्यमेका
माख्यायिकांतव ॥ ८३ ॥

॥ २३ ॥

रोक्षवृत्तांतमाख्यानम् दृष्टिकल्पितैः स्वज्ञानकल्पितैः ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ शृण्विति ॥ अस्यवस्तुनोवृत्तांतस्यसमासद

शीमिमामाख्यायिकांवर्णयामीत्यन्वयः ॥ ८३ ॥ अस्तीति ॥ स्वोत्थइत्यादिभिःनामांतरैर्गोपितार्थामाख्यायिकांपुत्रप्रश्नानंतरंदाशूरः स्वयमेवविवरिष्यति । तथापितत्रकिंचिदुच्यते ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ त्रयइति ॥ तस्यैवस्वोत्थस्यदिग्भरणक्षमाः दिशांपूरणेक्षमाःशक्तास्त्रयोदेहाःसत्वादिगुणरूपाः ॥ ९० ॥ व्योमनीति ॥ असौस्वोत्थःत्रिशरीरकःत्रीणिसत्वादिरूपाणिशरीराणि

अस्तिराजामहावीर्योविख्यातोभुवनत्रये ॥ नाम्नास्वोत्थइतिश्रीमान्जगदाक्रमणेक्षमः ॥ ८४ ॥
यस्यानुशासनंसर्वेभुवनेष्वपिनायकाः ॥ शिरोभिर्धारयंत्युच्चैश्चूडामणिमिवोत्तमम् ॥ ८५ ॥
यःसाहसैकरसिकोनानाश्चर्यविहारवान् ॥ केनचित्रिषुलोकेषुनमहात्मावशीकृतः ॥ ८६ ॥
यस्यारंभसहस्राणिसुखदुःखप्रदान्यलम् ॥ संख्यातुंकेनशक्यंतेकल्लोलाजलधेरिव ॥ ८७ ॥
यस्यवीर्यंसुवीर्यस्यनशस्त्रैर्नचपावकैः ॥ केनचिद्भवनेक्रांतमाकाशमिवमुष्टिना ॥ ८८ ॥ यदीयां
वितितारंभलीलांनिर्माणभासुराम् ॥ नमनागनुकुर्वंतिशक्रोपेन्द्रहराअपि ॥ ८९ ॥ त्रयस्तस्य
महाबाहोर्देहादिग्भरणक्षमाः ॥ जगदाक्रम्यतिष्ठंतिउत्तमाधममध्यमाः ॥ ९० ॥ व्योमन्येवा
तिविततेजातोऽसौत्रिशरीरकः ॥ तत्रैवचस्थितिंयातःशब्दपातश्चपक्षिवत् ॥ ९१ ॥ तत्रैवापार
पर्यंतेनगरंतेननिर्मितम् ॥ चतुर्दशमहारथ्यंविभागत्रयभूषितम् ॥ ९२ ॥

यस्यतादृशः व्योमन्येवचिदाकाशएवजातः तत्रैवस्थितिंयातः शब्दपातश्च शब्द्यतेऽस्मिन्नितिशब्दोव्योम तत्रैवपततीतिशब्दपातश्चपक्षिवत् । यथाहिपक्षीव्योमन्येवाविर्भवति तिष्ठतिलीयतेचतद्वदित्यर्थः ॥ ९१ ॥ तत्रैवेतिसार्धश्लोकद्वयंवाक्यम् ॥ नगरमिति ॥ ब्रह्मांडेचतुर्दशभुवनान्येवमहारथ्यायस्मिन् विभागत्रयभूषितं [illegible] ॥ ९२ ॥

क्रीडाशिखरिणोमेरुमंदरादयः तैः सुस्थितं मुक्तालताः सरितस्ताभिः धवलितं वाप्यः समुद्रास्तासांसप्तकेनभूषितं शीतलोष्णात्मकमक्षीणं चदीपद्वयंचंद्रार्कौतेनविराजितम् ॥ ९३ ॥ तस्मिन्निति सार्धश्लोकत्रयंवाक्यम् । अपवरकादेहरूपाण्यभ्यंतरगृहाणि ॥ ९४ ॥ असितमाच्छादनंनामकेशरूपंतृणं । नवद्वाराणिश्रोत्रादीनि ॥९५॥ वातायनानिनासिकाविवरादीनि दीपपंचकंतिस्रःस्थूणास्तंभाः वातपित्तकफरूपा





वनोपवनमालाढ्यंक्रीडाशिखरिसुस्थितम् ॥ मुक्तालताधवलितंवापीसप्तकभूषितम् ॥ शीतलोष्णात्मकाक्षीणदीपद्वयविराजितम् ॥ ९३ ॥ तस्मिन्नेवातिविपुलेपत्तनेतेनभूभृता ॥ संचारिणाविरचितामुग्धापवरकागणाः ॥ ९४ ॥ ऊर्ध्वंकेचिदधःकेचिन्मध्येकेचिन्नियोजिताः ॥ असिताच्छादनाच्छन्नानवद्वारविभूषिताः ॥ ९५ ॥ अनारतवहद्वातबहुवातायनान्विताः ॥ दीपपंचकसालोकास्त्रिस्थूणाःशुक्लदारवः ॥ ९६ ॥ मसृणालेपमृदवःप्रतोलीकुलसंकुलाः ॥ माययारचितास्तेनराज्ञातेषुमहात्मना ॥ ९७ ॥ रक्षितारोमहापक्षानित्यमालोकभीरवः ॥ ९८ ॥ अथापवरकौघेषुचलत्सुसमहीपतिः ॥ करोतिविविधांक्रीडांनीडेष्विवविहंगमः ॥ ९९ ॥ त्रिशरीरः सतेष्वंतस्तैर्यक्षैः सहपुत्रक ॥ लीलालसमुषित्वाशुपुनर्निष्क्रम्यगच्छति ॥ १०० ॥ तस्येच्छाजायतेवत्सकदाचिच्चलचेतसः ॥ पुरंभविष्यन्निर्माणंकिंचिद्यामीतिनिश्चला ॥ १ ॥

स्तेषांदेहधारकत्वाच्छुक्लानिदारूण्यस्थीनि ॥ ९६ ॥ मसृणआलेपोमृच्चयेषांतत्रआलेपोबाह्यत्वक्मृन्मांसं प्रतोल्योभुजाद्यंगरूपावीथ्यः ॥ ९७ ॥ महापक्षाः अहंकाराः तेषामालोकभीरुत्वंतत्त्वज्ञाननिवर्त्यत्वात् ॥ ९८ ॥ ९९ ॥ १०० ॥ तस्येति ॥ भविष्यन्निर्माणंपुरंभाविदेहांतरम् ॥ १ ॥

भूताविष्टइवावेगात्ततउत्थायधावति ॥ पुरंतदप्यवाप्नोतिगंधर्वैरिवनिर्मितम् ॥ २ ॥ तस्येच्छा जायतेवत्सकदाचिच्चलचेतसः ॥ विनाशंसंप्रयामीतितेनाशुसविनश्यति ॥ ३ ॥ पुनरुत्पद्यते तूर्णंखान्महोर्मिरिवांभसः ॥ व्यवहारंतनोऽत्युच्चैः पुनरारंभमंथरम् ॥ स्वयैवव्यवहृत्यासौकदा चित्परिदूयते ॥ ४ ॥ किंकरोम्यहमज्ञोऽस्मिदुःखितोऽस्मीतिशोचति ॥ मुदमेत्यकदाचिच्चस्वय मायातिपीनताम् ॥ ५ ॥ पिबतिगच्छतिवल्गतिजृंभतेस्फुरतिभातिचभासुररूपधृक् ॥ सुतम हामहिमासमहीपतिःपतिरपामिववातरयाकुलः ॥ ६ ॥ वसिष्ठउवाच ॥ अथापृच्छत्सुतस्तत्रजं बूद्वीपेमहानिशि ॥ कदंबद्रुमपर्णस्थंपितरंपावनाशयः ॥ ७ ॥ कोऽसौस्वोत्थेतिविख्यातोभूप स्तातोत्तमाकृतिः ॥ कथितंचकिमेतन्मेत्वयेतिब्रूहितत्त्वतः ॥ ८ ॥ दाशूरउवाच ॥ शृणुपुत्रय थाभूतमेतत्तेकथयाम्यहम् ॥ येनसंसारचक्रस्यतत्त्वमस्यावबुध्यसे ॥ ९ ॥ असदभ्युत्थितारंभम वस्तुमयमाततम् ॥ संसारसंस्थानमिदमेवमाकथितंमया ॥ १० ॥ परमान्नभसोजातःसंकल्पः स्वोत्थउच्यते ॥ जायतेस्वयमेवासौस्वयमेवविलीयते ॥ ११ ॥ तत्स्वरूपमिदंसर्वंजगदाभोगि विद्यते ॥ जायतेतत्रजातेतुतस्मिन्नष्टेविनश्यति ॥ १२ ॥ ब्रह्माविष्णिवद्ररुद्रादींस्तस्यैवावयवा न्विदुः ॥ शून्येव्योमनितेनेदंनिर्मितंत्रिजगत्पुरम् ॥ १३ ॥

॥ २८ ॥

प्रतिभासानुसंधानमात्रेणैतिविरंचिताम् ॥ यत्रैतेविततालोकालोककोशाश्चतुर्दश ॥ १४ ॥ वनो पवनमालाश्चयत्रोद्यानपरंपरा ॥ क्रीडाशिखरिणोयत्रसह्यमंदरमेरवः ॥ १५ ॥ शीतोष्णदीप्तौचं द्रार्कौदीपौचंडानिलाक्षतौ ॥ सूर्यांशुकवदालोलत्तरंगोत्तुंगमौक्तिकाः ॥ १६ ॥ वहंतिसरितोयत्र सन्मुक्तावलयश्चलाः ॥ इक्षुक्षीरादिसलिलामणिरत्नबिसांकुराः ॥ १७ ॥ और्वानलांबुजायत्रवा प्यःसप्तमहार्णवाः ॥ तस्मिन्नेवजगत्यस्मिन्पुरेसंकल्पभूभृता ॥ १८ ॥ क्रीडार्थमात्मनश्चित्रादे हापवरकाः कृताः ॥ केचिद्गीर्वाणनामानऊर्ध्वएवनियोजिताः ॥ १९ ॥ नरनागादयः केचिन्मध्ये ऽधश्चनियोजिताः ॥ प्राणयंत्रप्रवाहेणचलंतोमांसमृन्मयाः ॥ २० ॥ स्थितास्थिदारवःस्निग्धत्व ग्लेपमसृणामलाः ॥ केशकृष्णोलपोल्लासरचिताच्छादनश्रियः ॥ २१ ॥ कर्णाक्षिनासाप्रमुखैर्द्वा रैर्नवभिरन्विताः ॥ कर्णनासास्यताल्वादिवातायनगणान्विताः ॥ २२ ॥ भुजाद्यंगप्रतोलीकाः पंचेन्द्रियकदीपकाः ॥ माययारचितास्तेषुसंकल्पेनमहामते ॥ २३ ॥ अहंकारमहायक्षाःपरमा लोकभीषणाः ॥ देहापवरकस्यांतर्महाहंकारपक्षकैः ॥ २४ ॥ सहितःक्रीडतेऽत्यर्थंतस्मिन्नेवा सदुत्थितैः ॥ क्षणमभ्युदयंयातिक्षणंशाम्यतिदीपवत् ॥ २५ ॥ देहगेहेषुसंकल्पस्तरंगःसागरे ष्विव ॥ भविष्यन्नेवनिर्माणमवाप्नोतितदापुरम् ॥ २६ ॥

॥ २९ ॥

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

यदासंकल्पितंवस्तुक्षणादेवप्रपश्यति ॥ असंकल्पनमात्रेणस्वेनैवाशुविनश्यति ॥ २७ ॥ अनं
तायात्मदुःखायनानंदायकदाचन ॥ इदंस्फारंजगद्दुःखंप्रतनोत्यात्मसत्तया ॥ २८ ॥ असत्त
यानाशयतिघनंसांध्यंयथातमः ॥ स्वयैवदुःखदायिन्याचेष्टयापरिरोदिति ॥ २९ ॥ संकल्पिता
नंदलवस्तिष्ठत्युत्तरकंधरम् ॥ त्रयस्तस्यामतेदेहाअधमोत्तममध्यमाः ॥ ३० ॥ तमःसत्त्वरजः
संज्ञाःकारणंजगतःस्थितेः ॥ तमोरूपोहिसंकल्पोनित्यंप्राकृतचेष्टया ॥ ३१ ॥ परांकृपणतामे
त्यप्रयातिकृमिकीटताम् ॥ सत्वरूपोहिसंकल्पोधर्मज्ञानपरायणः ॥ ३२ ॥ अदूरकेवलीभावःसा
म्राज्यइवतिष्ठति ॥ रजोरूपोहिसंकल्पोलोकसंव्यवहारवान् ॥ ३३ ॥ परितिष्ठतिसंसारेपुत्रदा
रानुरंजितः ॥ त्रिविधंतुपरित्यज्यरूपमेतन्महामते ॥ ३४ ॥ संकल्पःपरमायातिपदमात्मपरि
क्षये ॥ सर्वादृष्टीःपरित्यज्यनियम्यमनसामनः ॥ ३५ ॥ सबाह्याभ्यंतरस्थस्यसंकल्पस्यक्षयंकु
रु ॥ यदिवर्षसहस्राणितपश्चरसिदारुणम् ॥ ३६ ॥ पातालस्थश्चभूस्थश्चस्वर्गस्थश्चापितत्त्व ॥
नान्यःकश्चिदुपायोऽस्तिसंकल्पोपशमादृते ॥ ३७ ॥ अनाबाधेविकारेचसुखेपरमपावने ॥ संक
ल्पोपरमेयत्नंपौरुषेणपरंकुरु ॥ ३८ ॥ संकल्पतंतावखिलाभावाःप्रोताःकिलानघ ॥ छिन्नेतंतौन
जानेतेक्वयांतिविशरारवः ॥ ३९ ॥

१ ॥ ४२ ॥ अनंतस्येति ॥ सत्तासामान्यरूपिणः सर्वानुवृत्तसत्तामात्ररूपस्यातएवानंतस्यात्मतत्त्वस्य स्वरूपभूतचितश्चैतन्यस्य
मुखत्वंबहिर्मुखत्वंतदेवसंकल्पस्यांकुरं सूक्ष्मरूपंविदुः ॥ ४३ ॥ लेशतइति ॥ लेशतः सूक्ष्मांशेनप्राप्तसत्ताकोलब्धस्वरूपः सएवचि
न्मुखीभावरूपः संकल्पांकुरएवशनैश्चित्तत्त्वं चितःस्वरूपंदृढमापूर्यजाड्यायजडात्मकप्रपंचभावेनपरिणतये घनतांघनीभावंयाति मेघ

निःसंकल्पोयथाप्राप्तव्यवहारपरोभव ॥ चिदचित्योन्मुखत्वंहियातिसंकल्पसंक्षये ॥ ४० ॥ अधिगतपरमार्थतामुपेत्यप्रसभमपास्यविकल्पजालमुच्चैः ॥ अधिगमयपदंतदद्वितीयंविततसुखायसुषुप्तचित्तवृत्तिः ॥४१॥ पुत्रउवाच ॥ कीदृशस्तातसंकल्पः कथमुत्पद्यतेप्रभो ॥ कथंवावृद्धिमायातिकथंचैषविनश्यति ॥ ४२ ॥ दाशूरउवाच ॥ अनंतस्यात्मतत्त्वस्यसत्तासामान्यरूपिणः ॥ चितश्चेत्योन्मुखत्वंयत्तत्संकल्पांकुरंविदुः ॥ ४३ ॥ लेशतःप्राप्तसत्ताकःसएवघनतांशनैः ॥ यातिचित्तत्वमापूर्यदृढंजाड्यायमेघवत् ॥ ४४ ॥ भावयंतीचितिश्चेत्यंव्यतिरिक्तमिवात्मनः ॥ संकल्पतामिवायातिबीजमंकुरतामिव ॥ ४५ ॥ संकल्पनंहिसंकल्पः स्वयमेवप्रजायते ॥ वर्धतेस्वतएवाशुदुःखायनसुखायतु ॥ ४६ ॥

वत् । यथाहिमेघःप्रथमंलेशतःप्राप्तसत्ताकःशनैराकाशमापूर्य जाड्यायजडाविर्भावायघनतांयातितद्वदित्यर्थः ॥ ४४ ॥ भावयंतीति ॥ चि
तिरात्मनश्चैतन्यंचेत्यंदृश्यंआत्मनोव्यतिरिक्तमिवविभावयंतीसतीसंकल्पतामायातीवबीजमंकुरतामिव चितःस्वव्यतिरिक्ततयाचेत्यभावनं
संकल्पइत्यर्थः ॥ ४५ ॥ आयातीवेत्यनेनभ्रांतिमात्रकल्पितमेतत् नपरमार्थतइतिदर्शयति संकल्पनमिति ॥ हियस्मात्कारणात् संकल्पन

मसत्कल्पनमेव संकल्पस्तस्मात्तस्यनिमित्तांतरानपेक्षत्वात् स्वयमेवप्रजायतेप्रादुर्भवति स्वतएवचाशुवर्धतेकिंतुससंकल्पोदुःखायकेवलंनतु कदाचिदपिसुखाय अतोहेयएवेत्यर्थः ॥ ४६ ॥ तस्यहानोपायमुपदिशति ॥ मेति ॥ संकल्पंमासंकल्पयमाप्रवर्तय । स्थितौजगत्स्थितौ भावंतात्पर्यंमाभावयमाकुरु । एतावतानिःसंकल्पेनजगत्स्थितौनिरादरेणच भावेनाभिप्रायेणैवभूतयेमुक्तयेभव्योभवसियोग्योभविष्यसि ॥ ४७ ॥ संकल्पेति ॥ संकल्पनाशनेभूयान्प्रयत्नोनानुगच्छति । हियस्मात्कारणात्संकल्पःभावनायाःसंकल्पनायाः अभावमात्रेणाप्र वर्तनेनैवजीयते ॥ ४८ ॥ सुमनइति ॥ सुमनःपुष्पंमालतीपुष्पं तस्यआमर्देईषन्मर्दनेऽपि किंचिद्व्यतिकरःअल्पोयत्नभेदोभवेत् संकल्पना

मासंकल्पयसंकल्पंभावंभावयमास्थितौ ॥ एतावतैवभावेनभव्योभवसिभूतये ॥ ४७ ॥ संक ल्पनाशनेयत्नोनभूयाननुगच्छति ॥ भावनाभावमात्रेणसंकल्पोजीयतेह्ययम् ॥ ४८ ॥ सु मनःकुसुमामर्देकिंचिद्व्यतिकरोभवेत् ॥ सुसाध्याभावमात्रेणनतुसंकल्पनाशने ॥४९॥ संकल्पे नैवसंकल्पंमनसैवमनोमुने ॥ छित्वास्वात्मनितिष्ठत्वंकिमेतावतिदुष्करम् ॥५०॥ यथैवेदंनभः शून्यंजगच्छून्यंतथैवहि ॥ असन्मयविकल्पोत्थेउभेएतेततेयतः ॥ ५१ ॥

[illegible]तनकश्चिद्व्यतिकरः नकोऽपियत्नभेदः । कुतः सुसाध्याभावमात्रेण सुखसाध्यस्यापिकार्यस्याभावात् उपेक्षामात्रनिवर्त्यत्वात् संकल्पस्येति [illegible] ॥ संकल्पेनेति ॥ तत्रांतर्मुखेनसंकल्पेनबहिर्मुखस्यसंकल्पस्यछेदः शास्त्रसंगमधीरेणातप्तेनमनसा चिंतासंतप्तस्यमनसःच्छेदइतिवि [illegible]० ॥ संकल्पस्यबहिर्मुखत्वनिवृत्तयेजगतोव्योमवच्छून्यतामाह ॥ यथेति ॥ यतःकारणात् एतेउभेजगन्नभसी असन्मयविक [illegible]मयाद्विकल्पादेवोत्थितेसती [illegible] । अतः कल्पितत्वाविशेषादुभयोः शून्यत्वमित्यर्थः ॥ ५१ ॥

१.स्यमलस्यकथंपौरुषेणनिवृत्तिरित्याशंक्य दृष्टांतमुखेनोपपादयन्नाह ॥ तंदुलस्येति ॥ अत्रअवहननादिक्रिययातंदुलस्यचर्म
लवणादिभिःक्षालनया ताम्रस्यकालिमानाशः। तथाश्रवणमननादिक्रिययापुरुषस्याज्ञानरूपमलविनाशइतिविवेकः ॥ ५२ ॥
॥ ममेति ॥ गुरूणांमहतांविभवानांसंपदांउज्ज्वलाविलासाममेतिमदीयाइतिअंतःकरणेवृथैवविभ्रमोमास्तु। त्वमपिवितितास्तेविला

तंदुलस्ययथाचर्मयथाताम्रस्यकालिमा ॥ नश्यतिक्रिययापुत्रपुरुषस्यतथामलः ॥ ५२ ॥ जीवस्यतंदुलस्येवमलंसहजमप्यलम् ॥ नश्यत्येषनसंदेहस्तस्मादुद्यमवान्भव ॥ ५३ ॥ ममगुरुविभवोऽज्वलाविलासाइतितवमास्तुवृथैवविभ्रमोऽतः ॥ त्वमपिचवितताश्चतेविलासाविलसतिसर्वमिदंचिदात्मतत्त्वम् ॥ ५४ ॥ वसिष्ठउवाच ॥ इत्याकर्ण्यतदातत्ररात्रावालपनंद्वयोः ॥ अहंरघुकुलाकाशशशांकरघुनंदन ॥ ५५ ॥ पतितःखात्कदंबाग्रेपत्रपुष्पफलाकुले ॥ मामप्यालोक्यसंप्राप्तंदाशूरोऽर्घसपर्यया ॥ ५६ ॥ वितीर्णविष्टरेपत्रेपरयापर्यपूजयत् ॥ आवयोस्तत्रचित्राभिःकथाभिरितरेतरम् ॥५७॥ शर्वरीसाव्यतीयायमुहूर्तइवकांतयोः ॥ अहंविसृज्यदाशूरंततोऽमरनदींगतः ॥ ५८ ॥ दाशूराख्यायिकैषातेकथितारघुनंदन ॥ दाशूराख्यायिकेवेदंजगदित्येवभाव्यताम् ॥५९॥ इतिश्रीयोगवासिष्ठसारेमोक्षोपायेस्थितिप्र० दाशूराख्यानंनामसप्तदशःसर्गः॥१७॥

साअपिचसर्वमिदंतदात्मतत्त्वमेवविलसति ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ इतिश्रीमदल्लालसूरिसूनुनापदवाक्यप्रमाणपारावारपारदृश्वनाश्रीमुम्मडिदेवविद्वदाचार्येणविरचितेसंसारतरणिनाम्निवासिष्ठविवरणेस्थितिप्रकरणेदाशूरोपाख्यानंनामसप्तदशः सर्गः ॥१७॥

पूर्वंदाशूराख्यायिकायांजगस्थितेर्मायिकत्वमुक्तं इदानींस्थितिप्रकरणतात्पर्यंसंग्रहेणप्रतिपाद्यते ॥ अपर्यंतस्येति ॥ शरच्छतंवर्षशतंकियान् अल्पस्तावन्मात्रंवर्षशतमेवमहायुर्यस्यसः किमास्थांकांवाआस्थांआददानअनुधावतिअनुसरति ॥ १ ॥ अंतरिति ॥ अंतःकरणेभावश्रीः सत्तारूपंभावंश्रयतीति तथाभूतः सन् भावनामयीं संकल्पमयीं आस्थांपरित्यज्यनिर्मनस्कतया योऽसियद्रूपोऽवशिष्यसे सोऽसितद्रूपस्त्वमित्यर्थः ॥ २ ॥ निरिच्छेति ॥ प्रवर्ततामितीच्छाशून्येऽपिसंस्थितआलोकोयथाप्रवर्तते तथैवदेवेपरमात्मनिनिरिच्छेसंस्थितेऽपि त

वसिष्ठउवाच ॥ अपर्यंतस्यकालस्यकियानंशःशरच्छतम् ॥ तावन्मात्रमहायुर्यःकिमास्थांसो नुधावति ॥१॥ अंतरास्थांपरित्यज्यभावश्रीर्भावनामयीम् ॥ योऽसिसोऽसिजगत्यस्मिन्लीलयाविहरानघ ॥२॥ निरिच्छेसंस्थितेरत्नेयथालोकःप्रवर्तते ॥ सत्तामात्रेणदेवेतुतथैवायंजगद्गणः ॥ ॥ ३ ॥ अतआत्मनिकर्तृत्वमकर्तृत्वंचसंस्थितम् ॥ निरिच्छत्वादकर्तासौकर्तासंनिधिमात्रतः ॥ ॥ ४ ॥ तेद्वेआत्मनिविद्येतेकर्तृताकर्तृतेऽनघ ॥ यत्रैवतेचमत्कारस्तामाश्रित्यस्थिरोभव ॥५॥ सर्वत्राहमकर्तेतिदृढभावनयानया ॥ प्रवाहपतितंकर्मकुर्वन्नपिनलिप्यते ॥ ६ ॥ यातिनीरसतांजंतुरप्रवृत्तेःस्वचेतसः ॥ तस्मान्नित्यमकर्ताहमितिभावनयेद्धया ॥ परमामृतनाम्नीसासमतैवावशिष्यते ॥७॥ अथसर्वंकरोमीतिमहाकर्तृतयातया ॥ यदीच्छसिस्थितिंरामतत्तामप्युत्तमांविदुः॥८॥

[illegible]धिसत्तामात्रेणजगद्गणोऽयंप्रवर्तते ॥ ३ ॥ ४ ॥ तेद्वेइति ॥ तेयत्रैवचमत्कारोऽभिरतिः तांकर्तृतामकर्तृतांवाआश्रित्यस्थिरोभव [illegible]६ ॥ यातीति सार्धश्लोकंवाक्यम् । स्वचेतसोऽप्रवृत्तेर्हेतोर्जंतुर्नीरसतां रसोविषयेष्वौत्सुक्यंतद्रहितत्वंयाति । तस्मात्कारणा [illegible]न्नित्यसिद्धयाभावनयासापरमामृत[illegible]समतैवावशिष्यते ॥ ७ ॥ अथेति ॥ तत्तर्हितामपिमहाकर्तृतामहंकृतिमपि ॥ ८ ॥

यत्रयस्यांमहाकर्तृतायांइमंसमग्रंजागतंभ्रमंअहमेवकरोमीत्यभिमानस्तत्ररागद्वेषादयः कुतःअन्यस्यकर्तुरसंभवात् ॥ ९ ॥
मेशरीरंअन्येनमातापित्रादिनालालितं अन्येनपुत्रादिनादग्धमितियत् सजन्मवृद्धिक्षयादिरूपः अस्मदारंभएवअस्मत्कर्मविपाक
अतःकारणात् खेदस्योल्लासस्यचकः क्रमः कोऽवकाशः ॥ १० ॥ मदिति ॥ ममैवसुखासुखयोर्विस्तारेप्रपंचरूपे जगज्जालस्यक्षयोदये
अहमेवकर्तेत्यंतर्मत्वाखेदोल्लासयोःकःक्रमः ॥ ११ ॥ खेदेति ॥ खेदोल्लासविलासेषु स्वात्मनोयाकर्तृतातयाएकयासर्वत्राखंडितयासत्या

अहंयत्रकरोमीमंसमग्रंजागतंभ्रमम् ॥ रागद्वेषक्रमस्तत्रकुतोऽन्यस्याप्यसंभवात् ॥ ९ ॥ यदन्ये
नशरीरंमेदग्धमन्येनलालितत् ॥ सोऽस्मदारंभएवातःकःखेदोल्लासयोःक्रमः ॥ १० ॥ मत्सु
खासुखविस्तारेजगज्जालक्षयोदये ॥ अहंकर्तेतिमत्वांतःकःखेदोल्लासयोःक्रमः ॥ ११ ॥ खे
दोल्लासविलासेषुस्वात्मकर्तृतयैकया ॥ स्वसंकल्पेलयंयातेसमतैवावशिष्यते ॥ १२ ॥ समता
सर्वभावेषुयासौसत्यपरास्थितिः ॥ तस्यामवस्थितंचित्तंनभूयोजन्मभाग्भवेत् ॥ १३ ॥ अथ
वासर्वकर्तृत्वमकर्तृत्वंचराघव ॥ सर्वंत्यक्त्वामनःपीत्वायोऽसिसोऽसिस्थिरोभव ॥ १४ ॥ अयं
सोऽहमयंनाहंकरोमीदमिदंतुन ॥ इतिभावानुसंधानमयीदृष्टिर्नतुष्टये ॥ १५ ॥

स्वस्यसंकल्पएवंकर्तव्यमित्यादिरूपेलयंयातेसति समतैवउपेक्षाबुद्धिरेवावशिष्यते ॥ १२ ॥ समतेति ॥ सर्वभावेषुयासमता असौसत्यप
राब्रह्मपरास्थितिः तस्यांसमतायामवस्थितंचित्तंभूयोनजन्मभाग्भवेत् ॥ १३ ॥ १४ ॥ अयमिति ॥ अयंसदेवदत्तोऽहं अयंयज्ञदत्तस्त्वहंन ।
इदमेवपरिमितंकार्यंकरोमि इदंतुयज्ञदत्तादिकर्तृकंकार्यंनकरोमि इतिभेदेभावानुसंधानमयीदृष्टिस्तुष्टयेब्रह्मानंदायनकल्पतइत्यर्थः ॥ १५ ॥

सेति ॥ कालसूत्रंमहावीचिरसिपत्रमितिचनरकविशेषाः ॥ १६ ॥ सेति ॥ सादेहात्मभावनाभव्येनमुमुक्षुणा पुक्कसीचंडाली ॥ १७ ॥
तयेति सार्धश्लोकोवाक्यम् । पटललेखयापटलंदृष्टिप्रतिबंधकोनेत्ररोगः ॥ १८ ॥ कर्तेति ॥ नाहंकर्तानापिपरिच्छिन्नइत्येकाभावना स
र्वकर्तासर्वात्मकश्चाहमितिद्वितीया एवंकर्तृत्वाद्युपलक्षितः कश्चिदपिनभवामि किंतर्हि सर्वविकल्पातीतः कोऽप्येवास्मीतितृतीया । त
त्रान्यतमामाश्रित्यत्वंसर्वोत्तमेस्वपदेतिष्ठ । यत्रचपदविदोज्ञानिनःसाधवःस्थिताइति ॥ १९ ॥ बंधइति ॥ मोक्षार्थित्वमपित्यजेति । त

साकालसूत्रपदवीसामहावीचिवागुरा ॥ सासिपत्रवनश्रेणीयादेहेऽहमितिस्थितिः ॥ १६ ॥ सा
त्याज्यासर्वयत्नेनसर्वनाशेऽप्युपस्थिते ॥ स्प्रष्टव्यासानभव्येनश्वमांसेनेवपुक्कसी ॥१७॥ तयासु
दूरोज्झितयादृष्टौपटललेखया ॥ उदेतिपरमादृष्टिर्ज्योत्स्नेवविगतांबुदा ॥ यदाभ्युदितयारामती
र्यतेऽयंभवार्णवः ॥१८॥ कर्तानास्मिनचायमस्मिसइतिज्ञात्वैवमंतःस्फुटंकर्तैवास्मिसमग्रमस्मि
तदितिज्ञात्वाथवानिश्चितम् ॥ कोऽप्येवास्मिनकश्चिदेवमितिवानिर्णीयसर्वोत्तमेतिष्ठत्वंस्वपदे
स्थिताःपदविदोयत्रोत्तमाःसाधवः ॥ १९ ॥ वसिष्ठउवाच ॥ बंधोहिवासनाबंधोमोक्षःस्याद्वा
सनाक्षयः ॥ वासनांत्वंपरित्यज्यमोक्षार्थित्वमपित्यज ॥ २० ॥ मानसीर्वासनाः पूर्वंत्यक्त्वा
विषयवासिताः ॥ मैत्र्यादिभावनानाम्नीर्गृहाणामलवासनाः ॥ २१ ॥

पिवासनाविशेषत्वात् ॥ २० ॥ मानसीरिति ॥ विषयवासितास्तन्मयीकृताः मानसीर्वासनाःपूर्वंत्यक्त्वा मैत्र्यादिनाम्नीरमलवासना
तथासतिचित्तप्रसादोभवति । यथाहभगवान्पतंजलिः । मैत्रीकरुणामुदितोऽपेक्षाणांसुखदुःखपुण्यापुण्यविषयाणांभावनातश्चित्त
ति ॥ २१ ॥

१ ताभिर्मैत्र्यादिभिर्व्यवहरन्नपि अंतस्ताअपिपरित्यज्य शांततमस्नेहःनिवृत्तसर्वेच्छःसर्वाचिन्मात्रवासनोभव ॥२२॥ तामपीति ॥ ...समन्वितांतामपिचिन्मात्रवासनामपिपरित्यज्य शेषेसर्ववासनाविनिर्मुक्तेचिद्रूपे स्थिरसमाधानोभूत्वायेनयत्नविशेषेणत्यजसित ...त्यज ॥ २३ ॥ चिदिति श्लोकद्वयंवाक्यम् । चिदेषामनएतदित्यादिरूपंचिदादिविकल्पंतद्विषयांवासनांवासितारंवासनाहेतुंचप्राण स्पंदनपूर्वकं प्राणस्पंदनंचसमूलमखिलंत्यक्त्वाव्योमवत्सौम्यःप्रशांतधीश्चसन्त्वं योभवसि यादृशोभवसि भवान्पूज्यस्त्वंतत्त्वतःसोऽसिता

ताअप्यंतःपरित्यज्यताभिर्व्यवहरन्नपि ॥ अंतःशांततमस्नेहोभवचिन्मात्रवासनः ॥ २२ ॥
तामप्यथपरित्यज्यमनोबुद्धिसमन्विताम् ॥ शेषेस्थिरसमाधानोयेनत्यजसितंत्यज ॥ २३ ॥
चिन्मनःकलनाकारप्रकाशतिमिरादिकम् ॥ वासनांवासितारंचप्राणस्पंदनपूर्वकम् ॥ २४ ॥ स
मूलमखिलंत्यक्त्वाव्योमसौम्यःप्रशांतधीः ॥ यस्त्वंभवसिसद्बुद्धेसभवानस्तुतत्त्वतः ॥२५॥ हृद
यात्संपरित्यज्यसर्वमेवमहामते ॥ यस्तिष्ठतिगतव्यग्रःसमुक्तःपरमेश्वरः ॥ २६ ॥ समाधिमथ
कर्माणिमाकरोतुकरोतुवा ॥ हृदयेनास्तसर्वास्थोमुक्तएवोत्तमाशयः ॥ २७ ॥ नैष्कर्म्येणनतस्या
र्थोनतस्यार्थोऽस्तिकर्मभिः ॥ नसमाधिजपाभ्यांवायस्यनिर्वासनंमनः ॥ २८ ॥

दृशोसीत्यर्थः । तत्रचित्स्वरूपचैतन्यं मनःअंतःकरणं कलनाअविद्या आकारःप्रपंचः प्रकाशस्तेजः तिमिरंतमः आदिशब्दाद्घटादयः ॥२४॥ ॥ २५ ॥ २६ ॥ समाधिमिति ॥ समाधिंमाकरोतुकरोतुवा अथकर्माणिचमाकरोतुकरोतुवा यःपरंहृदयेनअस्तसर्वास्थःपरित्यक्तसर्वदृश्या दरः सउत्तमाशयोमुक्तएव ॥ २७ ॥ नैष्कर्म्येणेति ॥ यस्यमनोनिर्वासनंतस्यनैष्कर्म्यादिभिःनकिंचित्प्रयोजनमित्यर्थः । नैष्कर्म्यंकाम्य कर्मपरित्यागः ॥ २८ ॥

विचारितमिति ॥ शास्त्रमलंविचारितं मिथएकांतेउद्ग्राहितंस्वबुद्ध्याउत्प्रेक्षितंच संत्यक्तवासनान्मौनात्तूष्णींभावाद्दतेउत्तमंपरंवस्तुनास्ति ॥ २९ ॥ ३० ॥ यइति ॥ आत्मार्थं आत्मनोबंधमोक्षार्थम् ॥ ३१ ॥ सर्वत्रेति ॥ प्रपंचःसर्वत्रभूतपंचात्मकएव तानिचभूतानिनश्वराणि जडानिचअतोधीरस्यविवेकिनोधीःक्वरातिंविश्रांतिमेतु आत्मस्वरूपएवरंतुमर्हसीत्यर्थः ॥ ३२ ॥ युक्त्येति ॥ युक्त्यापरिपूर्णब्रह्म

विचारितमलंशास्त्रंचिरमुद्ग्राहितंमिथः ॥ संत्यक्तवासनान्मौनादृतेनास्त्युत्तमंपरम् ॥ २९ ॥
दृष्टंद्रष्टव्यमखिलंभ्रांत्वाभ्रांत्वादिशोदश ॥ जनाःकतिपयाएवयथावस्त्ववलोकिनः ॥ ३० ॥
येकेचनसमारंभायेजनस्यक्रियाक्रमाः ॥ तेसर्वेदेहमात्रार्थाआत्मार्थंतुनकिंचन ॥ ३१ ॥ सर्वत्र
पंचभूतानिषष्ठंकिंचिन्नविद्यते ॥ पातालेभूतलेस्वर्गेरतिमेतुक्कधीरधीः ॥ ३२ ॥ युक्त्यावैचरतस्त
स्यसंसारोगोष्पदाकृतिः ॥ दूरसंत्यक्तयुक्तेस्तुमहावर्ताणवोपमः ॥ ३३ ॥ नकेचनजगद्भावा
स्तत्त्वज्ञंरंजयंत्यमी ॥ नागरंनागरीकांतंकुग्रामललनाइव ॥ ३४ ॥ स्फारब्रह्मामलांभोधेःफेनाः
सर्वेकुलाचलाः ॥ चिदादित्यमहातेजोमृगतृष्णाजगच्छ्रियः ॥ ३५ ॥ अत्रैववस्तुन्युदिताःशृणु
राघवपूर्वजाः ॥ कचेनगाथायागीताबार्हस्पत्येनपावनीः ॥ ३६ ॥ कचःकदाचिदुत्थायसमाधेः
प्रीतमानसः ॥ एकांतेसमुवाचेदमेकोगद्गदयागिरा ॥ ३७ ॥ किंकरोमिक्कगच्छामिकिंगृह्णामि
त्यजामिकिम् ॥ आत्मनापूरितंविश्वंमहाकल्पांबुनायथा ॥ ३८ ॥

णमहायोगेन ॥ ३३ ॥ ३४ ॥ स्फारेति ॥ जगच्छ्रियःचिदादित्यस्ययन्महत्तेजआतपः तत्रस्फुरंत्योमृग
तिचिद्विलासमात्रकल्पितानीत्यर्थः ॥ ३५ ॥ अत्रैवेति ॥ बार्हस्पत्येनबृहस्पतेरपत्येनेति ॥ ३६ ॥

